रजत जयन्ती महोत्सव के उपलक्ष्य पर प्रकाशित

## शाङ्खायनशाखीया

# ऋग्वेदसंहिता

## (पदपाठ-संवलिता)

## तृतीयो भागः

(अष्टकौ पञ्चम-षष्ठौ)



महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानम् उज्जयिनी

(मानव संसाधन विकास मन्त्रालय भारत सरकार)

ओ३म्

# शाङ्खायनशाखीया

# ऋग्वेदसंहिता

## (पदपाठ-संवलिता)

## तृतीयो भागः

### (अष्टकौ पञ्चम-षष्ठौ)


प्रधानसम्पादकः

प्रो० रूप किशोरः शास्त्री

सचिवः

सम्पादकः

अमलधारीसिंहगौतमः

संयुक्त-सम्पादकः

डॉ. देवानन्द शुक्ल



महर्षिसान्दीपनिराष्ट्रियवेदविद्याप्रतिष्ठानम्, उज्जयिनी

(मानवसंसाधनविकासमन्त्रालयभारतसर्वकारस्याधीनम्)

विक्रम संवत् – २०६८ ई०सन् - 2013

# रजत-जयन्ती-वर्ष (१९८७-२०१२): प्रकाशनम्

**संरक्षकाः**
श्रीमान् राजू पल्लमः, अध्यक्षः म.सा.रा.वे.वि.प्र.
एवं माननीय मन्त्री, मानव संसाधन विकास मन्त्रालयः
प्रो० सन्निधानं सुदर्शन शर्मा,
उपाध्यक्षः, म.सा.रा.वे.वि.प्र.
आचार्यः श्रीनिवासरथः,
पूर्व उपाध्यक्षः, म.सा.रा.वे.वि.प्र.

**परामर्शदातृसमितिः**
डॉ. गिरिधारीशर्मा, वैदिको हृदयरोग-चिकित्सकः
पं. हर्षदलालनागरः, शाङ्खायनशाखा-वैदिकः
पं. इन्द्रशङ्करझा, शाङ्खायनशाखा-वैदिकः



**प्रधानसम्पादकः**
प्रो. रूप किशोरः शास्त्री, सचिवः, म.सा.रा.वे.वि.प्र.

**संयुक्त-सम्पादकः**
डॉ. देवानन्द शुक्ल, कार्यक्रमाधिकारी

**सम्पादकः**
अमलधारीसिंहगौतमः, अतिथि-प्राध्यापकः,
धर्मागम-विभागः, काशी हिन्दू विश्वविद्यालयः, वाराणसी
पूर्वप्राध्यापकः-संस्कृत-विभागः, जोधपुर विश्वविद्यालयः, जोधपुर
पूर्व प्राचार्य, बैसवारा पीजी कालेज लालगंज, रायबरेली

**प्रबन्धसम्पादकौ**
आचार्य वी.एस. विजयराघवन्, निदेशक
डॉ. अनूपकुमारमिश्रः

**अक्षरसंयोजिका**
श्रीमती मिताली रत्नपारखी



प्रथमं संस्करणम् २०१३
प्रतियाँ - ५००
ISBN – 978-81-923629-8-4
मूल्य - ५००



**प्रकाशकः**
महर्षि सान्दीपनि राष्ट्रिय वेद विद्या प्रतिष्ठानम्,
(मानवसंसाधनविकासमन्त्रालयभारतसर्वकारस्याधीनम्)
वेदविद्या मार्ग, चिन्तामन गणेश, पो. जवासिया, उज्जैन ४५६००६ (म.प्र.)
Phone 0734-2502266S 2502254S 2502255 Fax- (0734)2502253
Web-msrvvp.nic.in, Email- msrvvpujn@gmail.com




# THE ṚGVEDA SAṀHITĀ

of

## Śāṁkhāyana- Śākhā

(accompanied with Pada-Pāṭha)

## THIRD PART

(Aṣṭakas 5th and 6th)

GENERAL EDITOR
**Prof. Roop Kishor Shastri**
Secretary

EDITOR
**Amal Dhari Singh Gautam**

JOINT EDITOR
**Dr. Devanand Shukla**

MAHARSHI SANDIAPNI RASHTRIYA VEDA VIDYA PRATISHTHAN, UJJAIN
(Under the Ministry of HRD, Govt. of India)

## Silver Jubilee Year (1987 - 2012) : Publication

**Patrons**
Hon'ble Pallam Raju, Chairman, MSRVVP & Minister, Human Resource Development, Govt. of India
Professor Sannidhan Sudarshan Sharma, Vice-President, MSRVVP
Professor Sriniwas Rath, Ex-Vice-President, MSRVVP

**Advisory Committee**
Dr. Giridhari Sharma, Vedic & Heart Surgeon
Pt. Harshadlal Nagar, Śāmkhāyana- Śākhā Vedic
Pt. Indrashankar Jha, Śāmkhāyana- Śākhā Vedic

**General Editor**
Prof. Roop Kishor Shastri

**Editor**
Amal Dhari Singh Gautam
Guest – Professor, Department of Dharmāgama, B. H. U., Varanasi
Ex-Lecturer Department of Sanskrit, University of Jodhpur, Jodhpur
Ex-Principal Baiswara PG College Lalganj, Raibareli

**Joint Editor**
Dr. Devanand Shukla, Programme Officer

**Managing Editors**
Achary V.S.Vijayraghavan, Director
Dr. Anoop Kumar Mishra

**Composed By** Mrs. Mitali Ratnaparkhi

FIRST EDITION - 2013, Copies - 500
ISBN – 978-81-923629-8-4
Price: 500



**Publisher**
**Maharshi Sandipani Rashtriya Veda Vidya Pratishthan,**
(Under the Ministry of HRD, Govt. of India)
Vedvidhya Marg, Chintaman Ganesh, Po. Jawashiya, UJJAIN 456006 (M.P.)
**Phone 0734-2502266S 2502254S 2502255 Fax- (0734)2502253**
**Web-msrvvp.nic.in, Email- msrvvpujn@gmail.com**

# विषयानुक्रमणी

॥ ओ३म् ॥

नमो॒ ब्रह्म॑णे॒ नमो॑ऽस्त्व॒ग्नये॒

नम॑ः पृथि॒व्यै नम॒ ओष॑धीभ्यः।

नमो॑ वा॒चे नमो॑ वा॒चस्पत॑ये॒

नमो॒ विष्ण॑वे मह॒ते क॑रोमि ॥

ऋ. ८.८.६३

# ऋग्वेदीया

# शाङ्खायनसंहिता

## पञ्चमोऽष्टकः

षष्ठमण्डले सूक्तानि ६२ - ७५

सप्तममण्डले सूक्तानि १ - १०४

अष्टममण्डले सूक्तानि १ - ११

# ॥ पञ्चमाष्टके प्रथमोऽध्यायः॥

**अथ प्रथमोऽध्यायः॥१॥ वर्गाः १-२७ ]** **[ षष्ठमण्डले सूक्तानि ६२-७५;**

**सप्तममण्डले सूक्ताम् १**

## ( ६२ ) [ अथ षष्ठोऽनुवाकः ॥६॥ सूक्तानि ६२-७५

**मन्त्र-संख्याः 11 । ऋषिः = बार्हस्पत्यो भरद्वाजः । देवता = अश्विनौ । छन्दः = त्रिष्टुप् ।**

**स्तुषे नरा दिवोऽअस्य प्रसन्ताश्विना हुवे जरमाणोऽअर्कैः ।**
**या सद्य ऽउस्रा व्युषि ज्मो ऽअन्तान्युयूषतः पर्युरू वरांसि ॥१॥**

स्तुषे । नरा । दिवः । अस्य । प्र०सन्ता । अश्विना । हुवे ।
जरमाणः । अर्कैः ॥ या । सद्यः । उस्रा । वि०उषि ।
ज्मः । अन्तान् । युयूषतः । परि । उरु । वरांसि ॥१॥

**ता यज्ञमा शुचिभिश्चक्रमाणा रथस्य भानुं रुरुचू रजोभिः ।**
**पुरू वरांस्यमिता मिमानापो धन्वान्यति याथोऽ अज्रान् ॥२॥**

ता । यज्ञम् । आ । शुचि०भिः । चक्रमाणा । रथस्य ।
भानुम् । रुरुचुः । रजः२भिः ॥ पुरु । वरांसि । अमिता ।
मिमाना । अपः । धन्वानि । अति । याथः । अज्रान् ॥२॥

**ता ह त्यद्वर्त्तिर्यदरध्रमुग्रेत्था धियं ऽऊहथुः शश्वदश्वैः ।**
**मनोजवेभिरिषिरैः शयध्यै परि व्यथिर्दाशुषो मर्त्यस्य ॥३॥**

ता । ह । त्यत् । वर्त्तिः । यत् । अरध्रम् । उग्रा । इत्था ।
धियः । ऊहथुः । शश्वत् । अश्वैः ॥ मनः२जवेभिः ।
इषिरैः । शयध्यै । परि । व्यथिः । दाशुषः । मर्त्यस्य ॥३॥

**ता नव्यसो जरमाणस्य मन्मोप भूषतो युयुजानसप्ती ।**
**शुभं पृक्षमिषमूर्जं वहन्ता होता यक्षत्प्रत्नो ऽअध्रुग्युवाना ॥४॥**

ता । नव्यसः । जरमाणस्य । मन्म । उप । भूषतः । युयुजानसप्ती
इति युयुजान०सप्ती ॥ शुभम् । पृक्षम् । इषम् । ऊर्जम् ।
वहन्ता । होता । यक्षत् । प्रत्नः । अध्रुक् । युवाना ॥४॥

**ता वल्गू दस्रा पुरुशाकतमा प्रत्ना नव्यसा वचसा विवासे ।**
**या शंसते स्तुवते शंभविष्ठा बभूवतुर्गृणते चित्रराती ॥५॥ (१)**
ता । वल्गू इति । दस्रा । पुरुशाक०तमा । प्रत्ना । नव्यसा ।
वचसा । आ । विवासे ॥ या । शंसते । स्तुवते । शम्०भविष्ठा ।
बभूवतुः । गृणते । चित्रराती इति चित्र०राती ॥५॥

**ता भुज्युं विभिरद्भ्यः समुद्रात्तुग्रस्य सूनुमूहथू रजोभिः ।**
**अरेणुभिर्योजनेभिर्भुजन्ता पतत्रिभिरर्णसो निरुपस्थात् ॥६॥**
ता । भुज्युम् । वि०भिः । अत्०भ्यः । समुद्रात् । तुग्रस्य ।
सूनुम् । ऊहथुः । रजः२भिः ॥ अरेणु०भिः । योजनेभिः ।
भुजन्ता । पतत्रि०भिः । अर्णसः । निः । उप०स्थात् ॥६॥

**वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः ।**
**दशस्यन्ता शयवे पिप्यथुर्गामिति च्यवाना सुमतिं भुरण्यू ॥७॥**
वि । जयुषा । रथ्या । यातम् । अद्रिम् । श्रुतम् । हवम् ।
वृषणा । वध्रि०मत्याः ॥ दशस्यन्ता । शयवे । पिप्यथुः ।
गाम् । इति । च्यवाना । सु०मतिम् । भुरण्यू इति ॥७॥

**यद्रोदसी प्रदिवो ऽअस्ति भूमा हेळो देवानामुत मर्त्यत्रा ।**
**तदादित्या वसवो रुद्रियासो रक्षोयुजे तपुरघं दधात ॥८॥**
यत् । रोदसी इति । प्र०दिवः । अस्ति । भूमा । हेळः ।
देवानाम् । उत । मर्त्य०त्रा ॥ तत् । आदित्याः । वसवः ।
रुद्रियासः । रक्षः२युजे । तपुः । अघम् । दधात ॥८॥

यऽईं राजानावृतुथा विदधद्रजसो मित्रो वरुणश्चिकेतत् ।
गम्भीराय रक्षसे हेतिमस्य द्रोघाय चिद्वचसऽआनवाय ॥९॥
यः । ईम् । राजानौ । ऋतु०था । वि०दधत् । रजसः ।
मित्रः । वरुणः । चिकेतत् ॥ गम्भीराय । रक्षसे ।
हेतिम् । अस्य । द्रोघाय । चित् । वचसे । आनवाय ॥९॥

अन्तरैश्चक्रैस्तनयाय वर्त्तिर्द्युमता यातं नृवता रथेन ।
सनुत्येन त्यजसा मर्त्त्यस्य वनुष्यतामपि शीर्षा ववृक्तम् ॥१०॥
अन्तरैः । चक्रैः । तनयाय । वर्त्तिः । द्यु०मता । आ ।
यातम् । नृ०वता । रथेन ॥ सनुत्येन । त्यजसा ।
मर्त्त्यस्य । वनुष्यताम् । अपि । शीर्षा । ववृक्तम् ॥१०॥

आ परमाभिरुत मध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक् ।
दृळ्हस्य चिद्गोमतो वि व्रजस्य दुरो वर्त्त गृणते चित्रराती॥११॥( २ ) [ मन्त्र-संख्या ११ ]
आ । परमाभिः । उत । मध्यमाभिः । नियुत्०भिः । यातम् ।
अवमाभिः । अर्वाक् ॥ दृळ्हस्य । चित् । गो०मतः । वि ।
व्रजस्य । दुरः । वर्त्तम् । गृणते । चित्रराती इति चित्र०राती ॥११॥

# ( ६३ )

११ बार्हस्पत्यो भरद्वाजः । अश्विनौ । त्रिष्टुप्, १ विराट्, ११ एकपदा त्रिष्टुप् ।

क्वऽ त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान् ।
आ योऽअर्वाङ्नासत्या ववर्त्त प्रेष्ठा ह्यसथोऽअस्य मन्मन् ॥१॥
क्व । त्या । वल्गू इति । पुरु०हूता । अद्य । दूतः । न ।
स्तोमः । अविदत् । नमस्वान् ॥ आ । यः । अर्वाक् ।
नासत्या । ववर्त्त । प्रेष्ठा । हि । असथः । अस्य । मन्मन् ॥१॥

अरं मे गन्तं हवनायास्मै गृणाना यथा पिबाथोऽअन्धः ।
परि ह त्यद्वर्त्तिर्याथो रिषो न यत्परो नान्तरस्तुतुर्यात् ॥२॥
अरम् । मे । गन्तम् । हवनाय । अस्मै । गृणाना । यथा ।
पिबाथः । अन्धः ॥ परि । ह । त्यत् । वर्त्तिः । याथः ।
रिषः । न । यत् । परः । न । अन्तरः । तुतुर्यात् ॥२॥

अकारि वामन्धसो वरीमन्नस्तारि बर्हिः सुप्रायणतमम् ।
उत्तानहस्तो युवयुर्ववन्दा वां नक्षन्तो ऽअद्रय ऽआञ्जन् ॥३॥
अकारि । वाम् । अन्धसः । वरीमन् । अस्तारि ।
बर्हिः । सुप्र०अयनतमम् ॥ उत्तान०हस्तः । युव०युः ।
ववन्द । आ । वाम् । नक्षन्तः । अद्रयः । आञ्जन् ॥३॥

ऊर्ध्वो वामग्निरध्वरेष्वस्थात्प्र रातिरेति जूर्णिनी घृताची ।
प्र होता गूर्त्तमना उराणोऽयुक्त यो नासत्या हवीमन् ॥४॥
ऊर्ध्वः । वाम् । अग्निः । अध्वरेषु । अस्थात् । प्र ।
रातिः । एति । जूर्णिनी । घृताची ॥ प्र । होता ।
गूर्त्त०मनाः । उराणः । अयुक्त । यः । नासत्या । हवीमन् ॥४॥

अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुभुजा शतोतिम् ।
प्र मायाभिर्मायिना भूतमत्र नरा नृतू जनिमन्यज्ञियानाम् ॥५॥ ( ३ )
अधि । श्रिये । दुहिता । सूर्यस्य । रथम् । तस्थौ ।
पुरु०भुजा । शत०ऊतिम् ॥ प्र । मायाभिः । मायिना ।
भूतम् । अत्र । नरा । नृतू इति । जनिमन् । यज्ञियानाम् ॥३॥

युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः।
प्र वां वयो वपुषेऽनु पप्तन्नक्षद्वाणी सुष्टुता धिष्ण्या वाम् ॥६॥

युवम् । श्रीभिः । दर्शताभिः । आभिः । शुभे । पुष्टिम् ।
ऊहथुः । सूर्यायाः ॥ प्र । वाम् । वयः । वपुषे । अनु ।
पप्तन् । नक्षत् । वाणी । सुऽस्तुता । धिष्ण्या । वाम् ॥६॥

**आ वां वयोऽश्वासो वहिष्ठा ऽअभि प्रयो नासत्या वहन्तु ।**
**प्र वां रथो मनोजवा ऽअसर्जीषः पृक्ष ऽइषिधो ऽअनु पूर्वीः ॥७॥**
आ । वाम् । वयः । अश्वासः । वहिष्ठाः । अभि ।
प्रयः । नासत्या । वहन्तु ॥ प्र । वाम् । रथः । मनःऽजवाः ।
असर्जि । इषः । पृक्षः । इषिधः । अनु । पूर्वीः ॥७॥

**पुरु हि वां पुरुभुजा देष्णं धेनुं न ऽइषं पिन्वतमसक्राम् ।**
**स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ॥८॥**
पुरु । हि । वाम् । पुरुऽभुजा । देष्णम् । धेनुम् । नः । इषम् ।
पिन्वतम् । असक्राम् ॥ स्तुतः । च । वाम् । माध्वी इति ।
सुऽस्तुतिः । च । रसाः । च । ये । वाम् । अनु । रातिम् । अग्मन् ॥८॥

**उत मे ऽऋज्रे पुरयस्य रघ्वी सुमीळ्हे शतं पेरुके च पक्वा ।**
**शाण्डो दाद्धिरणिनः स्मद्दिष्टीन्दश वशासो ऽअभिषाच ऽऋष्वान् ॥९॥**
उत । मे । ऋज्रे इति । पुरयस्य । रघ्वी इति । सुऽमीळ्हे ।
शतम् । पेरुके । च । पक्वा ॥ शाण्डः । दात् । हिरणिनः ।
स्मत्ऽदिष्टीन् । दश । वशासः । अभिऽसाचः । ऋष्वान् ॥९॥

**सं वां शता नासत्या सहस्राश्वानां पुरुपन्था गिरे दात् ।**
**भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥१०॥**
सम् । वाम् । शता । नासत्या । सहस्रा । अश्वानाम् ।
पुरुऽपन्थाः । गिरे । दात् ॥ भरत्ऽवाजाय । वीर । नु ।
गिरे । दात् । हता । रक्षांसि । पुरुऽदंससा । स्युरिति स्युः ॥१०॥

आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम् ॥११॥ (४) [२२]

आ । वाम् । सुम्ने । वरिमन् । सूरि०भिः । स्याम् ॥११॥

# (६४)

६ बार्हस्पत्यो भरद्वाजः । उषाः । त्रिष्टुप् ।

उदु श्रियऽ उषसो रोचमाना ऽअस्थुरपां नोर्मयो रुशन्तः ।

कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥१॥

उत् । ऊँ इति । श्रिये । उषसः । रोचमानाः । अस्थुः । अपाम् ।

न । ऊर्मयः । रुशन्तः ॥ कृणोति । विश्वा । सु०पथा ।

सु०गानि । अभूत् । ऊँ इति । वस्वी । दक्षिणा । मघोनी ॥१॥

भद्रा ददृक्षऽउर्विया वि भास्युत्ते शोचिर्भानवो द्यामपप्तन् ।

आविर्वक्षः कृणुषे शुम्भमानोषो देवि रोचमाना महोभिः ॥२॥

भद्रा । ददृक्षे । उर्विया । वि । भासि । उत् । ते । शोचिः ।

भानवः । द्याम् । अपप्तन् ॥ आविः । वक्षः । कृणुषे ।

शुम्भमाना । उषः । देवि । रोचमाना । महः२भिः ॥२॥

वहन्ति सीमरुणासो रुशन्तो गावः सुभगामुर्विया प्रथानाम् ।

अपेजते शूरो ऽअस्तेव शत्रून्बाधते तमो ऽअजिरो न वोळ्हा ॥३॥

वहन्ति । सीम् । अरुणासः । रुशन्तः । गावः । सु०भगाम् ।

उर्विया । प्रथानाम् ॥ अप । ईजते । शूरः । अस्ताऽइव ।

शत्रून् । बाधते । तमः । अजिरः । न । वोळ्हा ॥३॥

सुगोत ते सुपथा पर्वतेष्ववाते ऽअपस्तरसि स्वभानो ।

सा न ऽआ वह पृथुयामन्नृष्वे रयिं दिवो दुहितरिषयध्यै ॥४॥

सु॰गा । उत । ते । सु॰पथा । पर्वतेषु । अवाते । अपः ।
तरसि । स्वभानो इति स्व॰भानो ॥ सा । नः । आ । वह ।
पृथु॰यामन् । ऋष्वे । रयिम् । दिवः । दुहितः । इषयध्यै ॥४॥

**सा वह योक्षभिरवातोषो वरं वहसि जोषमनु ।**
**त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना दर्शता भूः॥५॥**
सा । आ । वह । या । उक्ष॰भिः । अवाता । उषः ।
वरम् । वहसि । जोषम् । अनु ॥ त्वम् । दिवः । दुहितः ।
या । ह । देवी । पूर्व॰हूतौ । मंहना । दर्शता । भूः ॥५॥

**उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।**
**अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥६॥ (५)** [ २८ ]
उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च ।
ये । पितु॰भाजः । वि॰उष्टौ ॥ अमा । सते । वहसि ।
भूरि । वामम् । उषः । देवि । दाशुषे । मर्त्याय ॥

## ( ६५ )

६ बार्हस्पत्यो भरद्वाजः । उषाः । त्रिष्टुप् ।

**एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छन्ती मानुषीरजीगः ।**
**या भानुना रुशता राम्यास्वज्ञायि तिरस्तमसश्चिदक्तून् ॥१॥**
एषा । स्या । नः । दुहिता । दिवः२जाः । क्षितीः । उच्छन्ती ।
मानुषीः । अजीगरिति ॥ या । भानुना । रुशता । राम्यासु ।
अज्ञायि । तिरः । तमसः । चित् । अक्तून् ॥१॥

**वि तद्ययुररुणयुग्भिरश्वैश्चित्रं भान्त्युषसश्चन्द्ररथाः ।**
**अग्रं यज्ञस्य बृहतो नयन्तीर्वि ता बाधन्ते तम ऽऊर्म्यायाः ॥२॥**

वि । तत् । ययुः । अरुणयुक्ऽभिः । अश्वैः । चित्रम् ।
भान्ति । उषसः । चन्द्रऽरथाः ॥ अग्रम् । यज्ञस्य । बृहतः ।
नयन्तीः । वि । ताः । बाधन्ते । तमः । ऊर्म्यायाः ॥२॥

**श्रवो वाजमिषमूर्जं वहन्तीर्नि दाशुष ऽउषसो मर्त्याय ।**
**मघोनीर्वीरवत्पत्यमाना ऽअवो धात विधते रत्नमद्य ॥३॥**
श्रवः । वाजम् । इषम् । ऊर्जम् । वहन्तीः । नि ।
दाशुषे । उषसः । मर्त्याय ॥ मघोनीः । वीरऽवत् ।
पत्यमानाः । अवः । धात । विधते । रत्नम् । अद्य ॥३॥

**इदा हि वो विधते रत्नमस्तीदा वीराय दाशुष ऽउषासः ।**
**इदा विप्राय जरते यदुक्था नि ष्म मावते वहथा पुरा चित् ॥४॥**
इदा । हि । वः । विधते । रत्नम् । अस्ति । इदा ।
वीराय । दाशुषे । उषसः ॥ इदा । विप्राय । जरते । यत् ।
उक्था । नि । स्म । माऽवते । वहथ । पुरा । चित् ॥४॥

**इदा हि त ऽउषो ऽअद्रिसानो गोत्रा गवामङ्गिरसो गृणन्ति ।**
**व्यर्केण बिभिदुर्ब्रह्मणा च सत्या नृणामभवद्देवहूतिः ॥५॥**
इदा । हि । ते । उषः । अद्रिसानो इत्यद्रिऽसानो । गोत्रा ।
गवाम् । अङ्गिरसः । गृणन्ति ॥ वि । अर्केण । बिभिदुः ।
ब्रह्मणा । च । सत्या । नृणाम् । अभवत् । देवऽहूतिः ॥५॥

**उच्छा दिवो दुहितः प्रत्नवन्नो भरद्वाजवद्विधते मघोनि ।**
**सुवीरं रयिं गृणते रिरीह्युरुगायमधि धेहि श्रवो नः ॥६॥ (६)** [ ३४ ]
उच्छ । दिवः । दुहितरिति । प्रत्नऽवत् । नः । भरद्वाजऽवत् ।
विधते । मघोनि ॥ सुऽवीरम् । रयिम् । गृणते । रिरीहि ।
उरुऽगायम् । अधि । धेहि । श्रवः । नः ॥६॥

# ( ६६ )

११ बार्हस्पत्यो भरद्वाजः । मरुतः । त्रिष्टुप् ।

वपुर्नु तच्चिकितुषे चिदस्तु समानं नाम धेनु पत्यमानम् ।
मर्त्तेष्वन्यद्दोहसे पीपाय सकृच्छुक्रं दुदुहे पृश्निरूधः ॥१॥
वपुः । नु । तत् । चिकितुषे । चित् । अस्तु । समानम् ।
नाम । धेनु । पत्यमानम् ॥ मर्त्तेषु । अन्यत् । दोहसे ।
पीपाय । सकृत् । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥१॥

ये ऽअग्नयो न शोशुचन्निधाना द्विर्यत्त्रिर्मरुतो वावृधन्त ।
अरेणवो हिरण्ययास ऽएषां साकं नृम्णैः पौंस्येभिश्च भूवन् ॥२॥
ये । अग्नयः । न । शोशुचन् । इधानाः । द्विः । यत् ।
त्रिः । मरुतः । ववृधन्त ॥ अरेणवः । हिरण्ययासः ।
एषाम् । साकम् । नृम्णैः । पौंस्येभिः । च । भूवन् ॥२॥

रुद्रस्य ये मीळ्हुषः सन्ति पुत्रा याँश्चो नु दाधृविर्भरध्यै ।
विदे हि माता महो मही षा सेत्पृश्निः सुभ्वे३ गर्भमाधात् ॥३॥
रुद्रस्य । ये । मीळ्हुषः । सन्ति । पुत्राः । यान् । चो इति ।
नु । दाधृविः । भरध्यै ॥ विदे । हि । माता । महः । मही ।
सा । सा । इत् । पृश्निः । सु॰भ्वे । गर्भम् । आ । अधात् ॥३॥

न य ऽईषन्ते जनुषोऽया न्वऽन्तः सन्तोऽवद्यानि पुनानाः ।
निर्यद्दुह्रे शुचयोऽनु जोषमनु श्रिया तन्वमुक्षमाणाः ॥४॥
न । ये । ईषन्ते । जनुषः । अया । नु । अन्तरिति । सन्तः ।
अवद्यानि । पुनानाः ॥ निः । यत् । दुह्रे । शुचयः ।
अनु । जोषम् । अनु । श्रिया । तन्वम् । उक्षमाणाः ॥४॥

मक्षू न येषु दोहसे चिद्या ऽआ नाम धृष्णु मारुतं दधानाः ।
न ये स्तौना ऽअयासो मह्ना नू चित्सुदानुरव यासदुग्रान् ॥५॥ (७)
मक्षु । न । येषु । दोहसे । चित् । अयाः । आ । नाम ।
धृष्णु । मारुतम् । दधानाः ॥ न । ये । स्तौनाः । अयासः ।
मह्ना । नु । चित् । सु०दानुः । अव । यासत् । उग्रान् ॥५॥

तऽ इदुग्राः शवसा धृष्णुषेणा ऽउभे युजन्त रोदसी सुमेके ।
अध स्मैषु रोदसी स्वशोचिरामवत्सु तस्थौ न रोकः ॥६॥
ते । इत् । उग्राः । शवसा । धृष्णु०सेनाः । उभे इति । युजन्त ।
रोदसी इति । सुमेके इति सु०मेके । अध । स्म । एषु । रोदसी ।
स्व०शोचिः । आ । अमवत्०सु । तस्थौ । न । रोकः ॥६॥

अनेनो वो मरुतो यामो ऽअस्त्वनश्वश्चिद्यमजत्यरथीः ।
अनवसो ऽअनभीशू रजस्तूर्वि रोदसी पथ्या याति साधन् ॥७॥
अनेनः । वः । मरुतः । यामः । अस्तु । अनश्वः ।
चित् । यम् । अजति । अरथीः ॥ अनवसः । अनभीशुः ।
रजः२तूः । वि । रोदसी इति । पथ्याः । याति । साधन् ॥७॥

नास्य वर्त्ता न तरुता न्वस्ति मरुतो यमवथ वाजसातौ ।
तोके वा गोषु तनये यमप्सु स व्रजं दर्त्ता पार्ये ऽअध द्योः ॥८॥
न । अस्य । वर्त्ता । न । तरुता । नु । अस्ति । मरुतः ।
यम् । अवथ । वाज०सातौ ॥ तोके । वा । गोषु । तनये ।
यम् । अप्०सु । सः । व्रजम् । दर्त्ता । पार्ये । अध । द्योः ॥८॥

प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांसि सहसा सहन्ते रेजते ऽअग्ने पृथिवी मखेभ्यः ॥९॥

प्र । चित्रम् । अर्कम् । गृणते । तुराय॑ । मारु॑ताय ।
स्व॑ऽतवसे । भरध्वम् ॥ ये । सहां॑सि । सह॑सा ।
सह॑न्ते । रेज॑ते । अग्ने । पृथिवी । मखेभ्य॑ः ॥९॥

त्विषीमन्तो ऽअध्वरस्येव दिद्युत्तृषुच्यवसो जुह्वो३ नाग्नेः ।
अर्चत्रयो धुनयो न वीरा भ्राजज्जन्मानो मरुतो ऽअधृष्टाः ॥१०॥
त्विषि॑ऽमन्तः । अध्वरस्य॑ऽइव । दिद्युत् । तृषु॑ऽच्यवसः ।
जुह्वः । न । अग्नेः ॥ अर्चत्रयः । धुनयः । न ।
वीराः । भ्राजत्ऽजन्मानः । मरुतः । अधृष्टाः ॥१०॥

तं वृधन्तं मारुतं भ्राजदृष्टिं रुद्रस्य सूनुं हवसा विवासे ।
दिवः शर्द्धाय शुचयो मनीषा गिरयो नाप ऽउग्रा ऽअस्पृध्रन् ॥११॥ (८) [४५]
तम् । वृधन्त॑म् । मारुतम् । भ्राजत्ऽऋष्टिम् । रुद्रस्य॑ । सूनुम् ।
हवसा । आ । विवासे ॥ दिवः । शर्द्धा॑य । शुचयः ।
मनीषा । गिरयः । न । आपः । उग्राः । अस्पृध्रन् ॥११॥

## ( ६७ )

११ बार्हस्पत्यो भरद्वाजः । मित्रावरुणौ । त्रिष्टुप् ।

विश्वेषां वः सतां ज्येष्ठतमा गीर्भिर्मित्रावरुणा वावृधध्यै ।
सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ ऽअसमा बाहुभिः स्वैः ॥१॥
विश्वे॑षाम् । वः । सताम् । ज्येष्ठ॑ऽतमा । गीःऽभिः ।
मित्रावरुणा । ववृधध्यै ॥ सम् । या । रश्माऽइव । यमतुः ।
यमिष्ठा । द्वा । जना॑न् । असमा । बाहु॑ऽभिः । स्वैः ॥१॥

इयं मद्वां प्र स्तृणीते मनीषोप प्रिया नमसा बर्हिरच्छ ।
यन्तं नो मित्रावरुणावधृष्टं छर्दिर्यद्वां वरूथ्यं सुदानू ॥२॥

इयम् । मत् । वाम् । प्र । स्तृणीते । मनीषा । उप । प्रिया ।
नमसा । बर्हिः । अच्छ ॥ यन्तम् । नः । मित्रावरुणौ ।
अधृष्टम् । छर्दिः । यत् । वाम् । वरूथ्यम् । सुदानू इति सु०दानू ॥२॥

आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना ।
सं यावप्नःस्थो ऽअपसेव जनाञ्छ्रुधीयतश्चिद्यतथो महित्वा ॥३॥
आ । यातम् । मित्रावरुणा । सु०शस्ति । उप । प्रिया ।
नमसा । हूयमाना ॥ सम् । यौ । अप्नः॰स्थः । अपसाऽइव ।
जनान् । श्रुधि०यतः । चित् । यतथः । महि०त्वा ॥३॥

अश्वा न या वाजिना पूतबन्धू ऽऋता यद्गर्भमदितिर्भरध्यै ।
प्र या महि महान्ता जायमाना घोरा मर्ताय रिपवे नि दीधः ॥४॥
अश्वा । न । या । वाजिना । पूतबन्धू इति पूत०बन्धू । ऋता ।
यत् । गर्भम् । अदितिः । भरध्यै ॥ प्र । या । महि । महान्ता ।
जायमाना । घोरा । मर्ताय । रिपवे । नि । दीधरिति दीधः ॥४॥

विश्वे यद्वां मंहना मन्दमानाः क्षत्रं देवासो ऽअदधुः सजोषाः ।
परि यद्भूथो रोदसी चिदुर्वी सन्ति स्पशो ऽअदब्धासो ऽअमूराः ॥५॥ (९)
विश्वे । यत् । वाम् । मंहना । मन्दमानाः । क्षत्रम् । देवासः ।
अदधुः । स०जोषाः ॥ परि । यत् । भूथः । रोदसी इति ।
चित् । उर्वी इति । सन्ति । स्पशः । अदब्धासः । अमूराः ॥५॥

ता हि क्षत्रं धारयेथे ऽअनु द्यून्दृंहेथे सानुमुपमादिव द्योः ।
दृळ्हो नक्षत्र ऽउत विश्वदेवो भूमिमातान्द्यां धासिनायोः ॥६॥
ता । हि । क्षत्रम् । धारयेथे इति । अनु । द्यून् । दृंहेथे इति ।
सानुम् । उपमात्ऽइव । द्योः ॥ दृळ्हः । नक्षत्रः । उत ।
विश्व०देवः । भूमिम् । आ । अतान् । द्याम् । धासिना । आयोः ॥६॥

ता विग्रं धैथे जठरं पृणध्या ऽआ यत्सद्म सभृतयः पृणन्ति ।
न मृष्यन्ते युवतयोऽवाता वि यत्पयो विश्वजिन्वा भरन्ते ॥७॥
ता । विग्रम् । धैथे इति । जठरम् । पृणध्यै । आ । यत् ।
सद्म । स०भृतयः । पृणन्ति ॥ न । मृष्यन्ते । युवतयः ।
अवाताः । वि । यत् । पयः । विश्व०जिन्वा । भरन्ते ॥७॥

ता जिह्वया सदमेदं सुमेधाऽ आ यद्वां सत्यो ऽअरतिर्ऋते भूत् ।
तद्वां महित्वं घृतान्नावस्तु युवं दाशुषे वि चयिष्टमंहः ॥८॥
ता । जिह्वया । सदम् । आ । इदम् । सु०मेधा । आ । यत् ।
वाम् । सत्यः । अरतिः । ऋते । भूत् ॥ तत् । वाम् । महि०त्वम् ।
घृत०अन्नौ । अस्तु । युवम् । दाशुषे । वि । चयिष्टम् । अंहः ॥८॥

प्र यद्वां मित्रावरुणा स्पूर्धन्प्रिया धाम युवधिता मिनन्ति ।
न ये देवास ऽओहसा न मर्त्ता ऽअयज्ञसाचो ऽअप्यो न पुत्राः ॥९॥
प्र । यत् । वाम् । मित्रावरुणा । स्पूर्धन् । प्रिया । धाम ।
युव०धिता । मिनन्ति ॥ न । ये । देवासः । ओहसा ।
न । मर्त्ताः । अयज्ञ०साचः । अप्यः । न । पुत्राः ॥९॥

वि यद्वाचं कीस्तासो भरन्ते शंसन्ति के चिन्निविदो मनानाः ।
आद्वां ब्रवाम सत्यान्युक्था नकिर्देवेभिर्यतथो महित्वा ॥१०॥
वि । यत् । वाचम् । कीस्तासः । भरन्ते । शंसन्ति । के ।
चित् । नि०विदः । मनानाः ॥ आत् । वाम् । ब्रवाम ।
सत्यानि । उक्था । नकिः । देवेभिः । यतथः । महि०त्वा ॥१०॥

अवोरित्था वां छर्दिषो ऽअभिष्टौ युवोर्मित्रावरुणावस्कृधोयु ।
अनु यद्गावः स्फुरानृजिप्यं धृष्णुं यद्रणे वृषणं युनजन् ॥११॥ (१०) [५६]

अवोः । इत्था । वाम् । छर्दिषः । अभिष्टौ । युवोः ।
मित्रावरुणौ । अस्कृधोयु ॥ अनु । यत् । गावः । स्फुरान् ।
ऋजिप्यम् । धृष्णुम् । यत् । रणे । वृषणम् । युनजन् ॥११॥

## ( ६८ )

११ बार्हस्पत्यो भरद्वाजः । इन्द्रावरुणौ । त्रिष्टुप्, ९-१० जगती ।

श्रुष्टी वां यज्ञ ऽउद्यतः सजोषा मनुष्वद् वृक्तबर्हिषो यजध्यै ।
आ य ऽइन्द्रावरुणाविषे ऽअद्य महे सुम्नाय मह ऽआववर्त्तत् ॥१॥
श्रुष्टी । वाम् । यज्ञः । उत्०यतः । स०जोषाः । मनुष्वत् ।
वृक्त०बर्हिषः । यजध्यै ॥ आ । यः । इन्द्रावरुणौ ।
इषे । अद्य । महे । सुम्नाय । महे । आ०ववर्त्तत् ॥१॥

ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता हि भूतम् ।
मघोनां मंहिष्ठा तुविशुष्म ऽऋतेन वृत्रतुरा सर्वसेना ॥२॥
ता । हि । श्रेष्ठा । देव०ताता । तुजा । शूराणाम् ।
शविष्ठा । ता । हि । भूतम् ॥ मघोनाम् । मंहिष्ठा ।
तुवि०शुष्मा । ऋतेन । वृत्र०तुरा । सर्व०सेना ॥२॥

ता गृणीहि नमस्येभिः शूषैः सुम्नेभिरिन्द्रावरुणा चकाना ।
वज्रेणान्यः शवसा हन्ति वृत्रं सिषक्त्यन्यो वृजनेषु विप्रः ॥३॥
ता । गृणीहि । नमस्येभिः । शूषैः । सुम्नेभिः ।
इन्द्रावरुणा । चकाना ॥ वज्रेण । अन्यः । शवसा ।
हन्ति । वृत्रम् । सिसक्ति । अन्यः । वृजनेषु । विप्रः ॥३॥

ग्नाश्च यन्नरश्च वावृधन्त विश्वे देवासो नरां स्वगूर्त्ताः ।
प्रैभ्य ऽइन्द्रावरुणा महित्वा द्यौश्च पृथिवि भूतमुर्वी ॥४॥

ग्नाः । च । यत् । नरः । च । वृवृधन्त । विश्वे ।
देवासः । नराम् । स्व॰गूर्ताः ॥ प्र । एभ्यः । इन्द्रावरुणा ।
महि॰त्वा । द्यौः । च । पृथिवि । भूतम् । उर्वी इति ॥४॥

स इत्सुदानुः स्ववाँ ऽऋतावेन्द्रा यो वां वरुण दाशति त्मन् ।
इषा स द्विषस्तरेद्दास्वान्वंसद्रयिं रयिवतश्च जनान् ॥५॥ ( ११ )
सः । इत् । सु॰दानुः । स्व॰वान् । ऋत॰वा । इन्द्रा । यः ।
वाम् । वरुणा । दाशति । त्मन् ॥ इषा । सः । द्विषः ।
तरेत् । दास्वान् । वंसत् । रयिम् । रयि॰वतः । च । जनान् ॥५॥

यं युवं दाश्वध्वराय देवा रयिं धत्थो वसुमन्तं पुरुक्षुम् ।
अस्मे स ऽइन्द्रावरुणावपि ष्यात्प्र यो भनक्ति वनुषामशस्तीः ॥६॥
यम् । युवम् । दाशु॰अध्वराय । देवा । रयिम् । धत्थः ।
वसु॰मन्तम् । पुरु॰क्षुम् ॥ अस्मे इति । सः । इन्द्रावरुणौ ।
अपि । स्यात् । प्र । यः । भनक्ति । वनुषाम् । अशस्तीः ॥६॥

उत नः सुत्रात्रो देवगोपाः सूरिभ्य ऽइन्द्रावरुणा रयिः ष्यात् ।
येषां शुष्मः पृतनासु साह्वान्प्र सद्यो द्युम्ना तिरते ततुरिः ॥७॥
उत । नः । सु॰त्रातः । देव॰गोपाः । सूरि॰भ्यः ।
इन्द्रावरुणा । रयिः । स्यात् ॥ येषाम् । शुष्मः । पृतनासु ।
साह्वान् । प्र । सद्यः । द्युम्ना । तिरते । ततुरिः ॥७॥

नू न ऽइन्द्रावरुणा गृणाना पृङ्क्तं रयिं सौश्रवसाय देवा ।
इत्था गृणन्तो महिनस्य शर्द्धोऽपो न नावा दुरिता तरेम ॥८॥
नु । नः । इन्द्रावरुणा । गृणाना । पृङ्क्तम् । रयिम् ।
सौश्रवसाय । देवा ॥ इत्था । गृणन्तः । महिनस्य ।
शर्द्धः । अपः । न । नावा । दुः॰इता । तरेम ॥८॥

**प्र सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः ।**

**अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ॥९॥**

प्र । सम्ऽराजे । बृहते । मन्म । नु । प्रियम् । अर्च । देवाय ।
वरुणाय । सऽप्रथः ॥ अयम् । यः । उर्वी इति । महिना ।
महिऽव्रतः । क्रत्वा । विऽभाति । अजरः । न । शोचिषा ॥९॥

**इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।**

**युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥१०॥**

इन्द्रावरुणा । सुतऽपौ । इमम् । सुतम् । सोमम् । पिबतम् ।
मद्यम् । धृतऽव्रता ॥ युवोः । रथः । अध्वरम् ।
देवऽवीतये । प्रति । स्वसरम् । उप । याति । पीतये ॥१०॥

**इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।**

**इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन्बर्हिषि मादयेथाम् ॥११॥ ( १२ ) [ ६७ ]**

इन्द्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा ।
आ । वृषेथाम् ॥ इदम् । वाम् । अन्धः । परिऽसिक्तम् ।
अस्मे इति । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथाम् ॥११॥

# ( ६९ )

**८ बार्हस्पत्यो भरद्वाजः । इन्द्राविष्णू । त्रिष्टुप् ।**

**सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य ।**

**जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥१॥**

सम् । वाम् । कर्मणा । सम् । इषा । हिनोमि । इन्द्राविष्णू इति ।
अपसः । पारे । अस्य ॥ जुषेथाम् । यज्ञम् । द्रविणम् ।
च । धत्तम् । अरिष्टैः । नः । पथिऽभिः । पारयन्ता ॥१॥

**या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना ।**
**प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो ऽअर्कैः ॥२॥**

या । विश्वासाम् । जनितारा । मतीनाम् । इन्द्राविष्णू इति ।
कलशा । सोम०धाना ॥ प्र । वाम् । गिरः । शस्यमानाः ।
अवन्तु । प्र । स्तोमासः । गीयमानासः । अर्कैः ॥२॥

**इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना ।**
**सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानासऽ उक्थैः ॥३॥**

इन्द्राविष्णू इति । मदपती इति मद०पती । मदानाम् । आ । सोमम् ।
यातम् । द्रविणो इति । दधाना ॥ सम् । वाम् । अञ्जन्तु । अक्तु०भिः ।
मतीनाम् । सम् । स्तोमासः । शस्यमानासः । उक्थैः ॥३॥

**आ वामश्वासोऽ अभिमातिषाह ऽइन्द्राविष्णू सधमादो वहन्तु ।**
**जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृणुतं गिरो मे ॥४॥**

आ । वाम् । अश्वासः । अभिमाति०सहः । इन्द्राविष्णू इति ।
सध०मादः । वहन्तु ॥ जुषेथाम् । विश्वा । हवना ।
मतीनाम् । उप । ब्रह्माणि । शृणुतम् । गिरः । मे ॥४॥

**इन्द्राविष्णू तत्पनयाय्यं वां सोमस्य मद ऽउरु चक्रमाथे ।**
**अकृणुतमन्तरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥५॥**

इन्द्राविष्णू इति । तत् । पनयाय्यम् । वाम् । सोमस्य ।
मदे । उरु । चक्रमाथे इति ॥ अकृणुतम् । अन्तरिक्षम् ।
वरीयः । अप्रथतम् । जीवसे । नः । रजांसि ॥५॥

**इन्द्राविष्णू हविषा वावृधानाग्राद्वाना नमसा रातहव्या ।**
**घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानः ॥६॥**

इन्द्राविष्णू इति । हविषा । ववृधाना । अग्र॰अद्वाना ।
नमसा । रात॰हव्या ॥ घृतासुती इति घृत॰आसुती । द्रविणम् ।
धत्तम् । अस्मे इति । समुद्रः । स्थः । कलशः । सोम॰धानः ॥६॥

**इन्द्राविष्णू पिबतं मध्वो ऽअस्य सोमस्य दस्त्रा जठरं पृणेथाम् ।**
**आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवम् मे ॥७॥**
इन्द्राविष्णू इति । पिबतम् । मध्वः । अस्य । सोमस्य । दस्त्रा ।
जठरम् । पृणेथाम् ॥ आ । वाम् । अन्धांसि । मदिराणि ।
अग्मन् । उप । ब्रह्माणि । शृणुतम् । हवम् । मे ॥७॥

**उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः ।**
**इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥८॥ ( १३ ) [ ७५ ]**
उभा । जिग्यथुः । न । परा । जयेथे इति । न । परा । जिग्ये ।
कतरः । चन । एनोः ॥ इन्द्रः । च । विष्णो इति । यत् ।
अपस्पृधेथाम् । त्रेधा । सहस्रम् । वि । तत् । ऐरयेथाम् ॥८॥

## ( ७० )

६ बार्हस्पत्यो भरद्वाजः । द्यावापृथिवी । जगती ।

**घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।**
**द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते ऽअजरे भूरिरेतसा ॥१॥**
घृतवती इति घृत॰वती । भुवनानाम् । अभि॰श्रिया । उर्वी इति ।
पृथ्वी इति । मधुदुघे इति मधु॰दुघे । सु॰पेशसा ॥ द्यावापृथिवी इति ।
वरुणस्य । धर्मणा । विस्कभिते इति वि॰स्कभिते । अजरे इति । भूरि॰रेतसा ॥

**असश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते ।**
**राजन्तीऽ अस्य भुवनस्य रोदसीऽ अस्मे रेतः सिञ्चतं यन्मनुर्हितम् ॥२॥**

असंश्चन्ती इति । भूरिंधारे इति भूरिं०धारे । पयस्वती इति । घृतम् ।
दुहाते इति । सु०कृते । शुचिंव्रते इति शुचिं०व्रते ॥ राजन्ती इति । अस्य ।
भुवंनस्य । रोदसी इति । अस्मे इति । रेतः । सिञ्चतम् । यत् । मनुः२हितम् ॥२॥

**यो वामृजवे क्रमणाय रोदसी मर्तों ददाश धिषणे स साधति ।**
**प्र प्रजाभिर्जायते धर्मणस्परि युवोः सिक्ता विषुरूपाणि सव्रता ॥३॥**
यः । वाम् । ऋजवे । क्रमणाय । रोदसी इति । मर्तः । ददाश ।
धिषणे इति । सः । साधति ॥ प्र । प्र०जाभिः । जायते ।
धर्मणः । परि । युवोः । सिक्ता । विषु०रूपाणि । स०व्रता ॥३॥

**घृतेन द्यावापृथिवी ऽअभीवृते घृतश्रिया घृतपृचा घृतावृधा ।**
**उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते ऽइद्विप्रा ऽईळते सुम्नमिष्टये ॥४॥**
घृतेन । द्यावापृथिवी इति । अभीवृते इत्यभि०वृते । घृत०श्रिया ।
घृत०पृचा । घृत०वृधा ॥ उर्वी इति । पृथ्वी इति । होतृ०वूर्ये ।
पुरोहिते इति पुरः२हिते । ते इति । इत् । विप्राः । ईळते । सुम्नम् । इष्टये ॥४॥

**मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते ।**
**दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यम् ॥५॥**
मधु । नः । द्यावापृथिवी इति । मिमिक्षताम् । मधु०श्चुता ।
मधुदुघे इति मधु०दुघे । मधुव्रते इति मधु०व्रते ॥ दधाने इति । यज्ञम् ।
द्रविणम् । च । देवता । महि । श्रवः । वाजम् । अस्मे इति । सु०वीर्यम् ॥५॥

**ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता विश्वविदा सुदंससा ।**
**संरराणे रोदसी विश्वशंभुवा सनिं वाजं रयिमस्मे समिन्वताम् ॥६॥ ( १४ ) [ ८१ ]**
ऊर्जम् । नः । द्यौः । च । पृथिवी । च । पिन्वताम् । पिता । माता ।
विश्व०विदा । सु०दंससा ॥ संरराणे इति सम्०रराणे । रोदसी इति ।
विश्व०शम्भुवा । सनिम् । वाजम् । रयिम् । अस्मे इति । सम् । इन्वताम् ॥६॥

# ( ७१ )

६ बार्हस्पत्यो भरद्वाजः । सविता । जगती, ४-६ त्रिष्टुप् ।

उदु ष्य देवः सविता हिरण्ययां बाहू ऽअयंस्त सवनाय सुक्रतुः ।
घृतेन पाणीऽ अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणि ॥१॥
उत् । ऊँ इति । स्यः । देवः । सविता । हिरण्ययां । बाहू इति ।
अयंस्त । सवनाय । सु०क्रतुः ॥ घृतेन । पाणी इति । अभि ।
प्रुष्णुते । मखः । युवा । सु०दक्षः । रजसः । वि०धर्मणि ॥१॥

देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने ।
यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥२॥
देवस्य । वयम् । सवितुः । सवीमनि । श्रेष्ठे । स्याम ।
वसुनः । च । दावने ॥ यः । विश्वस्य । द्वि०पदः । यः ।
चतुः२पदः । नि०वेशने । प्र०सवे । च । असि । भूमनः ॥२॥

अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो ऽअघशंस ऽईशत ॥३॥
अदब्धेभिः । सवितरिति । पायु०भिः । त्वम् । शिवेभिः । अद्य ।
परि । पाहि । नः । गयम् ॥ हिरण्य०जिह्वः । सुविताय ।
नव्यसे । रक्ष । माकिः । नः । अघ०शंसः । ईशत ॥३॥

उदु ष्य देवः सविता दमूना हिरण्यपाणिः प्रतिदोषमस्थात् ।
अयोहनुर्यजतो मन्द्रजिह्व ऽआ दाशुषे सुवति भूरि वामम् ॥४॥
उत् । ऊँ इति । स्यः । देवः । सविता । दमूनाः ।
हिरण्य०पाणिः । प्रति०दोषम् । अस्थात् ॥ अयः२हनुः ।
यजतः । मन्द्र०जिह्वः । आ । दाशुषे । सुवति । भूरि । वामम् ॥४॥

उदू ऽअयाँ ऽउपवक्तेव बाहू हिरण्यया सविता सुप्रतीका ।
दिवो रोहांस्यरुहत्पृथिव्या ऽअरीरमत्पतयत्कच्चिदभ्वम् ॥५॥
उत् । ऊँ इति । अयान् । उपवक्ताऽइव । बाहू इति । हिरण्यया ।
सविता । सुऽप्रतीका ॥ दिवः । रोहांसि । अरुहत् ।
पृथिव्याः । अरीरमत् । पतयत् । कत् । चित् । अभ्वम् ॥५॥

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥६॥ ( १५ ) [ ८७ ]
वामम् । अद्य । सवितः । वामम् । ऊँ इति । श्वः । दिवेऽदिवे ।
वामम् । अस्मभ्यम् । सावीः ॥ वामस्य । हि । क्षयस्य ।
देव । भूरेः । अया । धिया । वामऽभाजः । स्याम ॥६॥

## ( ७२ )

५ बार्हस्पत्यो भरद्वाजः । इन्द्रासोमौ । त्रिष्टुप् ।

इन्द्रासोमा महि तद्वां महित्वं युवं महानि प्रथमानि चक्रथुः ।
युवं सूर्यं विविदथुर्युवं स्वर्विश्वा तमांस्यहतं निदश्च ॥१॥
इन्द्रासोमा । महि । तत् । वाम् । महिऽत्वम् । युवम् ।
महानि । प्रथमानि । चक्रथुः ॥ युवम् । सूर्यम् । विविदथुः ।
युवम् । स्वः । विश्वा । तमांसि । अहतम् । निदः । च ॥१॥

इन्द्रासोमा वासयथ ऽउषासमुत्सूर्यं नयथो ज्योतिषा सह ।
उप द्यां स्कम्भथुः स्कम्भनेनाप्रथतं पृथिवीं मातरं वि ॥२॥
इन्द्रासोमा । वासयथः । उषसम् । उत् । सूर्यम् ।
नयथः । ज्योतिषा । सह ॥ उप । द्याम् । स्कम्भथुः ।
स्कम्भनेन । अप्रथतम् । पृथिवीम् । मातरम् । वि ॥२॥

**इन्द्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत ।**
**प्रार्णांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥३॥**
इन्द्रासोमौ । अहिम् । अपः । परि॰स्थाम् । हथः । वृत्रम् ।
अनु । वाम् । द्यौः । अमन्यत ॥ प्र । अर्णांसि । ऐरयतम् ।
नदीनाम् । आ । समुद्राणि । पप्रथुः । पुरूणि ॥३॥

**इन्द्रासोमा पक्वमामास्वन्तर्नि गवामिद्दधथुर्वक्षणासु ।**
**जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वन्तः ॥४॥**
इन्द्रासोमा । पक्वम् । आमासु । अन्तः । नि । गवाम् ।
इत् । दधथुः । वक्षणासु ॥ जगृभथुः । अनपि॰नद्धम् ।
आसु । रुशत् । चित्रासु । जगतीषु । अन्तरिति ॥४॥

**इन्द्रासोमा युवमङ्ग तरुत्रमपत्यसाचं श्रुत्यं रराथे ।**
**युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥५॥ (१६)** [ ९२ ]
इन्द्रासोमा । युवम् । अङ्ग । तरुत्रम् । अपत्य॰साचम् ।
श्रुत्यम् । रराथे इति ॥ युवम् । शुष्मम् । नर्यम् ।
चर्षणि॰भ्यः । सम् । विव्यथुः । पृतना॰सहम् । उग्रा ॥५॥

## ( ७३ )

३ बार्हस्पत्यो भरद्वाजः । बृहस्पतिः । त्रिष्टुप् ।

**यो ऽअद्रिभित्प्रथमजाऽ ऋतावा बृहस्पतिराङ्गिरसो हविष्मान् ।**
**द्विबर्हज्मा प्राघर्मसत्पिता न ऽआ रोदसी वृषभो रोरवीति ॥१॥**
यः । अद्रि॰भित् । प्रथम॰जाः । ऋत॰वा । बृहस्पतिः ।
आङ्गिरसः । हविष्मान् ॥ द्विबर्ह॰ज्मा । प्राघर्म॰सत् ।
पिता । नः । आ । रोदसी इति । वृषभः । रोरवीति ॥१॥

जनाय चिद्य ऽईवत ऽउ लोकं बृहस्पतिर्देवहूतौ चकार ।
घ्नन्वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान्पृत्सु साहन् ॥२॥
जनाय । चित् । यः । ईवते । ऊँ इति । लोकम् ।
बृहस्पतिः । देव०हूतौ । चकार ॥ घ्नन् । वृत्राणि । वि ।
पुरः । दर्दरीति । जयन् । शत्रून् । अमित्रान् । पृत्०सु । सहन् ॥२॥

बृहस्पतिः समजयद्वसूनि महो व्रजान्गोमतो देव ऽएषः ।
अपः सिषासन्त्स्वर्१रप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥३॥ ( १७ ) [ १५ ]
बृहस्पतिः । सम् । अजयत् । वसूनि । महः । व्रजान् ।
गो०मतः । देवः । एषः ॥ अपः । सिसासन् । स्वः ।
अप्रति०इतः । बृहस्पतिः । हन्ति । अमित्रम् । अर्कैः ॥३॥

## ( ७४ )

४ बार्हस्पत्यो भरद्वाजः । सोमारुद्रौ । त्रिष्टुप् ।

सोमारुद्रा धारयेथामसुर्य१ं प्र वामिष्टयोऽरमश्नुवन्तु ।
दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥१॥
सोमारुद्रा । धारयेथाम् । असुर्यम् । प्र । वाम् । इष्टयः ।
अरम् । अश्नुवन्तु ॥ दमे०दमे । सप्त । रत्ना । दधाना ।
शम् । नः । भूतम् । द्वि०पदे । शम् । चतुः२पदे ॥१॥

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि सन्तु ॥२॥
सोमारुद्रा । वि । वृहतम् । विषूचीम् । अमीवा । या ।
नः । गयम् । आ०विवेश ॥ आरे । बाधेथाम् । निः२ऋतिम् ।
पराचैः । अस्मे इति । भद्रा । सौश्रवसानि । सन्तु ॥२॥

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो ऽअस्ति तनूषु बद्धं कृतमेनो ऽअस्मत् ॥३॥
सोमारुद्रा । युवम् । एतानि । अस्मे इति । विश्वा । तनूषु ।
भेषजानि । धत्तम् ॥ अव । स्यतम् । मुञ्चतम् । यत् ।
नः । अस्ति । तनूषु । बद्धम् । कृतम् । एनः । अस्मत् ॥३॥

तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः ।
प्र नो मुञ्चतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना ॥४॥ ( १८ ) [ ९९ ]
तिग्म०आयुधौ । तिग्महेती इति तिग्म०हेती । सु०शेवौ ।
सोमारुद्रौ । इह । सु । मृळतम् । नः ॥ प्र । नः । मुञ्चतम् ।
वरुणस्य । पाशात् । गोपायतम् । नः । सु०मनस्यमाना ॥४॥

# ( ७५ )

१९ पायुर्भारद्वाजः । ( संग्रामाशिषः ) । १ वर्म, २ धनुः, ३ ज्या, ४ आर्त्नी, ५ इषुधिः, ६ ( पूर्वार्द्धः ) सारथिः, ६ ( उत्तरार्द्धः ) रश्मयः, ७ अश्वाः, ८ रथः, ९ रथगोपाः, १० ब्राह्मण-पितृ-सोम-द्यावा-पृथिवी-पूषाणः, ११-१२, १५-१६ इषवः, १३ प्रतोदः, १४ हस्तघ्नः, १७ युद्धभूमि-कवच-ब्रह्मणस्पत्यादयः, १८ वर्म-सोम-वरुणाः, १९ देवब्रह्माणि। त्रिष्टुप्, ६, १० जगती, १२, १३, १५, १६, १९ अनुष्टुप्, १७ पङ्क्तिः।

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥१॥
जीमूतस्यऽइव । भवति । प्रतीकम् । यत् । वर्मी । याति ।
स०मदाम् । उप०स्थे ॥ अनाविद्धया । तन्वा । जय ।
त्वम् । सः । त्वा । वर्मणः । महिमा । पिपर्तु ॥१॥

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥२॥

धन्वना । गाः । धन्वना । आजिम् । जयेम । धन्वना ।
तीव्राः । स०मदः । जयेम ॥ धनुः । शत्रोः । अप०कामम् ।
कृणोति । धन्वना । सर्वाः । प्र०दिशः । जयेम ॥२

**वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।**
**योषेव शिङ्क्ते वितताधि धन्वञ्ज्या ऽइयं समने पारयन्ती ॥३॥**
वक्ष्यन्तीऽइव । इत् । आ । गनीगन्ति । कर्णम् । प्रियम् ।
सखायम् । परि०सस्वजाना ॥ योषाऽइव । शिङ्क्ते । वि०तता ।
अधि । धन्वन् । ज्या । इयम् । समने । पारयन्ती ॥३॥

**ते ऽआचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।**
**अप शत्रून्विध्यतां संविदाने ऽआर्त्नी ऽइमे विष्फुरन्ती ऽअमित्रान् ॥४॥**
ते इति । आचरन्ती इत्या०चरन्ती । समनाऽइव । योषा । माताऽइव । पुत्रम् ।
बिभृताम् । उप०स्थे ॥ अप । शत्रून् । विध्यताम् । संविदाने इति सम्०विदाने ।
आर्त्नी इति । इमे इति । विस्फुरन्ती इति वि०स्फुरन्ती । अमित्रान् ॥४॥

**बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।**
**इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥५॥ ( १९ )**
बह्वीनाम् । पिता । बहुः अस्य । पुत्रः । चिश्चा । कृणोति ।
समना । अव०गत्य ॥ इषु०धिः । सङ्काः । पृतनाः ।
च । सर्वाः । पृष्ठे । नि०नद्धः । जयति । प्र०सूतः ॥५॥

**रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।**
**अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥६॥**
रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्र०यत्र ।
कामयते । सु०सारथिः ॥ अभीशूनाम् । महिमानम् ।
पनायत । मनः । पश्चात् । अनु । यच्छन्ति । रश्मयः ॥६॥

तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूँरनपव्ययन्तः ॥७॥
तीव्रान् । घोषान् । कृण्वते । वृष॰पाणयः । अश्वाः ।
रथेभिः । सह । वाजयन्तः ॥ अव॰क्रामन्तः । प्र॰पदैः ।
अमित्रान् । क्षिणन्ति । शत्रून् । अनप॰व्ययन्तः ॥७॥

रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः ॥८॥
रथ॰वाहनम् । हविः । अस्य । नाम । यत्र । आयुधम् ।
नि॰हितम् । अस्य । वर्म ॥ तत्र । रथम् । उप ।
शग्मम् । सदेम । विश्वाहा । वयम् । सु॰मनस्यमानाः ॥८॥

स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना ऽइषुबला ऽअमृध्राः सतोवीरा ऽउरवो व्रातसाहाः ॥९॥
स्वादु॰संसदः । पितरः । वयः॰धाः । कृच्छ्रे॰श्रितः ।
शक्ति॰वन्तः । गभीराः ॥ चित्र॰सेनाः । इषु॰बलाः ।
अमृध्राः । सतः॰वीराः । उरवः । व्रात॰सहाः ॥९॥

ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी ऽअनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो ऽअघशंस ऽईशत ॥१० ( २० )
ब्राह्मणासः । पितरः । सोम्यासः । शिवे इति । नः ।
द्यावापृथिवी इति । अनेहसा ॥ पूषा । नः । पातु । दुः॰इतात् ।
ऋत॰वृधः । रक्ष । माकिः । नः । अघ॰शंसः । ईशत ॥१०॥

सुपर्णं वस्ते मृगोऽ अस्या दन्तो गोभिः संनद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥११॥

सु०पर्णम् । वस्ते । मृगः । अस्याः । दन्तः । गोभिः । सम्०नद्धा ।
पतति । प्र०सूता ॥ यत्र । नरः । सम् । च । वि । च ।
द्रवन्ति । तत्र । अस्मभ्यम् । इषवः । शर्म । यंसन् ॥११॥

**ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः ।**
**सोमोऽ अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥१२॥**
ऋजीते । परि । वृङ्धि । नः । अश्मा । भवतु । नः । तनूः ॥
सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म । यच्छतु ॥१२॥

**आ जङ्घन्ति सान्वेषां जघनाँऽ उप जिघ्नते ।**
**अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥१३॥**
आ । जङ्घन्ति । सानु । एषाम् । जघनान् । उप । जिघ्नते ॥
अश्व०अजनि । प्र०चेतसः । अश्वान् । समत्०सु । चोदय ॥१३॥

**अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।**
**हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥१४॥**
अहिःऽइव । भोगैः । परि । एति । बाहुम् । ज्यायाः ।
हेतिम् । परि०बाधमानः ॥ हस्त०घ्नः । विश्वा । वयुनानि ।
विद्वान् । पुमान् । पुमांसम् । परि । पातु । विश्वतः ॥१४॥

**आलाक्ता या रुरुशीर्ष्ण्यथो यस्या ऽअयो मुखम् ।**
**इदं पर्जन्यरेतसऽ इष्वै देव्यै बृहन्नमः ॥१५॥ (२१)**
आल०अक्ता । या । रुरु०शीर्ष्णी । अथो इति । यस्याः । अयः । मुखम् ॥
इदम् । पर्जन्य०रेतसे । इष्वै । देव्यै । बृहत् । नमः ॥१५॥

अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥१६॥
अव०सृष्टा । परा । पत । शरव्ये । ब्रह्म०संशिते ॥
गच्छ । अमित्रान् । प्र । पद्यस्व । मा । अमीषाम् । कम् । चन । उत् । शिषः ॥१६॥

यत्र बाणाः संपतन्ति कुमारा विशिखाइव ।
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥१७॥
यत्र । बाणाः । सम्०पतन्ति । कुमाराः । विशिखाःऽइव ॥
तत्र। नः । ब्रह्मणः । पतिः। अदितिः। शर्म । यच्छतु । विश्वाहा । शर्म । यच्छतु ॥१७॥

मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥१८॥
मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा ।
अमृतेन । अनु । वस्ताम् ॥ उरोः । वरीयः । वरुणः ।
ते । कृणोतु । जयन्तम् । त्वा । अनु । देवाः । मदन्तु ॥१८॥

यो नः स्वो ऽअरणो यश्च निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥१९॥ (२२) [११८]
यः । नः । स्वः । अरणः । यः । च । निष्ट्यः । जिघांसति ॥
देवाः । तम् । सर्वे । धूर्वन्तु । ब्रह्म । वर्म । मम । अन्तरम् ॥१९॥

॥ इति षष्ठं मण्डलम् ॥

# ॥ अथ सप्तमं मण्डलम् ॥

## ( १ ) [ अथ प्रथमोऽनुवाकः ॥१॥ सूक्तानि १-१७

२५ मैत्रावरुणिर्वसिष्ठः । अग्निः । विराट्, १९-२५ त्रिष्टुप् ।

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥१॥
अग्निम् । नरः । दीधितिऽभिः । अरण्योः । हस्तऽच्युती । जनयन्त । प्रऽशस्तम् ॥
दूरेऽदृशम् । गृहऽपतिम् । अथर्युम् ॥१॥

तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दमऽ आस नित्यः ॥२॥
तम् । अग्निम् । अस्ते । वसवः । नि । ऋण्वन् । सुऽप्रतिचक्षम् । अवसे । कुतः। चित् ॥
दक्षाय्यः । यः । दमे । आस । नित्यः॥२॥

प्रेद्धो ऽअग्ने दीदिहि पुरो नोऽजस्त्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त ऽउप यन्ति वाजाः॥३॥
प्रऽइद्धः । अग्ने । दीदिहि । पुरः । नः । अजस्त्रया । सूर्म्या । यविष्ठ ॥
त्वाम् । शश्वन्तः । उप । यन्ति । वाजाः॥३॥

प्र ते ऽअग्नयोऽग्निभ्यो वरं निः सुवीरासः शोशुचन्त द्युमन्तः ।
यत्रा नरः समासते सुजाताः ॥४॥
प्र । ते । अग्नयः । अग्निऽभ्यः । वरम् । निः । सुऽवीरासः । शोशुचन्त । द्युऽमन्तः ॥
यत्र । नरः । सम्ऽआसते । सुऽजाताः ॥४॥

**दा नो ऽअग्ने धिया रयिं सुवीरं स्वपत्यं सहस्य प्रशस्तम् ।**
**न यं यावा तरति यातुमावान् ॥५॥ ( २३ )**
दाः । नः । अग्ने । धिया । रयिम् । सु०वीरम् । सु०अपत्यम् । सहस्य । प्र०शस्तम् ॥
न । यम् । यावा । तरति । यातु०मावान् ॥५॥

**उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची ।**
**उप स्वैनमरमतिर्वसूयुः ॥६॥**
उप । यम् । एति । युवतिः । सु०दक्षम् । दोषा । वस्तोः । हविष्मती । घृताची ॥
उप । स्वा । एनम् । अरमतिः । वसु०युः ॥६॥

**विश्वा ऽअग्नेऽप दहारातीर्येभिस्तपोभिरदहो जरूथम् ।**
**प्र निस्वरं चातयस्वामीवाम् ॥७॥**
विश्वाः । अग्ने । अप । दह । अरातीः । येभिः । तपः२भिः । अदहः । जरूथम् ॥
प्र । नि०स्वरम् । चातयस्व । अमीवाम् ॥७॥

**आ यस्ते ऽअग्न ऽइधते ऽअनीकं वसिष्ठ शुक्र दीदिवः पावक ।**
**उतो न ऽएभिः स्तवथैरिह स्याः ॥८॥**
आ । यः । ते । अग्ने । इधते । अनीकम् । वसिष्ठ । शुक्र । दीदि०वः । पावक ॥
उतो इति । नः । एभिः । स्तवथैः । इह । स्याः ॥८॥

**वि ये ते ऽअग्ने भेजिरे ऽअनीकं मर्त्ता नरः पित्र्यासः पुरुत्रा ।**
**उतो न ऽएभिः सुमना ऽइह स्याः ॥९॥**
वि । ये । ते । अग्ने । भेजिरे । अनीकम् । मर्त्ताः । नरः । पित्र्यासः । पुरु०त्रा ॥
उतो इति । नः । एभिः । सु०मनाः । इह । स्याः ॥९॥

इमे नरो वृत्रहत्येषु शूरा विश्वाऽ अदेवीरभि सन्तु मायाः ।
ये मे धियं पनयन्त प्रशस्ताम् ॥१०॥ ( २४ )
इमे । नरः । वृत्र॰हत्येषु । शूराः । विश्वाः । अदेवीः । अभि । सन्तु । मायाः ॥
ये । मे । धियम् । पनयन्त । प्र॰शस्ताम् ॥१०॥

मा शूने ऽअग्ने नि षदाम नृणां माशेषसोऽवीरता परि त्वा ।
प्रजावतीषु दुर्यासु दुर्य ॥११॥
मा । शूने । अग्ने । नि । सदाम । नृणाम् । मा । अशेषसः । अवीरता । परि । त्वा ॥
प्रजा॰वतीषु । दुर्यासु । दुर्य ॥११॥

यमश्वी नित्यमुपयाति यज्ञं प्रजावन्तं स्वपत्यं क्षयं नः ।
स्वजन्मना शेषसा वावृधानम् ॥१२॥
यम् । अश्वी। नित्यम् । उप॰याति। यज्ञम् । प्रजा॰वन्तम्। सु॰अपत्यम्। क्षयम् । नः ॥
स्व॰जन्मना । शेषसा । ववृधानम् ॥१२॥

पाहि नो ऽअग्ने रक्षसो ऽअजुष्टात्पाहि धूर्तेररुषो ऽअघायोः ।
त्वा युजा पृतनायूँरभि ष्याम् ॥१३॥
पाहि । नः । अग्ने । रक्षसः । अजुष्टात् । पाहि । धूर्तेः । अररुषः । अघ॰योः ॥
त्वा । युजा । पृतना॰यून् । अभि । स्याम् ॥१३॥

सेदग्निरग्नीँरत्यस्त्वन्यान्यत्र वाजी तनयो वीळुपाणिः ।
सहस्रपाथा ऽअक्षरा समेति ॥१४॥
सः । इत् । अग्निः । अग्नीन् । अति । अस्तु ।
अन्यान् । यत्र । वाजी । तनयः । वीळु॰पाणिः ॥
सहस्र॰पाथाः । अक्षरा । सम्॰एति ॥१४॥

**सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस ऽउरुष्यात् ।**

**सुजातासः परि चरन्ति वीराः ॥१५॥ ( २५ )**

सः। इत् । अग्निः। यः। वनुष्यतः । नि०पाति । सम्०एद्धारम् । अंहसः । उरुष्यात् ॥

सु०जातासः । परि । चरन्ति । वीराः ॥१५॥

**अयं सो ऽअग्निराहुतः पुरुत्रा यमीशानः समिदिन्धे हविष्मान् ।**

**परि यमेत्यध्वरेषु होता ॥१६॥**

अयम्। सः। अग्निः। आ०हुतः। पुरु०त्रा। यम्। ईशानः। सम् । इत् । इन्धे । हविष्मान् ॥

परि । यम् । एति । अध्वरेषु । होता ॥१६॥

**त्वे ऽअग्न ऽआहवनानि भूरीशानास ऽआ जुहुयाम नित्या ।**

**उभा कृण्वन्तो वहतू मियेधे ॥१७॥**

त्वे इति । अग्ने । आ०हवनानि । भूरि । ईशानासः । आ । जुहुयाम । नित्या ॥

उभा । कृण्वन्तः । वहतू इति । मियेधे ॥१७॥

**इमो ऽअग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ ।**

**प्रति न ऽई सुरभीणि व्यन्तु ॥१८॥**

इमो इति । अग्ने । वीत०तमानि । हव्या । अजस्रः । वक्षि । देव०तातिम् । अच्छ ॥

प्रति । नः । ईम् । सुरभीणि । व्यन्तु ॥१८॥

**मा नो ऽअग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो ऽअस्यै ।**

**मा नः क्षुधे मा रक्षस ऽऋतावो मा नो दमे मा वन ऽआ जुहूर्थाः ॥१९॥**

मा । नः । अग्ने । अवीरते । परा । दाः । दुः२वाससे ।

अमतये । मा । नः । अस्यै ॥ मा । नः । क्षुधे । मा । रक्षसे ।

ऋत०वः । मा । नः । दमे । मा । वने । आ । जुहूर्थाः ॥१९॥

नू मे ब्रह्माण्यग्न ऽउच्छशाधि त्वं दैव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास ऽआ तै यूयं पात स्वस्तिभिः सदा नः ॥२०॥ ( २६ )
नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव ।
मघवत्०भ्यः । सुसूदः ॥ रातौ । स्याम । उभयासः ।
आ । ते । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥२०॥

त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि ।
मा त्वे सचा तनये नित्य ऽआ धङ्मा वीरो ऽअस्मन्नर्यो वि दासीत् ॥२१॥
त्वम् । अग्ने । सु०हवः । रण्व०संदृक् । सु०दीती । सूनो इति ।
सहसः । दिदीहि ॥ मा । त्वे इति । सचा । तनये । नित्ये ।
आ । धक् । मा । वीरः । अस्मत् । नर्यः । वि । दासीत् ॥२१॥

मा नो ऽअग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः ।
मा ते ऽअस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशन्त ॥२२॥
मा । नः । अग्ने । दुःऽभृतये । सचा । एषु । देव०इद्धेषु ।
अग्निषु । प्र । वोचः ॥ मा । ते । अस्मान् । दुःऽमतयः ।
भृमात् । चित् । देवस्य । सूनो इति । सहसः । नशन्त ॥२२॥

स मर्त्तो ऽअग्ने स्वनीक रेवानमर्त्त्ये यऽ आजुहोति हव्यम् ।
स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान ऽएति ॥२३॥
सः । मर्त्तः । अग्ने । सु०अनीक । रेवान् । अमर्त्त्ये ।
यः । आ०जुहोति । हव्यम् ॥ सः । देवता । वसु०वनिम् ।
दधाति । यम् । सूरिः । अर्थी । पृच्छमानः । एति ॥२३॥

महो नो ऽअग्ने सुवितस्य विद्वान्रयिं सूरिभ्य ऽआ वहा बृहन्तम् ।
येन वयं सहसावन्मदेमाविक्षितास ऽआयुषा सुवीराः ॥२४॥

महः । नः । अग्ने । सुवितस्य॑ । विद्वान् । रयिम् ।
सूरि०भ्यः॑ । आ । वह । बृहन्त॑म्॥ येन॑ । वयम् ।
सहसा०वन् । मदे॑म । अवि॑०क्षितासः । आयु॑षा । सु०वीरा॑ः ॥२४॥

**नू मे ब्रह्मा॑ण्यग्न ऽउच्छ॑शाधि त्वं दे॑व मघव॑द्भ्यः सुषूदः ।**
**रातौ स्या॑मोभया॑स ऽआ ते॑ यूयं पा॑त स्वस्तिभिः सदा॑ नः॥२५॥ ( २७ ) [ १४३ ]**
नु । मे । ब्रह्मा॑णि । अग्ने । उत् । शशाधि । त्वम् । देव ।
मघवत्०भ्यः । सुसूदः ॥ रातौ । स्याम । उभया॑सः ।
आ । ते । यूयम् । पात । स्वस्ति०भिः॑ । सदा॑ । नः ॥२५॥

॥ इति पञ्चमाष्टके प्रथमोऽध्यायः ॥१॥

# प्रथमाध्यायस्य मन्त्रवर्गानुक्रमणी

स्तुषे नरा॑ दि॒वो ॥१॥

ता भुज्युं विभिं॑० ॥२॥

क्व॒१॑ त्या व॒ल्गू ॥३॥

युवं श्री॒भिर्द॑र्श॒ता ॥४॥

उदु॑ श्रि॒य उ॒षसो॒ ॥ ५॥

ए॒षा स्या नो॑ दुहि॒ता ॥६॥

वपु॑र्नु तच्चि॑कि॒तुषे॑ ॥७॥

त इदु॒ग्राःशव॑सा ॥८॥

विश्वे॑षां वः स॒तां ॥९॥

ता हि क्ष॒त्रं धा॒रये॑थे॒ ॥१०॥

श्रु॒ष्टी वां॑ य॒ज्ञ ॥११॥

यं यु॒वं दा॒श्व॑ध्वराय ॥१२॥

सं वा॒ं कर्म॑णा समि॒षा ॥१३॥

घृ॒तव॑ती भुव॑नानाम ॥१४॥

उदु॒ ष्य दे॒वः स॑वि॒ता ॥१५॥

इन्द्रा॑सोमा॒ महि॒ ॥१६॥

यो अद्रि॑भित्प्र॑थम॒जा ॥१७॥

सोमा॑रुद्रा धा॒रये॑थाम ॥१८॥

जी॒मूत॑स्येव भवति॒ ॥१९॥

र॒थे तिष्ठ॑न्नयति ॥२०॥

सु॒प॒र्णं व॑स्ते मृ॒गो ॥२१॥

अव॑सृष्टा॒ परा॑ पत॒ ॥२२॥

अ॒ग्निं नरो॒ दीधि॑तिभि ॥२३॥

उप॒ यमेति॑ यु॒वतिः ॥२४॥

मा शूने॑ अग्ने॒ नि ॥२५॥

अ॒यं सो अ॒ग्निरा॑हुतः ॥२६॥

त्वम॑ग्ने सु॒हवो॑ ॥२७॥

॥ इति शाङ्खायनसंहितायां पञ्चमाष्टके प्रथमोऽध्यायः ॥
(प्रथमाध्याये वर्गाः २७, सूक्तानि १५, ऋचः १४३)

# ॥ पञ्चमाष्टके द्वितीयोऽध्यायः॥

अथ द्वितीयोऽध्यायः॥२॥ वर्गाः १-३० ]   [ सप्तममण्डले सूक्तानि २-१९ ]

## ( २ )

११ मैत्रावरुणिर्वसिष्ठः । आप्रीसूक्तं = (१ इध्मः समिद्धोऽग्निर्वा, २ नराशंसः, ३ इलः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयः) । त्रिष्टुप् ।

जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन् ।
उप स्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य ॥१॥
जुषस्व । नः । सम्ऽइधम् । अग्ने । अद्य । शोच । बृहत् ।
यजतम् । धूमम् । ऋण्वन् ॥ उप । स्पृश । दिव्यम् ।
सानु । स्तूपैः । सम् । रश्मिऽभिः । ततनः । सूर्यस्य ॥१॥

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥२॥
नराशंसस्य । महिमानम् । एषाम् । उप । स्तोषाम ।
यजतस्य । यज्ञैः ॥ ये । सुऽक्रतवः । शुचयः ।
धियम्ऽधाः । स्वदन्ति । देवाः । उभयानि । हव्या ॥२॥

ईळेन्यं वो असुरं सुदक्षमन्तर्दूतं रोदसी सत्यवाचम् ।
मनुष्वदग्निं मनुना समिद्धं समध्वराय सदमिन्महेम ॥३॥
ईळेन्यम् । वः । असुरम् । सुऽदक्षम् । अन्तः । दूतम् ।
रोदसी इति । सत्यऽवाचम् ॥ मनुष्वत् । अग्निम् । मनुना ।
सम्ऽइद्धम् । सम् । अध्वराय । सदम् । इत् । महेम ॥३॥

सपर्यवो भरमाणा अभिज्ञु प्र वृञ्जते नमसा बर्हिरग्नौ ।
आजुह्वाना घृतपृष्ठं पृषद्वदध्वर्यवो हविषा मर्जयध्वम् ॥४॥

सपर्यवः । भरमाणाः । अभि॰ज्ञु । प्र । वृञ्जते ।
नमसा । बर्हिः । अग्नौ ॥ आ॰जुह्वानाः । घृत॰पृष्ठम् ।
पृषत्॰वत् । अध्वर्यवः । हविषा । मर्जयध्वम् ॥४॥

**स्वाध्योइ वि दुरो देवयन्तोऽशिश्रयू रथयुर्देवताता ।**
**पूर्वी शिशुं न मातरा रिहाणे समग्रुवो न समनेष्वञ्जन् ॥५॥ (१)**
सु॰आध्यः । वि । दुरः । देव॰यन्तः । अशिश्रयुः ।
रथ॰युः । देव॰ताता ॥ पूर्वी इति । शिशुम् । न । मातरा ।
रिहाणे इति । सम् । अग्रुवः । न । समनेषु । अञ्जन् ॥५॥

**उत योषणे दिव्ये मही नं ऽउषासानक्ता सुदुघेव धेनुः ।**
**बर्हिषदा पुरुहूते मघोनी ऽआ यज्ञिये सुविताय श्रयेताम् ॥६॥**
उत । योषणे इति । दिव्ये इति । मही इति । नः । उषसानक्ता ।
सुदुघाऽइव । धेनुः ॥ बर्हि॰सदा । पुरुहूते इति पुरु॰हूते ।
मघोनी इति । आ । यज्ञिये इति । सुविताय । श्रयेताम् ॥६॥

**विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै ।**
**ऊर्ध्वं नो ऽअध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणि ॥७॥**
विप्रा । यज्ञेषु । मानुषेषु । कारू इति । मन्ये । वाम् ।
जात॰वेदसा । यजध्यै ॥ ऊर्ध्वम् । नः । अध्वरम् ।
कृतम् । हवेषु । ता । देवेषु । वनथः । वार्याणि ॥७॥

**आ भारती भारतीभिः सजोषा ऽइळा देवैर्मनुष्येभिरग्निः ।**
**सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥८॥**
आ । भारती । भारतीभिः । स॰जोषाः । इळा । देवैः ।
मनुष्येभिः । अग्निः ॥ सरस्वती । सारस्वतेभिः ।
अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥८॥

# ( २३ )

६ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

**उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।**
**आ यो विश्वानि शवसा ततानोपश्रोता म ऽईवतो वचांसि ॥१॥**

उत् । ऊँ इति । ब्रह्माणि । ऐरत । श्रवस्या । इन्द्रम् ।
सऽमर्ये । महय । वसिष्ठ ॥ आ । यः । विश्वानि ।
शवसा । ततान । उपऽश्रोता । मे । ईवतः । वचांसि ॥१॥

**अयामि घोष ऽइन्द्र देवजामिरिरज्यन्त यच्छुरुधो विवाचि ।**
**नहि स्वमायुश्चिकिते जनेषु तानीदंहांस्यति पर्ष्यस्मान् ॥२॥**

अयामि । घोषः । इन्द्र । देवऽजामिः । इरज्यन्त । यत् ।
शुरुधः । विऽवाचि ॥ नहि । स्वम् । आयुः । चिकिते ।
जनेषु । तानि । इत् । अंहांसि । अति । पर्षि । अस्मान् ॥२॥

**युजे रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः ।**
**वि बाधिष्ट स्य रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान् ॥३॥**

युजे । रथम् । गोऽएषणम् । हरिऽभ्याम् । उप । ब्रह्माणि ।
जुजुषाणम् । अस्थुः ॥ वि । बाधिष्ट । स्यः । रोदसी इति ।
महिऽत्वा । इन्द्रः । वृत्राणि । अप्रति । जघन्वान् ॥३॥

**आपश्चित्पिप्युः स्तर्यो३ न गावो नक्षन्नृतं जरितारस्त ऽइन्द्र ।**
**याहि वायुर्न नियुतो नो ऽअच्छा त्वं हि धीभिर्दयसे वि वाजान् ॥४॥**

आपः । चित् । पिप्युः । स्तर्यः । न । गावः । नक्षन् । ऋतम् ।
जरितारः । ते । इन्द्र ॥ याहि । वायुः । न । निऽयुतः । नः ।
अच्छ । त्वम् । हि । धीऽभिः । दयसे । वि । वाजान् ॥४॥

ते त्वा मदा ऽइन्द्र मादयन्तु शुष्मिणं तुविराधसं जरित्रे ।
एको देवत्रा दयसे हि मर्त्तानस्मिञ्छूर सवने मादयस्व ॥५॥
ते । त्वा । मदाः । इन्द्र । मादयन्तु । शुष्मिणम् ।
तुवि०राधसम् । जरित्रे ॥ एकः । देव०त्रा । दयसे ।
हि । मर्त्तान् । अस्मिन् । शूर । सवने । मादयस्व ॥५॥

एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो ऽअभ्यर्चन्त्यर्कैः ।
स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥६॥ (७) [ ३३४ ]
एव । इत् । इन्द्रम् । वृषणम् । वज्र०बाहुम् । वसिष्ठासः ।
अभि । अर्चन्ति । अर्कैः ॥ सः । नः । स्तुतः । वीर०वत् ।
धातु । गो०मत् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥६॥

# ( २४ )

६ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

योनिष्ट ऽइन्द्र सदने ऽअकारि तमा नृभिः पुरुहूत प्र याहि ।
असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥१॥
योनिः । ते । इन्द्र । सदने । अकारि । तम् । आ । नृ०भिः ।
पुरु०हूत । प्र । याहि ॥ असः । यथा । नः । अविता ।
वृधे । च । ददः । वसूनि । ममदः । च । सोमैः ॥१॥

गृभीतं ते मन ऽइन्द्र द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि ।
विसृष्टधेना भरते सुवृक्तिरियमिन्द्रं जोहुवती मनीषा ॥२॥
गृभीतम् । ते । मनः । इन्द्र । द्वि०बर्हाः । सुतः ।
सोमः । परि०सिक्ता । मधूनि ॥ विसृष्ट०धेना । भरते ।
सु०वृक्तिः । इयम् । इन्द्रम् । जोहुवती । मनीषा ॥२॥

आ नो दिव ऽआ पृथिव्या ऽऋजीषिन्निदं बर्हिः सोमपेयाय याहि ।
वहन्तु त्वा हरयो मद्र्यञ्चमाङ्गूषमच्छा तवसं मदाय ॥३॥
आ । नः । दिवः । आ । पृथिव्याः । ऋजीषिन् । इदम् ।
बर्हिः । सोम०पेयाय । याहि ॥ वहन्तु । त्वा । हरयः ।
मद्र्यञ्चम् । आङ्गूषम् । अच्छ । तवसम् । मदाय ॥३॥

आ नो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि ।
वरीवृजत्स्थविरेभिः सुशिप्रास्मे दधद्वृषणं शुष्ममिन्द्र ॥४॥
आ । नः । विश्वाभिः । ऊति०भिः । स०जोषाः । ब्रह्म ।
जुषाणः । हरि०अश्व । याहि ॥ वरीवृजत् । स्थविरेभिः ।
सु०शिप्र । अस्मे इति । दधत् । वृषणम् । शुष्मम् । इन्द्र ॥४॥

एष स्तोमो मह उग्राय वाहे धुरीऽइवात्यो न वाजयन्नधायि ।
इन्द्र त्वायमर्क ऽईट्टे वसूनां दिवीव द्यामधि नः श्रोमतं धाः ॥५॥
एषः । स्तोमः । महे । उग्राय । वाहे । धुरिऽइव । अत्यः । न ।
वाजयन् । अधायि ॥ इन्द्र । त्वा । अयम् । अर्कः । ईट्टे ।
वसूनाम् । दिविऽइव । द्याम् । अधि । नः । श्रोमतम् । धाः ॥५॥

एवा न ऽइन्द्र वार्यस्य पूर्द्धि प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः॥६॥ (८) [ ३४० ]
एव । नः । इन्द्र । वार्यस्य । पूर्द्धि । प्र । ते । महीम् ।
सु०मतिम् । वेविदाम ॥ इषम् । पिन्व । मघवत्०भ्यः ।
सु०वीराम् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥६॥

# ( २५ )

६ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

**आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः ।**

**पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो विष्वद्र्यग्वि चारीत् ॥१॥**

आ । ते । महः । इन्द्र । ऊती । उग्र । स०मन्यवः । यत् ।

सम्०अरन्त । सेनाः ॥ पताति । दिद्युत् । नर्यस्य । बाह्वोः ।

मा । ते । मनः । विष्वद्र्यक् । वि । चारीत् ॥१॥

**नि दुर्ग ऽइन्द्र श्नथिह्यमित्राँनभि ये नो मर्त्तासो अमन्ति ।**

**आरे तं शंसं कृणुहि निनित्सो रा नो भर सम्भरणं वसूनाम् ॥२॥**

नि । दुः०गे । इन्द्र । श्नथिहि । अमित्रान् । अभि । ये ।

नः । मर्त्तासः । अमन्ति ॥ आरे । तम् । शंसम् । कृणुहि ।

निनित्सोः । आ । नः । भर । सम्०भरणम् । वसूनाम् ॥२॥

**शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा ऽउत रातिरस्तु ।**

**जहि वधर्वनुषो मर्त्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि ॥३॥**

शतम् । ते । शिप्रिन् । ऊतयः । सु०दासे । सहस्रम् । शंसाः ।

उत । रातिः । अस्तु ॥ जहि । वधः । वनुषः । मर्त्त्यस्य ।

अस्मे इति । द्युम्नम् । अधि । रत्नम् । च । धेहि ॥३॥

**त्वावतो हीन्द्र क्रत्वेऽअस्मि त्वावतोऽवितुः शूर रातौ ।**

**विश्वेदहानि तविषीवऽउग्रँ ऽओकः कृणुष्व हरिवो न मर्धीः ॥४॥**

त्वा०वतः । हि । इन्द्र । क्रत्वे । अस्मि । त्वा०वतः ।

अवितुः । शूर । रातौ ॥ विश्वा । इत् । अहानि । तविषी०वः ।

उग्र । ओकः । कृणुष्व । हरि०वः । न । मर्धीः ॥४॥

कुत्सा ऽएते हर्यश्वाय शूषमिन्द्रे सहो देवजूतमियानाः ।
सत्रा कृधि सुहना शूर वृत्रा वयं तरुत्राः सनुयाम वाजम् ॥५॥
कुत्साः । एते । हरिऽअश्वाय । शूषम् । इन्द्रे । सहः ।
देवऽजूतम् । इयानाः ॥ सत्रा । कृधि । सुऽहना ।
शूर । वृत्रा । वयम् । तरुत्राः । सनुयाम । वाजम् ॥५॥

एवा न ऽइन्द्र वार्यस्य पूर्द्धि प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः॥६॥ (९) [ ३४६ ]
एव । नः । इन्द्र । वार्यस्य । पूर्द्धि । प्र । ते । महीम् ।
सुऽमतिम् । वेविदाम ॥ इषम् । पिन्व । मघवत्ऽभ्यः ।
सुऽवीराम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

## ( २६ )

५ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

न सोम ऽइन्द्रमसुतो ममाद नाब्रह्माणो मघवानं सुतासः ।
तस्मा ऽउक्थं जनये यज्जुजोषन्नृवन्नवीयः शृणवद्यथा नः ॥१॥
न । सोमः । इन्द्रम् । असुतः । ममाद । न । अब्रह्माणः ।
मघऽवानम् । सुतासः ॥ तस्मै । उक्थम् । जनये । यत् ।
जुजोषत् । नृऽवत् । नवीयः । शृणवत् । यथा । नः ॥१॥

उक्थउक्थे सोम ऽइन्द्रं ममाद नीथेनीथे मघवानं सुतासः ।
यदीं सबाधः पितरं न पुत्राः समानदक्षा ऽअवसे हवन्ते ॥२॥
उक्थेऽउक्थे । सोमः । इन्द्रम् । ममाद । नीथेऽनीथे ।
मघऽवानम् । सुतासः ॥ यत् । ईम् । सऽबाधः ।
पितरम् । न । पुत्राः । समानऽदक्षाः । अवसे । हवन्ते ॥२॥

चकार ता कृणवन्नूनमन्या यानि ब्रुवन्ति वेधसः सुतेषु ।
जनीरिव पतिरेकः समानो नि मामृजे पुर इन्द्रः सु सर्वाः ॥३॥
चकार । ता । कृणवत् । नूनम् । अन्या । यानि ।
ब्रुवन्ति । वेधसः । सुतेषु ॥ जनीःऽइव । पतिः । एकः ।
समानः । नि । ममृजे । पुरः । इन्द्रः । सु । सर्वाः ॥३॥

एवा तमाहुरुत शृण्व इन्द्र एको विभक्ता तरणिर्मघानाम् ।
मिथस्तुर ऊतयो यस्य पूर्वीरस्मे भद्राणि सश्चत प्रियाणि ॥४॥
एव । तम् । आहुः । उत । शृण्वे । इन्द्रः । एकः ।
विऽभक्ता । तरणिः । मघानाम् ॥ मिथःऽतुरः । ऊतयः ।
यस्य । पूर्वीः । अस्मे इति । भद्राणि । सश्चत । प्रियाणि ॥४॥

एवा वसिष्ठ इन्द्रमूतये नॄन्कृष्टीनां वृषभं सुते गृणाति ।
सहस्त्रिण उप नो माहि वाजान्यूयं पात स्वस्तिभिः सदा नः॥५॥ ( १० ) [ ३५१ ]
एव । वसिष्ठः । इन्द्रम् । ऊतये । नॄन् । कृष्टीनाम् ।
वृषभम् । सुते । गृणाति ॥ सहस्त्रिणः । उप । नः ।
माहि । वाजान् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

# ( २७ )

५ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥१॥
इन्द्रम् । नरः । नेमऽधिता । हवन्ते । यत् । पार्याः ।
युनजते । धियः । ताः ॥ शूरः । नृऽसाता । शवसः ।
चकानः । आ । गोऽमति । व्रजे । भज । त्वम् । नः ॥१॥

य ऽइन्द्र शुष्मो मघवन्ते ऽअस्ति शिक्षा सखिभ्यः पुरुहूत नृभ्यः ।
त्वं हि दृळ्हा मघवन्विचैता ऽअपा वृधि परिवृतं न राधः ॥२॥
यः । इन्द्र । शुष्मः । मघ०वन् । ते । अस्ति । शिक्ष ।
सखि०भ्यः । पुरु०हूत । नृ०भ्यः ॥ त्वम् । हि । दृळ्हा ।
मघ०वन् । वि०चेताः । अप । वृधि । परि०वृतम् । न । राधः ॥२॥

इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि चोदद्राध ऽउपस्तुतश्चिदर्वाक् ॥३॥
इन्द्रः । राजा । जगतः । चर्षणीनाम् । अधि । क्षमि ।
विषु०रूपम् । यत् । अस्ति ॥ ततः । ददाति । दाशुषे ।
वसूनि । चोदत् । राधः । उप०स्तुतः । चित् । अर्वाक् ॥३॥

नू चिन्न ऽइन्द्रो मघवा सहूती दानो वाजं नि यमते न ऽऊती ।
अनूना यस्य दक्षिणा पीपाय वामं नृभ्यो ऽअभिवीता सखिभ्यः ॥४॥
नु । चित् । नः । इन्द्रः । मघ०वा । स०हूती । दानः । वाजम् ।
नि । यमते । नः । ऊती ॥ अनूना । यस्य । दक्षिणा ।
पीपाय । वामम् । नृ०भ्यः । अभि०वीता । सखि०भ्यः ॥४॥

नू ऽइन्द्र राये वरिवस्कृधी न ऽआ ते मनो ववृत्याम मघाय ।
गोमदश्वावद्रथवद्व्यन्तो यूयं पात स्वस्तिभिः सदा नः ॥५॥ (११) [३५६]
नु । इन्द्र । राये । वरिवः । कृधि । नः । आ । ते । मनः ।
ववृत्याम । मघाय ॥ गो०मत् । अश्व०वत् । रथ०वत् ।
व्यन्तः । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥५॥

# ( २८ )

५ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

ब्रह्मा ण इन्द्रोप याहि विद्वानर्वाञ्चस्ते हरयः सन्तु युक्ताः ।
विश्वे चिद्धि त्वा विहवन्त मर्ता अस्माकमिच्छृणुहि विश्वमिन्व ॥१॥
ब्रह्म । नः । इन्द्र । उप । याहि । विद्वान् । अर्वाञ्चः । ते ।
हरयः । सन्तु । युक्ताः ॥ विश्वे । चित् । हि । त्वा । वि॰हवन्त ।
मर्ताः । अस्माकम् । इत् । शृणुहि । विश्वम्॰इन्व ॥१॥

हवं त इन्द्र महिमा व्यानड् ब्रह्म यत्पासि शवसिन्नृषीणाम् ।
आ यद्वज्रं दधिषे हस्त उग्र घोरः सन्क्रत्वा जनिष्ठा अषाळ्हः ॥२॥
हवम् । ते । इन्द्र । महिमा । वि । आनट् । ब्रह्म । यत् । पासि ।
शवसिन् । ऋषीणाम् ॥ आ । यत् । वज्रम् । दधिषे । हस्ते ।
उग्र । घोरः । सन् । क्रत्वा । जनिष्ठाः । अषाळ्हः ॥२॥

तव प्रणीतीन्द्र जोहुवानान्त्सं यन्नॄन्न रोदसी निनेथ ।
महे क्षत्राय शवसे हि जज्ञेऽतूतुजिं चित्तूतुजिरशिश्नत् ॥३॥
तव । प्र॰नीती । इन्द्र । जोहुवानान् । सम् । यत् । नॄन् ।
न । रोदसी इति । निनेथ ॥ महे । क्षत्राय । शवसे । हि ।
जज्ञे । अतूतुजिम् । चित् । तूतुजिः । अशिश्नत् ॥३॥

एभिर्न इन्द्राहभिर्दशस्य दुर्मित्रासो हि क्षितयः पवन्ते ।
प्रति यच्चष्टे अनृतमनेना अव द्विता वरुणो मायी नः सात् ॥४॥
एभिः । नः । इन्द्र । अह॰भिः । दशस्य । दुः॰मित्रासः ।
हि । क्षितयः । पवन्ते ॥ प्रति । यत् । चष्टे । अनृतम् ।
अनेनाः । अव । द्विता । वरुणः । मायी । नः । सात् ॥४॥

**वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्ददन्नः ।**

**यो ऽअर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः॥५॥ ( १२ ) [ ३६१ ]**

वोचेम । इत् । इन्द्रम् । मघ०वानम् । एनम् । महः । रायः ।
राधसः । यत् । ददत् । नः ॥ यः । अर्चतः । ब्रह्म०कृतिम् ।
अविष्ठः । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥५॥

## ( २९ )

५ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

**अयं सोम ऽइन्द्र तुभ्यं सुन्व ऽआ तु प्र याहि हरिवस्तदोकाः ।**

**पिबा त्वस्य सुषुतस्य चारोर्ददो मघानि मघवन्नियानः ॥१॥**

अयम् । सोमः । इन्द्र । तुभ्यम् । सुन्वे । आ । तु । प्र ।
याहि । हरि०वः । तत्०ओकाः ॥ पिब । तु । अस्य ।
सु०सुतस्य । चारोः । ददः । मघानि । मघ०वन् । इयानः ॥१॥

**ब्रह्मन्वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनो हरिभिर्याहि तूयम् ।**

**अस्मिन्नू षु सवने मादयस्वोप ब्रह्माणि शृणव ऽइमा नः ॥२॥**

ब्रह्मन् । वीर । ब्रह्म०कृतिम् । जुषाणः । अर्वाचीनः ।
हरि०भिः । याहि । तूयम् ॥ अस्मिन् । ऊँ इति । सु ।
सवने । मादयस्व । उप । ब्रह्माणि । शृणवः । इमा । नः ॥२॥

**का ते ऽअस्त्यरंकृतिः सूक्तैः कदा नूनं ते मघवन्दाशेम ।**

**विश्वा मतीरा ततने त्वायाधा म ऽइन्द्र शृणवो हवेमा ॥३॥**

का । ते । अस्ति । अरम्०कृतिः । सु०उक्तैः । कदा । नूनम् ।
ते । मघ०वन् । दाशेम ॥ विश्वाः । मतीः । आ । ततने ।
त्वा०या । अध । मे । इन्द्र । शृणवः । हवा । इमा ॥३॥

**उतो घा ते पुरुष्या३ इदासन्येषां पूर्वेषामशृणोर्ऋषीणाम् ।**
**अधाहं त्वा मघवञ्जोहवीमि त्वं न ऽइन्द्रासि प्रमतिः पितेव ॥४॥**
उतो इति । घ । ते । पुरुष्याः । इत् । आसन् । येषाम् । पूर्वेषाम् ।
अशृणोः । ऋषीणाम् ॥ अध । अहम् । त्वा । मघ०वन् ।
जोहवीमि । त्वम् । नः । इन्द्र । असि । प्र०मतिः । पिताऽइव ॥४॥

**वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्ददन्नः ।**
**यो ऽअर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः॥५॥ ( १३ ) [ ३६६ ]**
वोचेम । इत् । इन्द्रम् । मघ०वानम् । एनम् । महः । रायः ।
राधसः । यत् । ददत् । नः ॥ यः । अर्चतः । ब्रह्म०कृतिम् ।
अविष्ठः । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥५॥

## ( ३० )

५ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । त्रिष्टुप् ।

**आ नो देव शवसा याहि शुष्मिन्भवा वृध ऽइन्द्र रायो ऽअस्य ।**
**महे नृम्णाय नृपते सुवज्र महि क्षत्राय पौंस्याय शूर ॥१॥**
आ । नः । देव । शवसा । याहि । शुष्मिन् । भव ।
वृधः । इन्द्र । रायः । अस्य ॥ महे । नृम्णाय । नृ०पते ।
सु०वज्र । महि । क्षत्राय । पौंस्याय । शूर ॥१॥

**हवन्त उ त्वा हव्यं विवाचि तनूषु शूराः सूर्यस्य सातौ ।**
**त्वं विश्वेषु सेन्यो जनेषु त्वं वृत्राणि रन्धया सुहन्तु ॥२॥**
हवन्ते । ऊँ इति । त्वा । हव्यम् । वि०वाचि । तनूषु ।
शूराः । सूर्यस्य । सातौ ॥ त्वम् । विश्वेषु । सेन्यः ।
जनेषु । त्वम् । वृत्राणि । रन्धय । सु०हन्तु ॥२॥

**अहा॒ यदि॑न्द्र सु॒दिना॑ व्यु॒च्छान्दधो॒ यत्के॒तुमु॑प॒मं स॒मत्सु॑ ।**

**न्य१॒॑ग्निः सी॑दद॒सुरो॒ न होता॑ हुवा॒नो ऽअत्र॑ सु॒भगा॑य दे॒वान् ॥३॥**

अहा॑ । यत् । इ॒न्द्र॒ । सु॒०दिना॑ । वि॒०उ॒च्छान् । दधः॑ । यत् ।
के॒तुम् । उ॒प॒०मम् । स॒मत्०सु॑ ॥ नि । अ॒ग्निः । सी॒द॒त् ।
असु॑रः । न । होता॑ । हु॒वा॒नः । अत्र॑ । सु॒०भगा॑य । दे॒वान् ॥३॥

**व॒यं ते त॑ ऽइन्द्र॒ ये च॑ देव॒ स्तव॑न्त शूर॒ दद॑तो म॒घानि॑ ।**

**यच्छा॑ सू॒रिभ्य॑ ऽउप॒मं वरू॑थं स्वा॒भुवो॑ जर॒णाम॑श्नवन्त ॥४॥**

व॒यम् । ते । ते॒ । इ॒न्द्र॒ । ये । च॒ । दे॒व॒ । स्तव॑न्त । शू॒र॒ ।
दद॑तः । म॒घानि॑ ॥ यच्छ॑ । सू॒रि॑०भ्यः॑ । उ॒प॒०मम् ।
वरू॑थम् । सु॒०आ॒भुवः॑ । ज॒र॒णाम् । अ॒श्न॒व॒न्त॒ ॥४॥

**वो॒चेमेदिन्द्रं॑ म॒घवा॑नमेनं म॒हो रा॒यो राध॑सो॒ यद्दद॑न्नः ।**

**यो ऽअर्च॑तो॒ ब्रह्म॑कृति॒मवि॑ष्ठो यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः॥५॥ (१४) [३७१]**

वो॒चेम॑ । इत् । इन्द्र॑म् । म॒घ०वा॑नम् । ए॒न॒म् । म॒हः । रा॒यः ।
राध॑सः । यत् । दद॑त् । नः॒ ॥ यः । अर्च॑तः । ब्रह्म॑०कृतिम् ।
अवि॑ष्ठः । यू॒यम् । पा॒त॒ । स्व॒स्ति०भिः॑ । सदा॑ । नः॒ ॥५॥

## (३१)

१२ मैत्रावरुणिर्वसिष्ठः । इन्द्रः । गायत्री, १०-१२ विराट् ।

**प्र व॒ ऽइन्द्रा॑य॒ माद॑नं॒ हर्य॑श्वाय गायत ।**

**सखा॑यः सोम॒पाव्ने॑ ॥१॥**

प्र । व॒ः । इन्द्रा॑य । माद॑नम् । हरि॑०अश्वाय । गा॒य॒त॒ ॥
सखा॑यः । सो॒म॒०पाव्ने॑ ॥१॥

**शंसेदुक्थं सुदानव ऽउत द्युक्षं यथा नरः ।**

**चकृमा सत्यराधसे ॥२॥**

शंस । इत् । उक्थम् । सु०दानवे । उत । द्युक्षम् । यथा । नरः ॥

चकृम । सत्य०राधसे ॥२॥

**त्वं न ऽइन्द्र वाजयुस्त्वं गव्युः शतक्रतो ।**

**त्वं हिरण्ययुर्वसो ॥३॥**

त्वम् । नः । इन्द्र । वाज०युः । त्वम् । गव्युः । शतक्रतो इति शत०क्रतो ॥

त्वम् । हिरण्य०युः । वसो इति ॥३॥

**वयमिन्द्र त्वायवोऽभि प्र णोनुमो वृषन् ।**

**विद्धी त्वस्य नो वसो ॥४॥**

वयम् । इन्द्र । त्वा०यवः । अभि । प्र । नोनुमः । वृषन् ॥

विद्धि । तु । अस्य । नः । वसो इति ॥४॥

**मा नो निदे च वक्तवेऽर्यो रन्धीरराव्णे ।**

**त्वे ऽअपि क्रतुर्मम ॥५॥**

मा । नः । निदे । च । वक्तवे । अर्यः । रन्धीः । अराव्णे ॥

त्वे इति । अपि । क्रतुः । मम ॥५॥

**त्वं वर्मासि सप्रथः पुरोयोधश्च वृत्रहन् ।**

**त्वया प्रति ब्रुवे युजा ॥६॥ ( १५ )**

त्वम् । वर्म । असि । स०प्रथः । पुरः०योधः । च । वृत्र०हन् ॥

त्वया । प्रति । ब्रुवे । युजा ॥६॥

महाँ उतासि यस्य तेऽनु स्वधावरी सहः ।
मम्नाते इन्द्र रोदसी ॥७॥
महान् । उत । असि । यस्य । ते । अनु । स्वधावरी इति स्वधा०वरी । सहः ॥
मम्नाते इति । इन्द्र । रोदसी इति ॥७॥

तं त्वा मरुत्वती परि भुवद्वाणी सयावरी ।
नक्षमाणा सह द्युभिः ॥८॥
तम् । त्वा । मरुत्वती । परि । भुवत् । वाणी । स०यावरी ॥
नक्षमाणा । सह । द्यु०भिः ॥८॥

ऊर्ध्वासस्त्वान्विन्दवो भुवन्दस्ममुप द्यवि ।
सं ते नमन्त कृष्टयः ॥९॥
ऊर्ध्वासः । त्वा । अनु । इन्दवः । भुवन् । दस्मम् । उप । द्यवि ॥
सम् । ते । नमन्त । कृष्टयः ॥९॥

प्र वो महे महिवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चरा चर्षणिप्राः ॥१०॥
प्र । वः । महे । महि०वृधे । भरध्वम् । प्र०चेतसे । प्र । सु०मतिम् । कृणुध्वम् ॥
विशः । पूर्वीः । प्र । चर । चर्षणि०प्राः ॥१०॥

उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः ।
तस्य व्रतानि न मिनन्ति धीराः ॥११॥
उरु०व्यचसे । महिने । सु०वृक्तिम् । इन्द्राय । ब्रह्म । जनयन्त । विप्राः ॥
तस्य । व्रतानि । न । मिनन्ति । धीराः ॥११॥

इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।

हर्यश्वाय बर्हया समापीन् ॥१२॥ (१६) [ ३८३ ]

इन्द्रम् । वाणीः । अनुत्त०मन्युम् । एव । सत्रा । राजानम् । दधिरे । सहध्यै ॥

हरि०अश्वाय । बर्हय । सम् । आपीन् ॥१२॥

# ( ३२ )

२७ ( १-२५ ) मैत्रावरुणिर्वसिष्ठः, २६ पूर्वार्द्धर्चस्य शक्तिर्वासिष्ठो वा ( शाट्यायने ब्राह्मणे ) २६-२७ शक्तिर्वासिष्ठो वा ( ताण्डके ब्राह्मणे ) । इन्द्रः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ), ३ द्विपदा विराट् ।

मो षु त्वा वाघतश्चनारे ऽअस्मन्नि रीरमन् ।

आरात्ताच्चित्सधमादं न ऽआ गहीह वा सन्नुप श्रुधि ॥१॥

मो इति । सु । त्वा । वाघतः । चन । आरे । अस्मत् ।

नि । रीरमन् ॥ आरात्तात् । चित् । सध०मादम् ।

नः । आ । गहि । इह । वा । सन् । उप । श्रुधि ॥१॥

इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष ऽआसते ।

इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥२॥

इमे । हि । ते । ब्रह्म०कृतः । सुते । सचा । मधौ । न । मक्षः । आसते ॥

इन्द्रे । कामम् । जरितारः । वसु०यवः । रथे । न । पादम् । आ । दधुः ॥२॥

रायस्कामो वज्रहस्तं सुदक्षिणं पुत्रो न पितरं हुवे ॥३॥

रायःऽकामः । वज्र०हस्तम् । सु०दक्षिणम् । पुत्रः । न । पितरम् । हुवे ॥३॥

इम ऽइन्द्राय सुन्विरे सोमासो दध्याशिरः ।

ताँ ऽआ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक ऽआ ॥४॥

इमे । इन्द्राय । सुन्विरे । सोमासः । दधि॰आशिरः ॥
तान् । आ । मदाय । वज्र॰हस्त । पीतये । हरि॰भ्याम् । याहि । ओकः । आ ॥४॥

**श्रवच्छ्रुत्कर्ण ऽईयते वसूनां नू चिन्नो मर्द्धिषद्गिरः ।**
**सद्यश्चिद्यः सहस्राणि शता ददन्नकिर्दित्सन्तमा मिनत् ॥५॥ (१७)**
श्रवत् । श्रुत्॰कर्णः । ईयते । वसूनाम् । नु । चित् । नः ।
मर्द्धिषत् । गिरः ॥ सद्यः । चित् । यः । सहस्राणि ।
शता । ददत् । नकिः । दित्सन्तम् । आ । मिनत् ॥५॥

**स वीरो ऽअप्रतिष्कुत ऽइन्द्रेण शूशुवे नृभिः ।**
**यस्ते गभीरा सवनानि वृत्रहन्त्सुनोत्या च धावति ॥६॥**
सः । वीरः । अप्रति॰स्कुतः । इन्द्रेण । शूशुवे । नृ॰भिः ॥
यः । ते । गभीरा । सवनानि । वृत्र॰हन् । सुनोति । आ । च । धावति ॥६॥

**भवा वरूथं मघवन्मघोनां यत्समजासि शर्द्धतः ।**
**वि त्वाहतस्य वेदनं भजेमह्या दूणाशो भरा गयम् ॥७॥**
भव । वरूथम् । मघ॰वन् । मघोनाम् । यत् ।
सम्॰अजासि । शर्द्धतः ॥ वि । त्वा॰हतस्य ।
वेदनम् । भजेमहि । आ । दुः॰नशः । भर । गयम् ॥७॥

**सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे ।**
**पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥८॥**
सुनोत । सोम॰पाव्ने । सोमम् । इन्द्राय । वज्रिणे ॥
पचत । पक्तीः । अवसे । कृणुध्वम् । इत् । पृणन् । इत् । पृणते । मयः ॥८॥

मा स्रेधत सोमिनो दक्षता महे कृणुध्वं रायऽआतुजे ।
तरणिरिज्जयति क्षेति पुष्यति न देवासः कवत्नवे ॥९॥
मा । स्रेधत । सोमिनः । दक्षत । महे । कृणुध्वम् । राये । आ॰तुजे ॥
तरणिः । इत् । जयति । क्षेति । पुष्यति । न । देवासः । कवत्नवे ॥९॥

नकिः सुदासो रथं पर्यास न रीरमत् ।
इन्द्रो यस्याविता यस्य मरुतो गमत्स गोमति व्रजे ॥१०॥ (१८)
नकिः । सु॰दासः । रथम् । परि । आस । न । रीरमत् ॥
इन्द्रः । यस्य । अविता । यस्य । मरुतः । गमत् । सः । गो॰मति । व्रजे ॥१०॥

गमद्वाजं वाजयन्निन्द्र मर्त्यो यस्य त्वमविता भुवः ।
अस्माकं बोध्यविता रथानामस्माकं शूर नृणाम् ॥११॥
गमत् । वाजम् । वाजयन् । इन्द्र । मर्त्यः । यस्य ।
त्वम् । अविता । भुवः ॥ अस्माकम् । बोधि ।
अविता । रथानाम् । अस्माकम् । शूर । नृणाम् ॥११॥

उदिन्न्वस्य रिच्यतेऽशो धनं न जिग्युषः ।
य ऽइन्द्रो हरिवान्न दभन्ति तं रिपो दक्षं दधाति सोमिनि ॥१२॥
उत् । इत् । नु । अस्य । रिच्यते । अंशः । धनम् । न । जिग्युषः ॥
यः । इन्द्रः । हरि॰वान् । न । दभन्ति । तम् । रिपः । दक्षम् । दधाति । सोमिनि ॥१२॥

मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा ।
पूर्वीश्चन प्रसितयस्तरन्ति तं य ऽइन्द्रे कर्मणा भुवत् ॥१३॥
मन्त्रम् । अखर्वम् । सु॰धितम् । सु॰पेशसम् । दधात । यज्ञियेषु । आ ॥
पूर्वीः । चन । प्र॰सितयः । तरन्ति । तम् । यः । इन्द्रे । कर्मणा । भुवत् ॥१३॥

**कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति ।**

**श्रद्धा ऽइत्ते मघवन्पार्ये दिवि वाजी वाजं सिषासति ॥१४॥**

कः । तम् । इन्द्र । त्वा०वसुम् । आ । मर्त्यः । दधर्षति ॥

श्रद्धा । इत् । ते । मघ०वन् । पार्ये । दिवि । वाजी । वाजम् । सिसासति ॥१४॥

**मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।**

**तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥१५॥ (१९)**

मघोनः । स्म । वृत्र०हत्येषु । चोदय । ये । ददति ।

प्रिया । वसु ॥ तव । प्र०नीती । हरि०अश्व ।

सूरि०भिः । विश्वा । तरेम । दुः२इता ॥१५॥

**तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।**

**सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥१६॥**

तव । इत् । इन्द्र । अवमम् । वसु । त्वम् ।

पुष्यसि । मध्यमम् ॥ सत्रा । विश्वस्य । परमस्य ।

राजसि । नकिः । त्वा । गोषु । वृण्वते ॥१६॥

**त्वं विश्वस्य धनदा ऽअसि श्रुतो य ऽईं भवन्त्याजयः ।**

**तवायं विश्वः पुरुहूत पार्थिवोऽवस्युर्नाम भिक्षते ॥१७॥**

त्वम् । विश्वस्य । धन०दाः । असि । श्रुतः । ये ।

ईम् । भवन्ति । आजयः ॥ तव । अयम् । विश्वः ।

पुरु०हूत । पार्थिवः । अवस्युः । नाम । भिक्षते ॥१७॥

**यदिन्द्र यावतस्त्वमेतावदहमीशीय ।**

**स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रासीय ॥१८॥**

यत् । इन्द्र । यावंतः । त्वम् । एतावंत् । अहम् । ईशींय ॥
स्तोतारंम् । इत् । दिधिषेय । रदवसो इतिं रद०वसो । न । पाप०त्वायं । रासीय ॥१८॥

**शिक्षेयमिन्महयते दिवेदिवे राय ऽआ कुहचिद्विदे ।**
**नहि त्वदन्यन्मघवन्न ऽआप्यं वस्यो ऽअस्ति पिता चन ॥१९॥**
शिक्षेयम् । इत् । मह०यते । दिवे०दिवे । रायः । आ ।
कुहचित्०विदे ॥ नहि । त्वत् । अन्यत् । मघ०वन् ।
नः । आप्यम् । वस्यः । अस्ति । पिता । चन ॥१९॥

**तरणिरित्सिषासति वाजं पुरंध्या युजा ।**
**आ व ऽइन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वम् ॥२०॥ ( २० )**
तरणिः । इत् । सिसासति । वाजम् । पुरम्०ध्या । युजा ॥
आ । वः । इन्द्रम् । पुरु०हूतम् । नमे । गिरा । नेमिम् । तष्टाऽइव । सु०द्र्वम् ॥२०॥

**न दुष्टुती मर्त्यो विन्दते वसु न स्रेधन्तं रयिर्नशत् ।**
**सुशक्तिरिन्मघवन्तुभ्यं मावते देष्णं यत्पार्ये दिवि ॥२१॥**
न । दुः२स्तुती । मर्त्यः । विन्दते । वसु । न । स्रेधन्तम् ।
रयिः । नशत् ॥ सु०शक्तिः । इत् । मघ०वन् । तुभ्यम् ।
मा०वते । देष्णम् । यत् । पार्ये । दिवि ॥२१॥

**अभि त्वा शूर नोनुमोऽदुग्धाइव धेनवः ।**
**ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥२२॥**
अभि । त्वा । शूर । नोनुमः । अदुग्धाःऽइव । धेनवः ॥
ईशानम् । अस्य । जगतः । स्वः२दृशम् । ईशानम् । इन्द्र । तस्थुषः ॥२२॥

न त्वावाँ ऽअन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥२३॥
न । त्वाऽवान् । अन्यः । दिव्यः । न । पार्थिवः । न ।
जातः । न । जनिष्यते ॥ अश्वऽयन्तः । मघऽवन् ।
इन्द्र । वाजिनः । गव्यन्तः । त्वा । हवामहे ॥२३॥

अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्सनादसि भरेभरे च हव्यः ॥२४॥
अभि । सतः । तत् । आ । भर । इन्द्र । ज्यायः । कनीयसः ॥
पुरुऽवसुः । हि । मघऽवन् । सनात् । असि । भरेऽभरे । च । हव्यः ॥२४॥

परा णुदस्व मघवन्नमित्रान्त्सुवेदा नो वसू कृधि ।
अस्माकं बोध्यविता महाधने भवा वृधः सखीनाम् ॥२५॥
परा । नुदस्व । मघऽवन् । अमित्रान् । सुऽवेदा । नः । वसु । कृधि ॥
अस्माकम् । बोधि । अविता । महाऽधने । भव । वृधः । सखीनाम् ॥२५॥

इन्द्र क्रतुं न ऽआ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो ऽअस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥२६॥
इन्द्र । क्रतुम् । नः । आ । भर । पिता । पुत्रेभ्यः । यथा ॥
शिक्ष । नः । अस्मिन् । पुरुऽहूत । यामनि । जीवाः । ज्योतिः । अशीमहि ॥२६॥

मा नो ऽअज्ञाता वृजना दुराध्यो३ माशिवासो ऽअव क्रमुः ।
त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि ॥२७॥ (२१) [४१०]
मा । नः । अज्ञाताः । वृजनाः । दुःऽआध्यः । मा ।
अशिवासः । अव । क्रमुः ॥ त्वया । वयम् । प्रऽवतः ।
शश्वतीः । अपः । अति । शूर । तरामसि ॥२७॥

# ( ३३ )

१४ (१-९) मैत्रावरुणिर्वसिष्ठः, (१०-१४ वसिष्ठपुत्राः ।
१-९ वसिष्ठपुत्रा इन्द्रो वा, १०-१४ वसिष्ठः । त्रिष्टुप् ।

**श्वित्यञ्चो मा दक्षिणतस्कपर्दा धियंजिन्वासो ऽअभि हि प्रमन्दुः ।**
**उत्तिष्ठन्वोचे परि बर्हिषो नॄन्न मे दूरादवितवे वसिष्ठाः ॥१॥**
श्वित्यञ्चः । मा । दक्षिणतःऽकपर्दाः । धियम्ऽजिन्वासः ।
अभि । हि । प्रऽमन्दुः ॥ उत्ऽतिष्ठन् । वोचे । परि ।
बर्हिषः । नॄन् । न । मे । दूरात् । अवितवे । वसिष्ठाः ॥१॥

**दूरादिन्द्रमनयन्ना सुतेन तिरो वैशन्तमति पान्तमुग्रम् ।**
**पाशद्युम्नस्य वायतस्य सोमात्सुतादिन्द्रोऽवृणीता वसिष्ठान् ॥२॥**
दूरात् । इन्द्रम् । अनयन् । आ । सुतेन । तिरः । वैशन्तम् ।
अति । पान्तम् । उग्रम् ॥ पाशऽद्युम्नस्य । वायतस्य ।
सोमात् । सुतात् । इन्द्रः । अवृणीत । वसिष्ठान् ॥२॥

**एवेन्नु कं सिन्धुमेभिस्ततारेवेन्नु कं भेदमेभिर्जघान ।**
**एवेन्नु कं दाशराज्ञे सुदासं प्रावदिन्द्रो ब्रह्मणा वो वसिष्ठाः ॥३॥**
एव । इत् । नु । कम् । सिन्धुम् । एभिः । ततार । एव । इत् ।
नु । कम् । भेदम् । एभिः । जघान ॥ एव । इत् । नु । कम् ।
दाशऽराज्ञे । सुऽदासम् । प्र । आवत् । इन्द्रः । ब्रह्मणा । वः । वसिष्ठाः ॥३॥

**जुष्टी नरो ब्रह्मणा वः पितॄणामक्षमव्ययं न किला रिषाथ ।**
**यच्छक्वरीषु बृहता रवेणेन्द्रे शुष्ममदधाता वसिष्ठाः ॥४॥**
जुष्टी । नरः । ब्रह्मणा । वः । पितॄणाम् । अक्षम् । अव्ययम् ।
न । किल । रिषाथ ॥ यत् । शक्वरीषु । बृहता ।
रवेण । इन्द्रे । शुष्मम् । अदधात । वसिष्ठाः ॥४॥

उद्द्यामिवेत्तृष्णजो नाथितासोऽदीधयुर्दाशराज्ञे वृतासः ।
वसिष्ठस्य स्तुवत ऽइन्द्रो ऽअश्रोदुरुं तृत्सुभ्यो ऽअकृणोदु लोकम् ॥५॥ ( २२ )
उत् । द्याम्ऽइव । इत् । तृष्ण०जः । नाथितासः । अदीधयुः ।
दाश०राज्ञे । वृतासः ॥ वसिष्ठस्य । स्तुवतः । इन्द्रः ।
अश्रोत् । उरुम् । तृत्सु०भ्यः । अकृणोत् । ॐ इति । लोकम् ॥५॥

दण्डाइवेद्गोअजनास ऽआसन्परिच्छिन्ना भरता ऽअर्भकासः ।
अभवच्च पुरएता वसिष्ठ ऽआदित्तृत्सूनां विशो ऽअप्रथन्त ॥६॥
दण्डाःऽइव । इत् । गो०अजनासः । आसन् । परि०च्छिन्नाः ।
भरताः । अर्भकासः ॥ अभवत् । च । पुरः२एता ।
वसिष्ठः । आत् । इत् । तृत्सूनाम् । विशः । अप्रथन्त ॥६॥

त्रयः कृण्वन्ति भुवनेषु रेतस्तिस्रः प्रजा ऽआर्या ज्योतिरग्राः ।
त्रयो घर्मास ऽउषसं सचन्ते सर्वाँ ऽइत्ताँ ऽअनु विदुर्वसिष्ठाः ॥७॥
त्रयः । कृण्वन्ति । भुवनेषु । रेतः । तिस्रः । प्र०जाः ।
आर्याः । ज्योतिः२अग्राः ॥ त्रयः । घर्मासः । उषसम् ।
सचन्ते । सर्वान् । इत् । तान् । अनु । विदुः । वसिष्ठाः ॥७॥

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः ।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा ऽअन्वेतवे वः ॥८॥
सूर्यस्यऽइव । वक्षथः । ज्योतिः । एषाम् । समुद्रस्यऽइव ।
महिमा । गभीरः ॥ वातस्यऽइव । प्र०जवः । न ।
अन्येन । स्तोमः । वसिष्ठाः । अनु०एतवे । वः ॥८॥

त ऽइन्निण्यं हृदयस्य प्रकेतैः सहस्रवल्शमभि सं चरन्ति ।
यमेन ततं परिधिं वयन्तोऽप्सरस ऽउप सेदुर्वसिष्ठाः ॥९॥

ते । इत् । निण्यम् । हृदयस्य । प्र०केतैः । सहस्र०वल्शम् ।
अभि । सम् । चरन्ति ॥ यमेन । ततम् । परि०धिम् ।
वयन्तः । अप्सरसः । उप । सेदुः । वसिष्ठाः ॥९॥

**विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा ।**
**तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आजभार ॥१०॥ ( २३ )**
वि०द्युतः । ज्योतिः । परि । सम्०जिहानम् । मित्रावरुणा ।
यत् । अपश्यताम् । त्वा ॥ तत् । ते । जन्म । उत । एकम् ।
वसिष्ठ । अगस्त्यः । यत् । त्वा । विशः । आ०जभार ॥१०॥

**उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि जातः ।**
**द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥११॥**
उत । असि । मैत्रावरुणः । वसिष्ठ । उर्वश्याः । ब्रह्मन् ।
मनसः । अधि । जातः ॥ द्रप्सम् । स्कन्नम् । ब्रह्मणा ।
दैव्येन । विश्वे । देवाः । पुष्करे । त्वा । अददन्त ॥११॥

**स प्रकेत ऽउभयस्य प्रविद्वान्त्सहस्रदान ऽउत वा सदानः ।**
**यमेन ततं परिधिं वयिष्यन्नप्सरसः परि जज्ञे वसिष्ठः ॥१२॥**
सः । प्र०केतः । उभयस्य । प्र०विद्वान् । सहस्र०दानः ।
उत । वा । स०दानः ॥ यमेन । ततम् । परि०धिम् ।
वयिष्यन् । अप्सरसः । परि । जज्ञे । वसिष्ठः ॥१२॥

**सत्रे ह जाताविषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम् ।**
**ततो ह मान ऽउदियाय मध्यात्ततो जातमृषिमाहुर्वसिष्ठम् ॥१३॥**
सत्रे । ह । जातौ । इषिता । नमःऽभिः । कुम्भे । रेतः ।
सिसिचतुः । समानम् ॥ ततः । ह । मानः । उत् । इयाय ।
मध्यात् । ततः । जातम् । ऋषिम् । आहुः । वसिष्ठम् ॥१३॥

उक्थभृतं सामभृतं बिभर्ति ग्रावाणं बिभ्रत्प्र वदात्यग्रे ।
उपैनमाध्वं सुमनस्यमाना ऽआ वो गच्छाति प्रतृदो वसिष्ठः ॥१४ ( २४ ) [ ४२४ ]
उक्थ०भृतम् । साम०भृतम् । बिभर्ति । ग्रावाणम् ।
बिभ्रत् । प्र । वदाति । अग्रे ॥ उप । एनम् । आध्वम् ।
सु०मनस्यमानाः । आ । वः । गच्छाति । प्र०तृदः । वसिष्ठः ॥

( ३४ ) [ अथ तृतीयोऽनुवाकः ॥३॥ सूक्तानि ३४-५५

२५ मैत्रावरुणिर्वसिष्ठः । विश्वे देवाः, १६ अहिः, १७ अहिर्बुध्न्यः । द्विपदा विराट्, २२-२५ त्रिष्टुप् ।

प्र शुक्रैतु देवी मनीषा ऽअस्मत्सुतष्टो रथो न वाजी ॥१॥
प्र । शुक्रा । एतु । देवी । मनीषा । अस्मत् । सु०तष्टः । रथः । न । वाजी ॥१॥

विदुः पृथिव्याः दिवो जनित्रं शृण्वन्त्यापो ऽअध क्षरन्तीः ॥२॥
विदुः । पृथिव्याः । दिवः । जनित्रम् । शृण्वन्ति । आपः । अध । क्षरन्तीः ॥२॥

आपश्चिदस्मै पिन्वन्त पृथ्वीर्वृत्रेषु शूरा मंसन्त ऽउग्राः ॥३॥
आपः । चित् । अस्मै । पिन्वन्त । पृथ्वीः । वृत्रेषु । शूराः । मंसन्ते । उग्राः ॥३॥

आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः ॥४॥
आ । धूः२सु । अस्मै । दधात । अश्वान् । इन्द्रः । न । वज्री । हिरण्य०बाहुः ॥४॥

अभि प्र स्थाताहेव यज्ञं यातेव पत्मन्त्मना हिनोत ॥५॥
अभि । प्र । स्थात । अहऽइव । यज्ञम् । याताऽइव । पत्मन् । त्मना । हिनोत ॥५॥

त्मना समत्सु हिनोत यज्ञं दधात केतुं जनाय वीरम् ॥६॥
त्मना । समत्०सु । हिनोत । यज्ञम् । दधात । केतुम् । जनाय । वीरम् ॥६॥

उदस्य शुष्मांद्भानुर्नार्त बिभर्ति भारं पृथिवी न भूमं ॥७॥
उत् । अस्य । शुष्मात् । भानुः । न । आर्त । बिभर्ति । भारम् । पृथिवी । न । भूमं ॥७॥

ह्वयामि देवाँ ऽअयांतुरग्ने साधन्नृतेन धियं दधामि ॥८॥
ह्वयामि । देवान् । अयांतुः । अग्ने । साधन् । ऋतेन । धियम् । दधामि ॥८॥

अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम् ॥९॥
अभि । वः । देवीम् । धियम् । दधिध्वम् । प्र । वः । देव०त्रा । वाचम् । कृणुध्वम् ॥९॥

आ चष्ट ऽआसां पाथो नदीनां वरुण ऽउग्र सहस्रचक्षाः ॥१०॥ ( २५ )
आ । चष्टे । आसाम् । पाथः । नदीनाम् । वरुणः । उग्रः । सहस्र०चक्षाः ॥१०॥

राजा राष्ट्रानां पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु ॥११॥
राजा । राष्ट्रानाम् । पेशः । नदीनाम् । अनुत्तम् । अस्मै । क्षत्रम् । विश्व०आयु ॥११॥

अविष्टो ऽअस्मान्विश्वासु विक्ष्वद्युं कृणोत शंसं निनित्सोः ॥१२॥
अविष्टो इति । अस्मान् । विश्वासु । विक्षु । अद्युम् । कृणोत । शंसम् । निनित्सोः ॥१२॥

व्येतु दिद्युद्द्विषामशेवा युयोत विष्वग्रपस्तनूनाम् ॥१३॥
वि । एतु । दिद्युत् । द्विषाम् । अशेवा । युयोत । विष्वक् । रपः । तनूनाम् ॥१३॥

अवीन्नो ऽअग्निर्हव्यान्नमोभिः प्रेष्ठो ऽअस्मा ऽअधायि स्तोमः ॥१४॥
अवीत् । नः । अग्निः । हव्य०अत् । नमः२भिः । प्रेष्ठः । अस्मै । अधायि । स्तोमः ॥१४॥

सजूर्देवेभिरपां नपातं सखायं कृध्वं शिवो नो ऽअस्तु ॥१५॥
स०जूः । देवेभिः । अपाम् । नपातम् । सखायम् । कृध्वम् । शिवः । नः । अस्तु ॥१५॥

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥१६॥
अप्०जाम् । उक्थैः । अहिम् । गृणीषे । बुध्ने । नदीनाम् । रजःऽसु । सीदन् ॥१६॥

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो ऽअस्य स्त्रिधदृतायोः ॥१७॥
मा । नः । अहिः । बुध्न्यः । रिषे । धात् । मा । यज्ञः । अस्य । स्त्रिधत् । ऋत०योः ॥१७॥

उत न ऽएषु नृषु श्रवो धुः प्र राये यन्तु शर्द्धन्तो ऽअर्यः ॥१८॥
उत । नः । एषु । नृषु । श्रवः । धुः । प्र । राये । यन्तु । शर्द्धन्तः । अर्यः ॥१८॥

तपन्ति शत्रुं स्वर्ण भूमा महासेनासो ऽअमेभिरेषाम् ॥१९॥
तपन्ति । शत्रुम् । स्वः । न । भूम । महा०सेनासः । अमेभिः । एषाम् ॥१९॥

आ यन्नः पत्नीर्गमन्त्यच्छा त्वष्टा सुपाणिर्दधातु वीरान् ॥२०॥ ( २६ )
आ । यत् । नः । पत्नीः । गमन्ति । अच्छ । त्वष्टा । सु०पाणिः । दधातु । वीरान् ॥२०॥

प्रति नः स्तोमं त्वष्टा जुषेत स्यादस्मे ऽअरमतिर्वसूयुः ॥२१॥
प्रति । नः । स्तोमम् । त्वष्टा । जुषेत । स्यात् । अस्मे इति । अरमतिः । वसु०युः ॥२१॥

ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु ।
वरूत्रीभिः सुशरणो नो ऽअस्तु त्वष्टा सुदत्रो वि दधातु रायः ॥२२॥
ता । नः । रासन् । राति०साचः । वसूनि । आ ।
रोदसी इति । वरुणानी । शृणोतु ॥ वरूत्रीभिः । सु०शरणः ।
नः । अस्तु । त्वष्टा । सु०दत्रः । वि । दधातु । रायः ॥२२॥

तन्नो रायः पर्वतास्तन्न ऽआपस्तद्रातिषाच ऽओषधीरुत द्यौः ।
वनस्पतिभिः पृथिवी सजोषा ऽउभे रोदसी परि पासतो नः ॥२३॥

तत् । नः । रायः । पर्वताः । तत् । नः । आपः । तत् ।
रातिऽसाचः । ओषधीः । उत । द्यौः ॥ वनस्पतिऽभिः । पृथिवी ।
सऽजोषाः । उभे इति । रोदसी इति । परि । पासतः । नः ॥२३॥

अनु तदुर्वी रोदसी जिहातामनु द्युक्षो वरुण ऽइन्द्रसखा ।
अनु विश्वे मरुतो ये सहासो रायः स्याम धरुणं धियध्यै ॥२४॥
अनु । तत् । उर्वी इति । रोदसी इति । जिहाताम् । अनु ।
द्युक्षः । वरुणः । इन्द्रऽसखा ॥ अनु । विश्वे । मरुतः ।
ये । सहासः । रायः । स्याम । धरुणम् । धियध्यै ॥२४॥

तन्न ऽइन्द्रो वरुणो मित्रो ऽअग्निराप ऽओषधीर्वनिनो जुषन्त ।
शर्मन्त्स्याम मरुतामुपस्थे यूयं पात स्वस्तिभिः सदा नः ॥२५॥ ( २७ ) [ ४४९ ]
तत् । नः । इन्द्रः । वरुणः । मित्रः । अग्निः । आपः ।
ओषधीः । वनिनः । जुषन्त ॥ शर्मन् । स्याम । मरुताम् ।
उपऽस्थे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥२५॥

# अथ खिलम्

५ मैत्रावरुणिर्वसिष्ठः । विश्वे देवाः । अनुष्टुप् ।

शंवतीः पारयन्त्येते तं पृच्छन्ति वचो युजा ।
अभ्यारं तं यमाकेतुं य ऽएवेदमिति ब्रवत् ॥१॥
शम्ऽवतीः । पारयन्ति । एते । तम् । पृच्छन्ति । वचः । युजा ॥
अभिऽआरम् । तम् । यमाऽकेतुम् । यः । एव । इदम् । इति । ब्रवत् ॥१॥

इन्द्रस्तं किं विभुं प्रभुं भानुनेयं सरस्वतीम् ।
येन सूर्यमरोचयद्येनेमे रोदसीऽउभे ॥२॥

इन्द्रः । तम् । किम् । वि॰भुम् । प्र॰भुम् । भानुना । इयम् । सरस्वतीम् ॥
येन सूर्यम् । अरोचयत् । येन । इमे । रोदसी इति । उभे ॥२॥

**जुषस्वाग्ने ऽअङ्गिरः काण्वं मेध्यातिथिम् ।**

**मा त्वा सोमस्य बर्बृहत्सुतासो मधुमत्तमः ॥३॥**

जुषस्व । अग्ने । अङ्गिरः । काण्वम् । मेध्य॰अतिथिम् ॥
मा । त्वा । सोमस्य । बर्बृहत् । सुतासः । मधुमत्॰तमः ॥३॥

**त्वामग्ने ऽअङ्गिरस्तम शोचस्व देववीतमः ।**

**आ शंतम शंतमाभिरभिष्टिभिः शान्तिं स्वस्तिमकुर्वत ॥४॥**

त्वाम् । अग्ने । अङ्गिरः२तम । शोचस्व । देव॰वीतमः ॥
आ । शम्॰तम । शम्॰तमाभिः । अभिष्टिभिः । शान्तिम् । स्वस्तिम् । अकुर्वत ॥४॥

**शं नः कनिक्रदद्देवः पर्ज्जन्यो ऽअभि वर्षत्वोषधयः प्रतिधीयताम् ।**

**शं नो द्यावापृथिवी शं प्रजाभ्यः शं नो ऽअस्तु द्विपदे शं चतुष्पदे ॥५॥ [ १५ ]**

शम् । नः । कनिक्रदत् । देवः । पर्ज्जन्यः । अभि । वर्षतु । ओषधयः ।
प्रति॰धीयताम् ॥ शम् । नः । द्यावा॰पृथिवी इति । शम् । प्र॰जाभ्यः ।
शम् । नः । अस्तु । द्वि॰पदे । शम् । चतुः२पदे ॥५॥

# ( ३५ )

**१५ मैत्रावरुणिर्वसिष्ठः । विश्वेदेवाः । त्रिष्टुप् ।**

**शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।**

**शमिन्द्रासोमा सुविताय शं योः शं न ऽइन्द्रापूषणा वाजसातौ ॥१॥**

शम् । नः । इन्द्राग्नी इति । भवताम् । अवः२भिः । शम् । नः ।
इन्द्रावरुणा । रात॰हव्या ॥ शम् । इन्द्रासोमा । सुविताय ।
शम् । योः । शम् । नः । इन्द्रापूषणा । वाज॰सातौ ॥१॥

शं नो भगः शमु नः शंसो ऽअस्तु शं नः पुरंधिः शमु सन्तु रायः ।
शं नः सत्यस्य सुयमस्य शंसः शं नो ऽअर्यमा पुरुजातो ऽअस्तु ॥२॥
शम् । नः । भगः । शम् । ऊँ इति । नः । शंसः । अस्तु । शम् । नः ।
पुरम्०धिः । शम् । ऊँ इति । सन्तु । रायः ॥ शम् । नः । सत्यस्य ।
सु०यमस्य । शंसः । शम् । नः । अर्यमा । पुरु०जातः । अस्तु ॥२॥

शं नो धाता शमु धर्त्ता नो ऽअस्तु शं न ऽउरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो ऽअद्रिः शं नो देवानां सुहवानि सन्तु ॥३॥
शम् । नः । धाता । शम् । ऊँ इति । धर्त्ता । नः । अस्तु । शम् ।
नः । उरूची । भवतु । स्वधाभिः ॥ शम् । रोदसी इति । बृहती ।
शम् । नः । अद्रिः । शम् । नः । देवानाम् । सु०हवानि । सन्तु ॥३॥

शं नो ऽअग्नि ज्योतिरनीको ऽअस्तु शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न ऽइषिरो ऽअभि वातु वातः ॥४॥
शम् । नः । अग्निः । ज्योतिः२अनीकः । अस्तु । शम् । नः ।
मित्रावरुणौ । अश्विना । शम् ॥ शम् । नः । सु०कृताम् ।
सु०कृतानि । सन्तु । शम् । नः । इषिरः । अभि । वातु । वातः ॥४॥

शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो ऽअस्तु ।
शं न ऽओषधी र्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥५॥ ( २८ )
शम् । नः । द्यावापृथिवी इति । पूर्व०हूतौ । शम् । अन्तरिक्षम् ।
दृशये । नः । अस्तु ॥ शम् । नः । ओषधीः । वनिनः ।
भवन्तु । शम् । नः । रजसः । पतिः । अस्तु । जिष्णुः ॥५॥

शं न ऽइन्द्रो वसुभि र्देवो ऽअस्तु शमादित्येभिर्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥६॥

शम् । नः । इन्द्रः । वसुऽभिः । देवः । अस्तु । शम् ।
आदित्येभिः । वरुणः । सुऽशंसः ॥ शम् । नः । रुद्रः । रुद्रेभिः ।
जलाषः । शम् । नः । त्वष्टा । ग्नाभिः । इह । शृणोतु ॥६॥

**शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः ।**
**शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदिः ॥७॥**
शम् । नः । सोमः । भवतु । ब्रह्म । शम् । नः । शम् । नः । ग्रावाणः ।
शम् । ऊँ इति । सन्तु । यज्ञाः ॥ शम् । नः । स्वरूणाम् । मितयः ।
भवन्तु । शम् । नः । प्रऽस्वः । शम् । ऊँ इति । अस्तु । वेदिः ॥७॥

**शं नः सूर्य ऽउरुचक्षा ऽउदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।**
**शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥८॥**
शम् । नः । सूर्यः । उरुऽचक्षाः । उत् । एतु । शम् । नः ।
चतस्रः । प्रऽदिशः । भवन्तु ॥ शम् । नः । पर्वताः । ध्रुवयः ।
भवन्तु । शम् । नः । सिन्धवः । शम् । ऊँ इति । सन्तु । आपः ॥८॥

**शं नो ऽअदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।**
**शं नो विष्णुः शमु पूषा नो ऽअस्तु शं नो भवित्रं शम्वस्तु वायुः ॥९॥**
शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः ।
सुऽअर्काः ॥ शम् । नः । विष्णुः । शम् । ऊँ इति । पूषा । नः ।
अस्तु । शम् । नः । भवित्रम् । शम् । ऊँ इति । अस्तु । वायुः ॥९॥

**शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।**
**शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥१०॥ (२९)**
शम् । नः । देवः । सविता । त्रायमाणः । शम् । नः । भवन्तु ।
उषसः । विऽभातीः ॥ शम् । नः । पर्जन्यः । भवतु । प्रऽजाभ्यः ।
शम् । नः । क्षेत्रस्य । पतिः । अस्तु । शम्ऽभुः ॥१०॥

शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो ऽअप्याः ॥११॥
शम् । नः । देवाः । विश्व०देवाः । भवन्तु । शम् । सरस्वती ।
सह । धीभिः । अस्तु ॥ शम् । अभि०साचः । शम् । ऊँ इति ।
राति०साचः । शम् । नः । दिव्याः । पार्थिवाः । शम् । नः । अप्याः ॥११॥

शं नः सत्यस्य पतयो भवन्तु शं नो ऽअर्वन्तः शमु सन्तु गावः ।
शं न ऽऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥१२॥
शम् । नः । सत्यस्य । पतयः । भवन्तु । शम् । नः । अर्वन्तः ।
शम् । ऊँ इति । सन्तु । गावः ॥ शम् । नः । ऋभवः ।
सु०कृतः । सु०हस्ताः । शम् । नः । भवन्तु । पितरः । हवेषु ॥

शं नो ऽअज ऽएकपाद्देवो ऽअस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ।
शं नो ऽअपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥१३॥
शम् । नः । अजः । एक०पात् । देवः । अस्तु । शम् । नः ।
अहिः । बुध्न्यः । शम् । समुद्रः ॥ शम् । नः । अपाम् ।
नपात् । पेरुः । अस्तु । शम् । नः । पृश्निः । भवतु । देव०गोपा ॥१३॥

आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः ।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता ऽउत ये यज्ञियासः ॥१४॥
आदित्याः । रुद्राः । वसवः । जुषन्त । इदम् । ब्रह्म ।
क्रियमाणम् । नवीयः ॥ शृण्वन्तु । नः । दिव्याः ।
पार्थिवासः । गो०जाताः । उत । ये । यज्ञियासः ॥१४॥

ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा ऽअमृता ऽऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥१५॥ ( ३० ) [ ४६४ ]

ये । देवानाम् । यज्ञियाः । यज्ञियानाम् । मनोः । यजत्राः ।
अमृताः । ऋतऽज्ञाः ॥ ते । नः । रासन्ताम् । उरुऽगायम् ।
अद्य । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१५॥

॥ इति पञ्चमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

# तृतीयाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां पञ्चमाष्टके तृतीयोऽध्यायः ॥

( तृतीयाध्याये वर्गाः ३०, सूक्तानि १६, ऋचः १६५ + ५ खिलानि = १७० )

# ॥ पञ्चमाष्टके चतुर्थोऽध्यायः॥

## अथ चतुर्थोऽध्यायः॥४॥ वर्गाः १-३० ] [ सप्तममण्डले सूक्तानि ३६-५९ ]

## ( ३६ )

९ मैत्रावरुणिर्वसिष्ठः । विश्वे देवाः । त्रिष्टुप् ।

प्र ब्रह्मैतु सदनादृतस्य वि रश्मिभिः ससृजे सूर्यो गाः ।
वि सानुना पृथिवी सस्र उर्वी पृथु प्रतीकमध्येधे अग्निः ॥१॥
प्र । ब्रह्म । एतु । सदनात् । ऋतस्य । वि । रश्मिऽभिः ।
ससृजे । सूर्यः । गाः ॥ वि । सानुना । पृथिवी । सस्रे ।
उर्वी । पृथु । प्रतीकम् । अधि । आ । ईधे । अग्निः ॥१॥

इमां वां मित्रावरुणा सुवृक्तिमिषं न कृण्वे असुरा नवीयः ।
इनो वामन्यः पदवीरदब्धो जनं च मित्रो यतति ब्रुवाणः ॥२॥
इमाम् । वाम् । मित्रावरुणा । सुऽवृक्तिम् । इषम् । न ।
कृण्वे । असुरा । नवीयः ॥ इनः । वाम् । अन्यः ।
पदऽवीः । अदब्धः । जनम् । च । मित्रः । यतति । ब्रुवाणः ॥२॥

आ वातस्य ध्रजतो रन्त इत्या अपीपयन्त धेनवो न सूदाः ।
महो दिवः सदने जायमानोऽचिक्रदद्वृषभः सस्मिन्नूधन् ॥३॥
आ । वातस्य । ध्रजतः । रन्ते । इत्याः । अपीपयन्त ।
धेनवः । न । सूदाः ॥ महः । दिवः । सदने । जायमानः ।
अचिक्रदत् । वृषभः । सस्मिन् । ऊधन् ॥३॥

गिरा य एता युनजद्धरी त इन्द्र प्रिया सुरथा शूर धायू ।
प्र यो मन्युं रिरिक्षतो मिनात्या सुक्रतुमर्यमणं ववृत्याम् ॥४॥

गिरा । यः । एता । युनजत् । हरी इति । ते । इन्द्र । प्रिया ।
सु०रथा । शूर । धायू इति ॥ प्र । यः । मन्युम् । रिरिक्षतः ।
मिनाति । आ । सु०क्रतुम् । अर्यमणम् । ववृत्याम् ॥४॥

**यजन्ते ऽअस्य सख्यं वयश्च नमस्विनः स्व ऽऋतस्य धामन् ।**
**वि पृक्षो बाबधे नृभिः स्तवान ऽइदं नमो रुद्राय प्रेष्ठम् ॥५॥ (१)**
यजन्ते । अस्य । सख्यम् । वयः । च । नमस्विनः ।
स्वे । ऋतस्य । धामन् ॥ वि । पृक्षः । बाबधे ।
नृ०भिः । स्तवानः । इदम् । नमः । रुद्राय । प्रेष्ठम् ॥५॥

**आ यत्साकं यशसो वावशानाः सरस्वती सप्तथी सिन्धुमाता ।**
**याः सुष्वयन्त सुदुघाः सुधारा ऽअभि स्वेन पयसा पीप्यानाः ॥६॥**
आ । यत् । साकम् । यशसः । वावशानाः । सरस्वती ।
सप्तथी । सिन्धु०माता ॥ याः । सुस्वयन्त । सु०दुघाः ।
सु०धाराः । अभि । स्वेन । पयसा । पीप्यानाः ॥६॥

**उत त्ये नो मरुतो मन्दसाना धियं तोकं च वाजिनोऽवन्तु ।**
**मा नः परि ख्यदक्षरा चरन्त्यवीवृधन्युज्यं ते रयिं नः ॥७॥**
उत । त्ये । नः । मरुतः । मन्दसानाः । धियम् । तोकम् ।
च । वाजिनः । अवन्तु ॥ मा । नः । परि । ख्यत् । अक्षरा ।
चरन्ती । अवीवृधन् । युज्यम् । ते । रयिम् । नः ॥७॥

**प्र वो महीमरमतिं कृणुध्वं प्र पूषणं विदथ्यं१ न वीरम् ।**
**भगं धियोऽवितारं नो ऽअस्याः सातौ वाजं रातिषाचं पुरंधिम् ॥८॥**
प्र । वः । महीम् । अरमतिम् । कृणुध्वम् । प्र । पूषणम् ।
विदथ्यम् । न । वीरम् ॥ भगम् । धियः । अवितारम् । नः ।
अस्याः । सातौ । वाजम् । राति०साचम् । पुरम्०धिम् ॥८॥

अच्छायं वो मरुतः श्लोक ऽएत्वच्छा विष्णुं निषिक्तपामवोभिः ।
उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥९॥ (२) [ ४७३ ]
अच्छ । अयम् । वः । मरुतः । श्लोकः । एतु । अच्छ ।
विष्णुम् । निसिक्त०पाम् । अवः२भिः ॥ उत । प्र०जायै ।
गृणते । वयः । धुः । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥९॥

# ( ३७ )

८ मैत्रावरुणिर्वसिष्ठः । विश्वे देवाः । त्रिष्टुप् ।

आ वो वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऽऋभुक्षणो ऽअमृक्तः ।
अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वम् ॥१॥
आ । वः । वाहिष्ठः । वहतु । स्तवध्यै । रथः । वाजाः ।
ऋभुक्षणः । अमृक्तः ॥ अभि । त्रि०पृष्ठैः । सवनेषु ।
सोमैः । मदे । सु०शिप्राः । महः०भिः । पृणध्वम् ॥१॥

यूयं ह रत्नं मघवत्सु धत्थ स्वर्दृश ऽऋभुक्षणो ऽअमृक्तम् ।
सं यज्ञेषु स्वधावन्तः पिबध्वं वि नो राधांसि मतिभिर्दयध्वम् ॥२॥
यूयम् । ह । रत्नम् । मघवत्०सु । धत्थ । स्वः२दृशः ।
ऋभुक्षणः । अमृक्तम् ॥ सम् । यज्ञेषु । स्वधा०वन्तः ।
पिबध्वम् । वि । नः । राधांसि । मति०भिः । दयध्वम् ॥२॥

उवोचिथ हि मघवन्देष्णं महो ऽअर्भस्य वसुनो विभागे ।
उभा ते पूर्णा वसुना गभस्ती न सूनृता नि यमते वसव्या ॥३॥
उवोचिथ । हि । मघ०वन् । देष्णम् । महः । अर्भस्य ।
वसुनः । वि०भागे ॥ उभा । ते । पूर्णा । वसुना ।
गभस्ती इति । न । सूनृता । नि । यमते । वसव्या ॥३॥

**त्वमिन्द्र स्वयंशा ऽऋभुक्षा वाजो न साधुरस्तमेष्यृक्वा ।**

**वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः ॥४॥**

त्वम् । इन्द्र । स्व०यंशाः । ऋभुक्षाः । वाजः । न । साधुः ।

अस्तम् । एषि । ऋक्वा ॥ वयम् । नु । ते । दाश्वांसः ।

स्याम । ब्रह्म । कृण्वन्तः । हरि०वः । वसिष्ठाः ॥४॥

**सनितासि प्रवतो दाशुषे चिद्याभिर्विवेषो हर्यश्व धीभिः ।**

**ववन्मा नु ते युज्याभिरूती कदा न ऽइन्द्र राय ऽआ दशस्येः ॥५॥ ( ३ )**

सनिता । असि । प्र०वतः । दाशुषे । चित् । याभिः । विवेषः ।

हरि०अश्व । धीभिः ॥ ववन्म । नु । ते । युज्याभिः ।

ऊती । कदा । नः । इन्द्र । रायः । आ । दशस्येः ॥५॥

**वासयसीव वेधसस्त्वं नः कदा न ऽइन्द्र वचसो बुबोधः ।**

**अस्तं तात्या धिया रयिं सुवीरं पृक्षो नो ऽअर्वा न्युहीत वाजी ॥६॥**

वासयसिऽइव । वेधसः । त्वम् । नः । कदा । नः । इन्द्र ।

वचसः । बुबोधः ॥ अस्तम् । तात्या । धिया । रयिम् ।

सु०वीरम् । पृक्षः । नः । अर्वा । नि । उहीत । वाजी ॥६॥

**अभि यं देवी निर्ऋतिश्चिदीशे नक्षन्त ऽइन्द्रं शरदः सुपृक्षः ।**

**उप त्रिबन्धुर्जरदष्टिमेत्यस्ववेशं यं कृणवन्त मर्ताः ॥७॥**

अभि । यम् । देवी । निः२ऋतिः । चित् । ईशे । नक्षन्ते ।

इन्द्रम् । शरदः । सु०पृक्षः ॥ उप । त्रि०बन्धुः । जरत्०अष्टिम् ।

एति । अस्व०वेशम् । यम् । कृणवन्त । मर्ताः ॥७॥

**आ नो राधांसि सवितः स्तवध्या ऽआ रायो यन्तु पर्वतस्य रातौ ।**

**सदा नो दिव्यः पायुः सिषक्तु यूयं पात स्वस्तिभिः सदा नः॥८॥ ( ४ ) [ ४८१ ]**

आ । नः । राधांसि । सवितरिति । स्तवध्यै । आ । रायः ।
यन्तु । पर्वतस्य । रातौ ॥ सदा । नः । दिव्यः । पायुः ।
सिसक्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥८॥

# ( ३८ )

८ मैत्रावरुणिर्वसिष्ठः । १-६ सविता, ६ उत्तरार्द्धस्य भगो वा, ७-८ वाषिनः । त्रिष्टुप् ।

**उदु ष्य देवः सविता ययाम हिरण्ययीममतिं यामशिश्रेत् ।**
**नूनं भगो हव्यो मानुषेभिर्वि यो रत्ना पुरूवसुर्दधाति ॥१॥**
उत् । ऊँ इति । स्यः । देवः । सविता । ययाम । हिरण्ययीम् ।
अमतिम् । याम् । अशिश्रेत् ॥ नूनम् । भगः । हव्यः ।
मानुषेभिः । वि । यः । रत्ना । पुरुऽवसुः । दधाति ॥१॥

**उदु तिष्ठ सवितः श्रुध्यस्य हिरण्यपाणे प्रभृतावृतस्य ।**
**व्युर्वीं पृथ्वीममतिं सृजान ऽआ नृभ्यो मर्त्तभोजनं सुवानः ॥२॥**
उत् । ऊँ इति । तिष्ठ । सवितरिति । श्रुधि । अस्य । हिरण्यऽपाणे ।
प्रऽभृतौ । ऋतस्य ॥ वि । उर्वीम् । पृथ्वीम् । अमतिम् ।
सृजानः । आ । नृऽभ्यः । मर्त्तऽभोजनम् । सुवानः ॥२॥

**अपि ष्टुतः सविता देवो ऽअस्तु यमा चिद्विश्वे वसवो गृणन्ति ।**
**स नः स्तोमान्नमस्यश्चनो धाद्विश्वेभिः पातु पायुभिर्नि सूरीन् ॥३॥**
अपि । स्तुतः । सविता । देवः । अस्तु । यम् । आ । चित् ।
विश्वे । वसवः । गृणन्ति ॥ सः । नः । स्तोमान् । नमस्यः ।
चनः । धात् । विश्वेभिः । पातु । पायुऽभिः । नि । सूरीन् ॥३॥

**अभि यं देव्यदितिर्गृणाति सवं देवस्य सवितुर्जुषाणा ।**
**अभि सम्राजो वरुणो गृणन्त्यभि मित्रासो ऽअर्यमा सजोषाः ॥४॥**

अभि । यम् । देवी । अदितिः । गृणाति । सवम् । देवस्य ।
सवितुः । जुषाणा ॥ अभि । सम्०राजः । वरुणः ।
गृणन्ति । अभि । मित्रासः । अर्यमा । स०जोषाः ॥४॥

**अभि ये मिथो वनुषः सपन्ते रातिं दिवो रातिषाचः पृथिव्याः ।**
**अहिर्बुध्न्य उत नः शृणोतु वरूत्र्येकधेनुभिर्नि पातु ॥५॥**
अभि । ये । मिथः । वनुषः । सपन्ते । रातिम् । दिवः ।
राति०साचः । पृथिव्याः ॥ अहिः । बुध्न्यः । उत । नः ।
शृणोतु । वरूत्री । एकधेनु०भिः । नि । पातु ॥५॥

**अनु तन्नो जास्पतिर्मंसीष्ट रत्नं देवस्य सवितुरियानः ।**
**भगमुग्रोऽवसे जोहवीति भगमनुग्रो ऽअध याति रत्नम् ॥६॥**
अनु । तत् । नः । जाः२पतिः । मंसीष्ट । रत्नम् ।
देवस्य । सवितुः । इयानः ॥ भगम् । उग्रः । अवसे ।
जोहवीति । भगम् । अनुग्रः । अध । याति । रत्नम् ॥६॥

**शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।**
**जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥७॥**
शम् । नः । भवन्तु । वाजिनः । हवेषु । देव०ताता ।
मित०द्रवः । सु०अर्काः ॥ जम्भयन्तः । अहिम् । वृकम् ।
रक्षांसि । स०नेमि । अस्मत् । युयवन् । अमीवाः ॥७॥

**वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा ऽअमृता ऽऋतज्ञाः ।**
**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥८॥ (५) [४८९]**
वाजे०वाजे । अवत । वाजिनः । नः । धनेषु । विप्राः ।
अमृताः । ऋत०ज्ञाः ॥ अस्य । मध्वः । पिबत ।
मादयध्वम् । तृप्ताः । यात । पथि०भिः । देव०यानैः ॥८॥

# ( ३९ )

७ मैत्रावरुणिर्वसिष्ठः । विश्वे देवाः । त्रिष्टुप् ।

ऊर्ध्वो ऽअग्निः सुमतिं वस्वो ऽअश्रेत्प्रतीची जूर्णिर्देवतातिमेति ।
भेजाते ऽअद्री रथ्येव पन्थामृतं होता न ऽइषितो यजाति ॥१॥
ऊर्ध्वः । अग्निः । सु॰मतिम् । वस्वः । अश्रेत् । प्रतीची । जूर्णिः ।
देव॰तातिम् । एति ॥ भेजाते इति । अद्री इति । रथ्याऽइव ।
पन्थाम् । ऋतम् । होता । नः । इषितः । यजाति ॥१॥

प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट ऽइयाते ।
विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥२॥
प्र । ववृजे । सु॰प्रया । बर्हिः । एषाम् । आ । विश्पती इवेति ।
विश्पतीऽइव । बीरिटे । इयाते इति ॥ विशाम् । अक्तोः ।
उषसः । पूर्व॰हूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् ॥२॥

ज्मया ऽअत्र वसवो रन्त देवा ऽउरावन्तरिक्षे मर्जयन्त शुभ्राः ।
अर्वाक्पथ ऽउरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो ऽअस्य ॥३॥
ज्मयाः । अत्र । वसवः । रन्त । देवाः । उरौ । अन्तरिक्षे ।
मर्जयन्त । शुभ्राः ॥ अर्वाक् । पथः । उरु॰ज्रयः ।
कृणुध्वम् । श्रोता । दूतस्य । जग्मुषः । नः । अस्य ॥३॥

ते हि यज्ञेषु यज्ञियास ऽऊमाः सधस्थं विश्वे ऽअभि सन्ति देवाः ।
ताँ ऽअध्वर ऽउशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरंधिम् ॥४॥
ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । सध॰स्थम् ।
विश्वे । अभि । सन्ति । देवाः ॥ तान् । अध्वरे । उशतः ।
यक्षि । अग्ने । श्रुष्टी । भगम् । नासत्या । पुरम्॰धिम् ॥४॥

आग्ने गिरो दिव ऽआ पृथिव्या मित्रं वह वरुणमिन्द्रमग्निम् ।
आर्यमणमदितिं विष्णुमेषां सरस्वती मरुतो मादयन्ताम् ॥५॥
आ । अग्ने । गिरः । दिवः । आ । पृथिव्याः । मित्रम् । वह ।
वरुणम् । इन्द्रम् । अग्निम् ॥ आ । अर्यमणम् । अदितिम् ।
विष्णुम् । एषाम् । सरस्वती । मरुतः । मादयन्ताम् ॥५॥

ररे हव्यं मतिभिर्यज्ञियानां नक्षत्कामम् मर्त्यानामसिन्वन् ।
धाता रयिमविदस्यं सदासां सक्षीमहि युज्येभिर्नु देवैः ॥६॥
ररे । हव्यम् । मति०भिः । यज्ञियानाम् । नक्षत् । कामम् ।
मर्त्यानाम् । असिन्वन् ॥ धाता । रयिम् । अवि०दस्यम् ।
सदा०साम् । सक्षीमहि । युज्येभिः । नु । देवैः ॥६॥

नू रोदसी ऽअभिष्टुते वसिष्ठैर्ऋतावानो वरुणो मित्रो ऽअग्निः ।
यच्छन्तु चन्द्रा ऽउपमं नो ऽअर्क यूयं पात स्वस्तिभिः सदा नः॥७॥ ( ६ ) [ ४९६ ]
नु । रोदसी इति । अभिस्तुते इत्यभि०स्तुते । वसिष्ठैः । ऋत०वानः ।
वरुणः । मित्रः । अग्निः ॥ यच्छन्तु । चन्द्राः । उप०मम् ।
नः । अर्कम् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥७॥

## ( ४० )

७ मैत्रावरुणिर्वसिष्ठः । विश्वे देवाः । त्रिष्टुप् ।

ओ श्रुष्टिर्विदथ्या३ समेतु प्रति स्तोमं दधीमहि तुराणाम् ।
यदद्य देवः सविता सुवाति स्यामास्य रत्निनो विभागे ॥१॥
ओ इति । श्रुष्टिः । विदथ्या । सम् । एतु । प्रति । स्तोमम् ।
दधीमहि । तुराणाम् ॥ यत् । अद्य । देवः । सविता ।
सुवाति । स्याम । अस्य । रत्निनः । वि०भागे ॥१॥

मित्रस्तन्नो वरुणो रोदसी च द्युभक्तमिन्द्रो ऽअर्यमा ददातु ।
दिदेष्टु देव्यदिती रेक्णो वायुश्च यन्नियुवैते भगश्च ॥२॥
मित्रः । तत् । नः । वरुणः । रोदसी इति । च । द्यु०भक्तम् ।
इन्द्रः । अर्यमा । ददातु ॥ दिदेष्टु । देवी । अदितिः । रेक्णः ।
वायुः । च । यत् । नियुवैते इति नि०युवैते । भगः । च ॥२॥

सेदुग्रो ऽअस्तु मरुतः स शुष्मी यं मर्त्यं पृषदश्वा ऽअवाथ ।
उतेमग्निः सरस्वती जुनन्ति न तस्य रायः पर्येतास्ति ॥३॥
सः । इत् । उग्रः । अस्तु । मरुतः । सः । शुष्मी । यम् ।
मर्त्यम् । पृषत्०अश्वाः । अवाथ ॥ उत । ईम् । अग्निः ।
सरस्वती । जुनन्ति । न । तस्य । रायः । परि०एता । अस्ति ॥३॥

अयं हि नेता वरुण ऽऋतस्य मित्रो राजानो ऽअर्यमापो धुः ।
सुहवा देव्यदितिरनर्वा ते नो ऽअंहो ऽअति पर्षन्नरिष्टान् ॥४॥
अयम् । हि । नेता । वरुणः । ऋतस्य । मित्रः । राजानः ।
अर्यमा । अपः । धुरिति धुः ॥ सु०हवा । देवी । अदितिः ।
अनर्वा । ते । नः । अंहः । अति । पर्षन् । अरिष्टान् ॥४॥

अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ॥५॥
अस्य । देवस्य । मीळ्हुषः । वयाः । विष्णोः । एषस्य ।
प्र०भृथे । हविःऽभिः ॥ विदे । हि । रुद्रः । रुद्रियम् ।
महि०त्वम् । यासिष्टम् । वर्तिः । अश्विनौ । इरा०वत् ॥५॥

मात्र पूषन्नाघृण ऽइरस्यो वरूत्री यद्रातिषाचश्च रासन् ।
मयोभुवो नो ऽअर्वन्तो नि पान्तु वृष्टिं परिज्मा वातो ददातु ॥६॥

मा । अत्रं । पूषन् । आघृणे । इरस्यः । वरूत्री । यत् ।
रातिऽसाचः । च । रासन् ॥ मयःऽभुवः । नः । अर्वन्तः ।
नि । पान्तु । वृष्टिम् । परिऽज्मा । वार्तः । ददातु ॥६॥

नू रोदसी ऽअभिष्टुते वसिष्ठैर्ऋतावानो वरुणो मित्रो ऽअग्निः ।
यच्छन्तु चन्द्रा ऽउपमं नो ऽअर्कं यूयं पात स्वस्तिभिः सदा नः॥७॥ (७) [५०३]
नु । रोदसी इति । अभिस्तुते इत्यभिऽस्तुते । वसिष्ठैः ।
ऋतऽवानः । वरुणः । मित्रः । अग्निः ॥ यच्छन्तु । चन्द्राः ।
उपऽमम् । नः । अर्कम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

# ( ४१ )

७ मैत्रावरुणिर्वसिष्ठः । १ अग्नीन्द्रमित्रवरुणाश्विभगपूषब्रह्मणस्पतिसोमरुद्राः,
२-६ भगः, ७ उषसः । त्रिष्टुप्, १ जगती ।

प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हुवेम ॥१॥
प्रातः । अग्निम् । प्रातः । इन्द्रम् । हवामहे । प्रातः । मित्रावरुणा ।
प्रातः । अश्विना ॥ प्रातः । भगम् । पूषणम् । ब्रह्मणः ।
पतिम् । प्रातः । सोमम् । उत । रुद्रम् । हुवेम ॥१॥

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्त्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥२॥
प्रातःऽजितम् । भगम् । उग्रम् । हुवेम । वयम् । पुत्रम् । अदितेः ।
यः । विऽधर्त्ता ॥ आध्रः । चित् । यम् । मन्यमानः । तुरः ।
चित् । राजा । चित् । यम् । भगम् । भक्षि । इति । आह ॥२॥

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः ।
भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥३॥

शीर्ष्णः२शीर्ष्णः । जगतः । तस्थुषः । पतिम् ।
समया । विश्वम् । आ । रजः ॥ सप्त । स्वसारः ।
सुविताय । सूर्यम् । वहन्ति । हरितः । रथे ॥१५॥

**तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।**
**पश्येम शरदः शतं जीवेम शरदः शतम् ॥१६॥**
तत् । चक्षुः । देव०हितम् । शुक्रम् । उत्०चरत् ॥
पश्येम । शरदः । शतम् । जीवेम । शरदः । शतम् ॥१६॥

**काव्येभिरदाभ्या यातं वरुण द्युमत् ।**
**मित्रश्च सोमपीतये ॥१७॥**
काव्येभिः । अदाभ्या । आ । यातम् । वरुण । द्यु०मत् ॥
मित्रः । च । सोम०पीतये ॥१७॥

**दिवो धामभिर्वरुण मित्रश्चा यातमद्रुहा ।**
**पिबतं सोममातुजी ॥१८॥**
दिवः । धाम०भिः । वरुण । मित्रः । च । आ । यातम् । अद्रुहा ॥
पिबतम् । सोमम् । आतुजी इत्या०तुजी ॥१८॥

**आ यातं मित्रावरुणा जुषाणावाहुतिं नरा ।**
**पातं सोममृतावृधा ॥१९॥ ( ११ )** [ ६८० ]
आ । यातम् । मित्रावरुणा । जुषाणौ । आ०हुतिम् । नरा ॥
पातम् । सोमम् । ऋत०वृधा ॥१९॥

# ( ६७ )

१० मैत्रावरुणिर्वसिष्ठः । अश्विनौ । त्रिष्टुप् ।

**प्रति वां रथं नृपती जरध्यै हविष्मता मनसा यज्ञियेन ।**

**यो वां दूतो न धिष्ण्यावजीगरच्छा सूनुर्न पितरा विवक्मि ॥१॥**

प्रति । वाम् । रथम् । नृपती इति । नृ०पती । जरध्यै ।

हविष्मता । मनसा । यज्ञियेन ॥ यः । वाम् । दूतः । न ।

धिष्ण्यौ । अजीगः । अच्छ । सूनुः । न । पितरा । विवक्मि ॥१॥

**अशोच्यग्निः समिधानो ऽअस्मे ऽउपो ऽअदृश्रन्तमसश्चिदन्ताः ।**

**अचेति केतुरुषसः पुरस्ताच्छ्रिये दिवो दुहितुर्जायमानः ॥२॥**

अशोचि । अग्निः । सम्०इधानः । अस्मे इति । उपो इति ।

अदृश्रन् । तमसः । चित् । अन्ताः ॥ अचेति । केतुः ।

उषसः । पुरस्तात् । श्रिये । दिवः । दुहितुः । जायमानः ॥२॥

**अभि वां नूनमश्विना सुहोता स्तोमैः सिषक्ति नासत्या विवक्वान् ।**

**पूर्वीभिर्यातं पथ्याभिरर्वाक्स्वर्विदा वसुमता रथेन ॥३॥**

अभि । वाम् । नूनम् । अश्विना । सु०होता । स्तोमैः ।

सिसक्ति । नासत्या । विवक्वान् ॥ पूर्वीभिः । यातम् ।

पथ्याभिः । अर्वाक् । स्वः०विदा । वसु०मता । रथेन ॥३॥

**अवोर्वां नूनमश्विना युवाकुर्हुवे यद्वां सुते माध्वी वसूयुः ।**

**आ वां वहन्तु स्थविरासो ऽअश्वाः पिबाथो ऽअस्मे सुषुता मधूनि ॥४॥**

अवोः । वाम् । नूनम् । अश्विना । युवाकुः । हुवे । यत् । वाम् ।

सुते । माध्वी इति । वसु०युः ॥ आ । वाम् । वहन्तु । स्थविरासः ।

अश्वाः । पिबाथः । अस्मे इति । सु०सुता । मधूनि ॥४॥

प्राचीमु देवाश्विना धियं मेऽमृध्रां सातये कृतं वसूयुम् ।
विश्वा ऽअविष्टं वाज ऽआ पुरंधीस्ता नः शक्तं शचीपती शचीभिः ॥५॥ ( १२ )
प्राचीम् । ऊँ इति । देवा । अश्विना । धियम् । मे । अमृध्राम् ।
सातये । कृतम् । वसुऽयुम् ॥ विश्वाः । अविष्टम् । वाजे । आ ।
पुरम्ऽधीः । ता । नः । शक्तम् । शचीपती इति शचीऽपती । शचीभिः ॥५॥

अविष्टं धीष्वश्विना न ऽआसु प्रजावद्रेतो ऽअह्रयं नो ऽअस्तु ।
आ वां तोके तनये तूतुजानाः सुरत्नासो देववीतिं गमेम ॥६॥
अविष्टम् । धीषु । अश्विना । नः । आसु । प्रजाऽवत् ।
रेतः । अह्रयम् । नः । अस्तु ॥ आ । वाम् । तोके ।
तनये । तूतुजानाः । सुऽरत्नासः । देवऽवीतिम् । गमेम ॥६॥

एष स्य वां पूर्वगत्वेव सख्ये निधिर्हितो माध्वी रातो ऽअस्मे ।
अहेळता मनसा यातमर्वागश्नन्ता हव्यं मानुषीषु विक्षु ॥७॥
एषः । स्यः । वाम् । पूर्वगत्वाऽइव । सख्ये । निऽधिः । हितः ।
माध्वी इति । रातः । अस्मे इति ॥ अहेळता । मनसा । आ ।
यातम् । अर्वाक् । अश्नन्ता । हव्यम् । मानुषीषु । विक्षु ॥७॥

एकस्मिन्योगे भुरणा समाने परि वां सप्त स्रवतो रथो गात् ।
न वायन्ति सुभ्वो देवयुक्ता ये वां धूर्षु तरणयो वहन्ति ॥८॥
एकस्मिन् । योगे । भुरणा । समाने । परि । वाम् । सप्त ।
स्रवतः । रथः । गात् ॥ न । वायन्ति । सुऽभ्वः ।
देवऽयुक्ताः । ये । वाम् । धूःऽसु । तरणयः । वहन्ति ॥८॥

असश्चता मघवद्भ्यो हि भूतं ये राया मघदेयं जुनन्ति ।
प्र ये बन्धुं सूनृताभिस्तिरन्ते गव्या पृञ्चन्तो ऽअश्व्या मघानि ॥९॥

असश्चता । मघवत्०भ्यः । हि । भूतम् । ये । राया ।
मघ०देयम् । जुनन्ति ॥ प्र । ये । बन्धुम् । सूनृताभिः ।
तिरन्ते । गव्या । पृञ्चन्तः । अश्व्या । मघानि ॥९॥

**नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।**
**धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥१०॥ ( १३ ) [ ६९० ]**
नु । मे । हवम् । आ । शृणुतम् । युवाना । यासिष्टम् ।
वर्तिः । अश्विनौ । इरा०वत् ॥ धत्तम् । रत्नानि । जरतम् ।
च । सूरीन् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥१०॥

# ( ६८ )

९ मैत्रावरुणिर्वसिष्ठः । अश्विनौ । विराट्, ८-९ त्रिष्टुप् ।

**आ शुभ्रा यातमश्विना स्वश्वा गिरो दस्रा जुजुषाणा युवाकोः ।**
**हव्यानि च प्रतिभृता वीतं नः ॥१॥**
आ । शुभ्रा । यातम् । अश्विना । सु०अश्वा । गिरः । दस्रा । जुजुषाणा । युवाकोः ॥
हव्यानि । च । प्रति०भृता । वीतम् । नः ॥१॥

**प्र वामन्धांसि मद्यान्यस्थुररं गन्तं हविषो वीतये मे ।**
**तिरो ऽअर्यो हवनानि श्रुतं नः ॥२॥**
प्र । वाम् । अन्धांसि । मद्यानि । अस्थुः । अरम् । गन्तम् । हविषः । वीतये । मे ॥
तिरः । अर्यः । हवनानि । श्रुतम् । नः ॥२॥

**प्र वां रथो मनोजवा ऽइयर्त्ति तिरो रजांस्यश्विना शतोतिः ।**
**अस्मभ्यं सूर्यावसू ऽइयानः ॥३॥**
प्र । वाम् । रथः । मनः॒जवा । इयर्त्ति । तिरः । रजांसि । अश्विना । शत०ऊतिः ॥
अस्मभ्यम् । सूर्यावसू इति । इयानः ॥३॥

**अयं ह यद्वां देवया ऽउ ऽअद्रिरूर्ध्वो विवक्ति सोमसुद्युवभ्याम् ।**
**आ वल्गू विप्रो ववृतीत हव्यैः ॥४॥**

अयम् । ह। यत् । वाम् । देव०याः । ऊँ इति । अद्रिः । ऊर्ध्वः । विवक्ति । सोम०सुत् । युवभ्याम् ॥
आ । वल्गू इति । विप्रः । ववृतीत । हव्यैः ॥४॥

**चित्रं ह यद्वां भोजनं न्वस्ति न्यत्रये महिष्वन्तं युयोतम् ।**
**यो वामोमानं दधते प्रियः सन् ॥५॥ (१४)**

चित्रम् । ह। यत् । वाम् । भोजनम् । नु। अस्ति। नि। अत्रये। महिष्वन्तम् । युयोतम् ॥
यः । वाम् । ओमानम् । दधते । प्रियः । सन् ॥५॥

**उत त्यद्वां जुरते ऽअश्विना भूच्च्यवानाय प्रतीत्यं हविर्दे ।**
**अधि यद्वर्प ऽइतऊति धत्थः ॥६॥**

उत । त्यत् । वाम् । जुरते । अश्विना । भूत् । च्यवानाय । प्रतीत्यम् । हविः२दे ॥
अधि । यत् । वर्पः । इतः२ऊति । धत्थः ॥६॥

**उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे ।**
**निरीं पर्षदरावा यो युवाकुः ॥७॥**

उत । त्यम् । भुज्युम् । अश्विना । सखायः । मध्ये । जुहुः । दुः२एवासः । समुद्रे ॥
निः । ईम् । पर्षत् । अरावा । यः । युवाकुः ॥७॥

**वृकाय चिज्जसमानाय शक्तमुत श्रुतं शयवे हूयमाना ।**
**यावघ्न्यामपिन्वतमपो न स्तर्यं चिच्छक्त्यश्विना शचीभिः ॥८॥**

वृकाय । चित् । जसमानाय । शक्तम् । उत । श्रुतम् ।
शयवे । हूयमाना ॥ यौ । अघ्न्याम् । अपिन्वतम् । अपः ।
न । स्तर्यम् । चित् । शक्ती । अश्विना । शचीभिः ॥८॥

**एष स्य कारुर्जरते सूक्तैरग्रे बुधान ऽउषसां सुमन्मा ।**

**इषा तं वर्द्धदघ्न्या पयोभिर्यूयं पात स्वस्तिभिः सदा नः ॥९॥ ( १५ ) [ ६९९ ]**

एषः । स्यः । कारुः । जरते । सु०उक्तैः । अग्रे । बुधानः ।
उषसाम् । सु०मन्मा ॥ इषा । तम् । वर्द्धत् । अघ्न्या ।
पयः०भिः । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥९॥

## ( ६९ )

८ मैत्रावरुणिर्वसिष्ठः । अश्विनौ । त्रिष्टुप् ।

**आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः ।**

**घृतवर्त्तनिः पविभी रुचान ऽइषां वोळ्हा नृपतिर्वाजिनीवान् ॥१॥**

आ । वाम् । रथः । रोदसी इति । बद्बधानः । हिरण्ययः ।
वृष०भिः । यातु । अश्वैः ॥ घृत०वर्त्तनिः । पवि०भिः ।
रुचानः । इषाम् । वोळ्हा । नृ०पतिः । वाजिनी०वान् ॥१॥

**स पप्रथानो ऽअभि पञ्च भूमा त्रिवन्धुरो मनसा यातु युक्तः ।**

**विशो येन गच्छथो देवयन्तीः कुत्रा चिद्यामंमश्विना दधाना ॥२॥**

सः । पप्रथानः । अभि । पञ्च । भूम । त्रि०वन्धुरः ।
मनसा । आ । यातु । युक्तः ॥ विशः । येन । गच्छथः ।
देव०यन्तीः । कुत्र । चित् । यामम् । अश्विना । दधाना ॥२॥

**स्वश्वा यशसा यातमर्वाग्दस्रा निधिं मधुमन्तं पिबाथः ।**

**वि वां रथो वध्वाइ यादमानोऽन्तान्दिवो बाधते वर्त्तनिभ्याम् ॥३॥**

सु०अश्वा । यशसा । आ । यातम् । अर्वाक् । दस्रा ।
नि०धिम् । मधु०मन्तम् । पिबाथः ॥ वि । वाम् । रथः ।
वध्वा । यादमानः । अन्तान् । दिवः । बाधते । वर्त्तनि०भ्याम् ॥३॥

युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ।
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥४॥
युवोः । श्रियम् । परि । योषा । अवृणीत । सूरः । दुहिता ।
परि॰तक्म्यायाम् ॥ यत् । देव॰यन्तम् । अवथः । शचीभिः ।
परि । घ्रंसम् । ओमना । वाम् । वयः । गात् ॥४॥

यो ह स्य वां रथिरा वस्त उस्रा रथो युजानः परियाति वर्तिः ।
तेन नः शं योरुषसो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥५॥
यः । ह । स्यः । वाम् । रथिरा । वस्ते । उस्राः । रथः ।
युजानः । परि॰याति । वर्तिः ॥ तेन । नः । शम् । योः ।
उषसः । वि॰उष्टौ । नि । अश्विना । वहतम् । यज्ञे । अस्मिन् ॥५॥

नरा गौरेव विद्युतं तृषाणास्माकमद्य सवनोप यातम् ।
पुरुत्रा हि वां मतिभिर्हवन्ते मा वामन्ये नि यमन्देवयन्तः ॥६॥
नरा । गौराऽइव । वि॰द्युतम् । तृषाणा । अस्माकम् । अद्य ।
सवना । उप । यातम् ॥ पुरु॰त्रा । हि । वाम् । मति॰भिः ।
हवन्ते । मा । वाम् । अन्ये । नि । यमन् । देव॰यन्तः ॥६॥

युवं भुज्युमवविद्धं समुद्र उदूहथुरर्णसो अस्रिधानैः ।
पतत्रिभिरश्रमैरव्यथिभिर्दंसनाभिरश्विना पारयन्ता ॥७॥
युवम् । भुज्युम् । अव॰विद्धम् । समुद्रे । उत् । ऊहथुः ।
अर्णसः । अस्रिधानैः ॥ पतत्रि॰भिः । अश्रमैः ।
अव्यथि॰भिः । दंसनाभिः । अश्विना । पारयन्ता ॥७॥

नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥८॥ (१६) [७०७]

नु । मे । हवम् । आ । शृणुतम् । युवाना । यासिष्टम् ।
वर्तिः । अश्विनौ । इरा॰वत् ॥ धत्तम् । रत्नानि । जरतम् ।
च । सूरीन् । यूयम् । पात । स्वस्ति॰भिः । सदा । नः ॥८॥

# ( ७० )

७ मैत्रावरुणिर्वसिष्ठः । अश्विनौ । त्रिष्टुप् ।

**आ विश्ववाराश्विना गतं नः प्र तत्स्थानमवाचि वां पृथिव्याम् ।**
**अश्वो न वाजी शुनपृष्ठो ऽअस्थादा यत्सेदथुर्ध्रुवसे न योनिम् ॥१॥**
आ । विश्व॰वारा । अश्विना । गतम् । नः । प्र । तत् । स्थानम् ।
अवाचि । वाम् । पृथिव्याम् ॥ अश्वः । न । वाजी । शुन॰पृष्ठः ।
अस्थात् । आ । यत् । सेदथुः । ध्रुवसे । न । योनिम् ॥१॥

**सिषक्ति सा वां सुमतिश्चनिष्ठातापि घर्मो मनुषो दुरोणे ।**
**यो वां समुद्रान्त्सरितः पिपर्त्येतग्वा चिन्न सुयुजा युजानः ॥२॥**
सिसक्ति । सा । वाम् । सु॰मतिः । चनिष्ठा । अतापि ।
घर्मः । मनुषः । दुरोणे ॥ यः । वाम् । समुद्रान् । सरितः ।
पिपर्त्ति । एत॰ग्वा । चित् । न । सु॰युजा । युजानः ॥२॥

**यानि स्थानान्यश्विना दधाथे दिवो यह्वीष्वोषधीषु विक्षु ।**
**नि पर्वतस्य मूर्द्धनि सदन्तेषं जनाय दाशुषे वहन्ता ॥३॥**
यानि । स्थानानि । अश्विना । दधाथे इति । दिवः ।
यह्वीषु । ओषधीषु । विक्षु ॥ नि । पर्वतस्य ।
मूर्द्धनि । सदन्ता । इषम् । जनाय । दाशुषे । वहन्ता ॥३॥

**चनिष्टं देवा ऽओषधीष्वप्सु यद्योग्या ऽअश्नवैथे ऽऋषीणाम् ।**
**पुरूणि रत्ना दधतौ न्यस्मे ऽअनु पूर्वाणि चख्यथुर्युगानि ॥४॥**

चनिष्टम् । देवौ । ओषधीषु । अप्ऽसु । यत् । योग्याः ।
अश्नवैथे इति । ऋषीणाम् ॥ पुरूणि । रत्ना । दधतौ ।
नि । अस्मे इति । अनु । पूर्वाणि । चख्यथुः । युगानि ॥४॥

**शुश्रुवांसा चिदश्विना पुरूण्यभि ब्रह्माणि चक्षाथे ऽऋषीणाम् ।**
**प्रति प्र यातं वरमा जनायास्मे वामस्तु सुमतिश्चनिष्ठा ॥५॥**
शुश्रुवांसा । चित् । अश्विना । पुरूणि । अभि । ब्रह्माणि ।
चक्षाथे इति । ऋषीणाम् ॥ प्रति । प्र । यातम् । वरम् । आ ।
जनाय । अस्मे इति । वाम् । अस्तु । सुऽमतिः । चनिष्ठा ॥५॥

**यो वां यज्ञो नासत्या हविष्मान्कृतब्रह्मा समर्यो३ भवाति ।**
**उप प्र यातं वरमा वसिष्ठमिमा ब्रह्माण्यृच्यन्ते युवभ्याम् ॥६॥**
यः । वाम् । यज्ञः । नासत्या । हविष्मान् । कृतऽब्रह्मा ।
सऽमर्यः । भवाति ॥ उप । प्र । यातम् । वरम् । आ ।
वसिष्ठम् । इमा । ब्रह्माणि । ऋच्यन्ते । युवऽभ्याम् ॥६॥

**इयं मनीषा ऽइयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम् ।**
**इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥७॥ (१७) [७१४]**
इयम् । मनीषा । इयम् । अश्विना । गीः । इमाम् । सुऽवृक्तिम् ।
वृषणा । जुषेथाम् ॥ इमा । ब्रह्माणि । युवऽयूनि । अगमन् ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

## (७१) [ अथ पञ्चमोऽनुवाकः ॥५॥ सूक्तानि ७१-८९

६ मैत्रावरुणिर्वसिष्ठः । अश्विनौ । त्रिष्टुप् ।

**अप स्वसुरुषसो नग्जिहीते रिणक्ति कृष्णीररुषाय पन्थाम् ।**
**अश्वामघा गोमघा वां हुवेम दिवा नक्तं शरुमस्मद्युयोतम् ॥१॥**

अप॑ । स्वसुः॑ । उ॒षसः॑ । नक् । जि॒ही॒ते॒ । रि॒णक्ति॑ । कृ॒ष्णीः॑ ।
अ॒रु॒षाय॑ । पन्था॑म् ॥ अश्व॑ऽमघा । गो॑ऽमघा । वा॒म् ।
हु॒वे॒म॒ । दिवा॑ । नक्त॑म् । शरु॑म् । अ॒स्मत् । यु॒यो॒त॒म् ॥१॥

उ॒पाया॑तं दा॒शुषे॒ मर्त्या॑य॒ रथे॑न वा॒मम॑श्विना॒ वह॑न्ता ।
यु॒यु॒तम॒स्मदनि॑रा॒मभी॑वां॒ दिवा॒ नक्त॑ माध्वी॒ त्रासी॑थां नः ॥२॥
उ॒प॒ऽआया॑तम् । दा॒शुषे॑ । मर्त्या॑य । रथे॑न । वा॒मम् ।
अ॒श्वि॒ना॒ । वह॑न्ता ॥ यु॒यु॒तम् । अ॒स्मत् । अनि॑राम् ।
अमी॑वाम् । दिवा॑ । नक्त॑म् । मा॒ध्वी॒ इति॑ । त्रासी॑थाम् । न॒ः ॥२॥

आ वां॒ रथ॑मव॒मस्यां॒ व्यु॑ष्टौ सुम्ना॒यवो॒ वृष॑णो वर्त्तयन्तु ।
स्यूम॑गभस्तिमृ॒तयु॒ग्भि॒रश्वै॒राश्वि॑ना॒ वसु॑मन्तं वहेथाम् ॥३॥
आ । वा॒म् । रथ॑म् । अ॒व॒मस्या॑म् । वि॒ऽउ॑ष्टौ । सु॒म्न॒ऽयवः॑ ।
वृष॑णः । व॒र्त्त॒य॒न्तु॒ ॥ स्यूम॑ऽगभस्तिम् । ऋ॒तयु॑क्ऽभिः ।
अश्वैः॑ । आ । अ॒श्वि॒ना॒ । वसु॑ऽमन्तम् । व॒हे॒था॒म् ॥३॥

यो वां॒ रथो॑ नृपती॒ ऽअस्ति॑ वो॒ळ्हा त्रि॑वन्धु॒रो वसु॑माँ ऽउ॒स्रया॑मा ।
आ न॑ ऽए॒ना ना॑स॒त्योप॑ यातम॒भि यद्वां॑ वि॒श्वप्स्न्यो॒ जिगा॑ति ॥४॥
यः । वा॒म् । रथः॑ । नृ॒प॒ती॒ इति॑ नृ॒ऽप॒ती॒ । अस्ति॑ । वो॒ळ्हा ।
त्रि॒ऽव॒न्धु॒रः । वसु॑ऽमान् । उ॒स्र॒ऽया॑मा ॥ आ । न॒ः । ए॒ना । ना॒स॒त्या॒ ।
उप॑ । या॒त॒म् । अ॒भि । यत् । वा॒म् । वि॒श्व॒ऽप्स्न्यः॑ । जिगा॑ति ॥४॥

यु॒वं च्यवा॑नं ज॒रसो॑ऽमुमुक्तं॒ नि पे॒दव॑ ऽऊहथु॒रा॒शुमश्व॑म् ।
निरंह॑स॒स्तम॑सः स्पर्त॒मत्त्रिं॒ नि जा॑हु॒षं शि॑थि॒रे धा॑तम॒न्तः ॥५॥
यु॒वम् । च्यवा॑नम् । ज॒रसः॑ । अ॒मु॒मु॒क्त॒म् । नि । पे॒दवे॑ ।
ऊ॒ह॒थुः॒ । आ॒शुम् । अश्व॑म् ॥ निः । अंह॑सः । तम॑सः ।
स्पर्त॑म् । अत्रि॑म् । नि । जा॒हु॒षम् । शि॒थि॒रे । धा॒त॒म् । अ॒न्तरिति॑ ॥५॥

इयं मनीषा ऽइयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥६॥ ( १८ ) [ ७२० ]
इयम् । मनीषा । इयम् । अश्विना । गीः । इमाम् ।
सु०वृक्तिम् । वृषणा । जुषेथाम् ॥ इमा । ब्रह्माणि । युव०यूनि ।
अग्मन् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥६॥

# ( ७२ )

आ गोमता नासत्या रथेनाश्वावता पुरुश्चन्द्रेण यातम् ।
अभि वां विश्वा नियुतः सचन्ते स्पार्हया श्रिया तन्वा शुभाना ॥१॥
आ । गो०मता । नासत्या । रथेन । अश्व०वता ।
पुरु०चन्द्रेण । यातम् ॥ अभि । वाम् । विश्वाः ।
नि०युतः । सचन्ते । स्पार्हया । श्रिया । तन्वा । शुभाना ॥१॥

आ नो देवेभिरुप यातमर्वाक्सजोषसा नासत्या रथेन ।
युवोर्हि नः सख्या पित्र्याणि समानो बन्धुरुत तस्य वित्तम् ॥२॥
आ । नः । देवेभिः । उप । यातम् । अर्वाक् । स०जोषसा ।
नासत्या । रथेन ॥ युवोः । हि । नः । सख्या ।
पित्र्याणि । समानः । बन्धुः । उत । तस्य । वित्तम् ॥२॥

उदु स्तोमासो ऽअश्विनोरबुध्रञ्जामि ब्रह्माण्युषसश्च देवीः ।
आविवासन्रोदसी धिष्ण्येमे ऽअच्छा विप्रो नासत्या विवक्ति ॥३॥
उत् । ऊँ इति । स्तोमासः । अश्विनोः । अबुध्रन् । जामि ।
ब्रह्माणि । उषसः । च । देवीः ॥ आ०विवासन् । रोदसी इति ।
धिष्ण्ये इति । इमे इति । अच्छ । विप्रः । नासत्या । विवक्ति ॥३॥

वि चेदुच्छन्त्यश्विना उषासः प्र वां ब्रह्माणि कारवो भरन्ते ।
ऊर्ध्वं भानुं सविता देवो अश्रेद्बृहदग्नयः समिधा जरन्ते ॥४॥
वि । च । इत् । उच्छन्ति । अश्विनौ । उषसः । प्र । वाम् ।
ब्रह्माणि । कारवः । भरन्ते ॥ ऊर्ध्वम् । भानुम् । सविता ।
देवः । अश्रेत् । बृहत् । अग्नयः । सम्०इधा । जरन्ते ॥४॥

आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥५॥ (१९) [७२५]
आ । पश्चातात् । नासत्या । आ । पुरस्तात् । आ । अश्विना ।
यातम् । अधरात् । उदक्तात् ॥ आ । विश्वतः । पाञ्च०जन्येन ।
राया । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥५॥

## (७३)

५ मैत्रावरुणिर्वसिष्ठः । अश्विनौ । त्रिष्टुप् ।

अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदंसा पुरुतमा पुराजामर्त्त्या हवते अश्विना गीः ॥१॥
अतारिष्म । तमसः । पारम् । अस्य । प्रति । स्तोमम् ।
देव०यन्तः । दधानाः ॥ पुरु०दंसा । पुरु०तमा ।
पुरा०जा । अमर्त्त्या । हवते । अश्विना । गीः ॥१॥

न्यु प्रियो मनुषः सादि होता नासत्या यो यजते वन्दते च ।
अश्नीतं मध्वो अश्विना उपाक आ वां वोचे विदथेषु प्रयस्वान् ॥२॥
नि । ऊँ इति । प्रियः । मनुषः । सादि । होता । नासत्या ।
यः । यजते । वन्दते । च ॥ अश्नीतम् । मध्वः । अश्विनौ ।
उपाके । आ । वाम् । वोचे । विदथेषु । प्रयस्वान् ॥२॥

अर्हन्त यज्ञं पथामुराणा ऽइमां सुवृक्तिं वृषणा जुषेथाम् ।
श्रुष्टीवेव प्रेषितो वामबोधि प्रति स्तोमैर्जरमाणो वसिष्ठः ॥३॥
अर्हन्त । यज्ञम् । पथाम् । उराणाः । इमाम् । सुऽवृक्तिम् ।
वृषणा । जुषेथाम् ॥ श्रुष्टीवाऽइव । प्रऽइषितः । वाम् ।
अबोधि । प्रति । स्तोमैः । जरमाणः । वसिष्ठः ॥३॥

उप त्या वह्नी गमतो विशं नो रक्षोहणा संभृता वीळुपाणी ।
समन्धांस्यग्मत मत्सराणि मा नो मर्धिष्टमा गतं शिवेन ॥४॥
उप । त्या । वह्नी इति । गमतः । विशम् । नः । रक्षःऽहना ।
सम्ऽभृता । वीळुपाणी इति वीळुऽपाणी ॥ सम् । अन्धांसि ।
अग्मत । मत्सराणि । मा । नः । मर्धिष्टम् । आ । गतम् । शिवेन ॥४॥

आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥५॥ ( २० ) [ ७३० ]
आ । पश्चातात् । नासत्या । आ । पुरस्तात् । आ । अश्विना ।
यातम् । अधरात् । उदक्तात् ॥ आ । विश्वतः । पाञ्चऽजन्येन ।
राया । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

# ( ७४ )

६ मैत्रावरुणिर्वसिष्ठः । अश्विनौ । प्रगाथः = ( विषमा बृहती, समा सतोबृहती )

इमा ऽउ वां दिविष्टय ऽउस्रा हवन्ते ऽअश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥१॥
इमाः । ऊँ इति । वाम् । दिविष्टयः । उस्रा । हवन्ते ।
अश्विना ॥ अयम् । वाम् । अह्वे । अवसे । शचीवसू इति ।
शचीऽवसू । विशम्ऽविशम् । हि । गच्छथः ॥१॥

युवं चित्रं ददथुर्भोजनं नरा चोदेथां सूनृतावते ।
अर्वाग्रथं समनसा नि यच्छतं पिबतं सोम्यं मधु ॥२॥
युवम् । चित्रम् । ददथुः । भोजनम् । नरा । चोदेथाम् ।
सूनृता०वते ॥ अर्वाक् । रथम् । स०मनसा । नि ।
यच्छतम् । पिबतम् । सोम्यम् । मधु ॥

आ यातमुप भूषतं मध्वः पिबतमश्विना ।
दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतम् ॥३॥
आ । यातम् । उप । भूषतम् । मध्वः । पिबतम् ।
अश्विना ॥ दुग्धम् । पयः । वृषणा । जेन्यावसू इति ।
मा । नः । मर्धिष्टम् । आ । गतम् ॥३॥

अश्वासो ये वामुप दाशुषो गृहं युवां दीयन्ति बिभ्रतः ।
मक्षूयुभिर्नरा हयेभिरश्विना देवा यातमस्मयू ॥४॥
अश्वासः । ये । वाम् । उप । दाशुषः । गृहम् । युवाम् ।
दीयन्ति । बिभ्रतः ॥ मक्षुयु०भिः । नरा । हयेभिः ।
अश्विना । आ । देवा । यातम् । अस्मयू इत्यस्म०यू ॥४॥

अधा ह यन्तो ऽअश्विना पृक्षः सचन्त सूरयः ।
ता यंसतो मघवद्भ्यो ध्रुवं यशश्छर्दिरस्मभ्यं नासत्या ॥५॥
अध । ह । यन्तः । अश्विना । पृक्षः । सचन्त ।
सूरयः ॥ ता । यंसतः । मघवत्०भ्यः । ध्रुवम् ।
यशः । छर्दिः । अस्मभ्यम् । नासत्या ॥५॥

प्र ये ययुरवृकासो रथाइव नृपतारो जनानाम् ।
उत स्वेन शवसा शूशुवुर्नर ऽउत क्षियन्ति सुक्षितिम् ॥६॥ ( २१ ) [ ७३६ ]

प्र । ये । ययुः । अवृकासः । रथाःऽइव ।
नृ०पातारः । जनानाम् ॥ उत । स्वेन । शवसा ।
शूशुवुः । नरः । उत । क्षियन्ति । सु०क्षितिम् ॥६॥

# ( ७५ )

८ मैत्रावरुणिर्वसिष्ठः । उषसः । त्रिष्टुप् ।

**व्युर्षा ऽआवो दिविजा ऽऋतेनाविष्कृण्वाना महिमानमागात् ।**
**अप द्रुहस्तम ऽआवरजुष्टमङ्गिरस्तमा पथ्या ऽअजीगः ॥१॥**
वि । उषाः । आवः । दिवि०जाः । ऋतेन । आविः२कृण्वाना ।
महिमानम् । आ । अगात् ॥ अप । द्रुहः । तमः । आवः ।
अजुष्टम् । अङ्गिरः२तमा । पथ्याः । अजीगरिति ॥१॥

**महे नो ऽअद्य सुवितायं बोध्युषो महे सौभगाय प्र यन्धि ।**
**चित्रं रयिं यशसं धेह्यस्मे देवि मर्त्तेषु मानुषि श्रवस्युम् ॥२॥**
महे । नः । अद्य । सुवितायं । बोधि । उषः । महे ।
सौभगाय । प्र । यन्धि ॥ चित्रम् । रयिम् । यशसम् ।
धेहि । अस्मे इति । देवि । मर्त्तेषु । मानुषि । श्रवस्युम् ॥२॥

**एते त्ये भानवो दर्शतायाश्चित्रा ऽउषसो ऽअमृतास ऽआगुः ।**
**जनयन्तो दैव्यानि व्रतान्यापृणन्तो ऽअन्तरिक्षा व्यस्थुः ॥३॥**
एते । त्ये । भानवः । दर्शतायाः । चित्राः । उषसः ।
अमृतासः । आ । अगुः ॥ जनयन्तः । दैव्यानि ।
व्रतानि । आ०पृणन्तः । अन्तरिक्षा । वि । अस्थुः ॥३॥

**एषा स्या युजाना पराकात्पञ्च क्षितीः परि सद्यो जिगाति ।**
**अभिपश्यन्ती वयुना जनानां दिवो दुहिता भुवनस्य पत्नी ॥४॥**

एषा । स्या । युजाना । पराकात् । पञ्च । क्षितीः ।
परि । सद्यः । जिगाति ॥ अभि॰पश्यन्ती । वयुना ।
जनानाम् । दिवः । दुहिता । भुवनस्य । पत्नी ॥४॥

**वाजिनीवती सूर्यस्य योषा चित्रामघा राय ऽईशे वसूनाम् ।**
**ऋषिष्टुता जरयन्ती मघोन्युषा ऽउच्छति वह्निभिर्गृणाना ॥५॥**
वाजिनी॰वती । सूर्यस्य । योषा । चित्र॰मघा ।
रायः । ईशे । वसूनाम् ॥ ऋषि॰स्तुता । जरयन्ती ।
मघोनी । उषाः । उच्छति । वह्नि॰भिः । गृणाना ॥५॥

**प्रति द्युतानामरुषासो ऽअश्वाश्चित्रा ऽअदृश्रन्नुषसं वहन्तः ।**
**याति शुभ्रा विश्वपिशा रथेन दधाति रत्नं विधते जनाय ॥६॥**
प्रति । द्युतानाम् । अरुषासः । अश्वाः । चित्राः ।
अदृश्रन् । उषसम् । वहन्तः ॥ याति । शुभ्रा ।
विश्व॰पिशा । रथेन । दधाति । रत्नम् । विधते । जनाय ॥६॥

**सत्या सत्येभिर्महती महद्भिर्देवी देवेभिर्यजता यजत्रैः ।**
**रुजद्दृळ्हानि दददुस्रियाणां प्रति गाव ऽउषसं वावशन्त ॥७॥**
सत्या । सत्येभिः । महती । महत्॰भिः । देवी । देवेभिः ।
यजता । यजत्रैः ॥ रुजत् । दृळ्हानि । ददत् ।
उस्रियाणम् । प्रति । गावः । उषसम् । वावशन्त ॥७॥

**नू नो गोमद्वीरवद्धेहि रत्नमुषो ऽअश्वावत्पुरुभोजो ऽअस्मे ।**
**मा नो बर्हिः पुरुषता निदे कर्यूयं पात स्वस्तिभिः सदा नः ॥८॥ ( २२ ) [ ७४४ ]**
नु । नः । गो॰मत् । वीर॰वत् । धेहि । रत्नम् । उषः ।
अश्व॰वत् । पुरु॰भोजः । अस्मे इति ॥ मा । नः । बर्हिः ।
पुरुषता । निदे । कः । यूयम् । पात । स्वस्ति॰भिः । सदा । नः ॥८॥

# ( ७६ )

७ मैत्रावरुणिर्वसिष्ठः । उषसः । त्रिष्टुप् ।

उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो ऽअश्रेत् ।
क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ॥१॥
उत् । ऊँ इति । ज्योतिः । अमृतम् । विश्व०जन्यम् । विश्वानरः ।
सविता । देवः । अश्रेत् ॥ क्रत्वा । देवानाम् । अजनिष्ट ।
चक्षुः । आविः । अकः । भुवनम् । विश्वम् । उषाः ॥१॥

प्र मे पन्था देवयाना ऽअदृश्रन्नमर्द्धन्तो वसुभिरिष्कृतासः ।
अभूदु केतुरुषसः पुरस्तात्प्रतीच्यागादधि हर्म्येभ्यः ॥२॥
प्र । मे । पन्थाः । देव०यानाः । अदृश्रन् । अमर्द्धन्तः ।
वसु०भिः । इष्कृतासः ॥ अभूत् । ऊँ इति । केतुः । उषसः ।
पुरस्तात् । प्रतीची । आ । अगात् । अधि । हर्म्येभ्यः ॥२॥

तानीदहानि बहुलान्यासन्या प्राचीनमुदिता सूर्यस्य ।
यतः परि जारईवाचरन्त्युषो ददृक्षे न पुनर्यतीव ॥३॥
तानि । इत् । अहानि । बहुलानि । आसन् । या । प्राचीनम् ।
उत्०ईता । सूर्यस्य ॥ यतः । परि । जारःऽईव । आ०चरन्ती ।
उषः । ददृक्षे । न । पुनः । यतीऽईव ॥३॥

त ऽइद्देवानां सधमाद ऽआसन्नृतावानः कवयः पूर्व्यासः ।
गूळ्हं ज्योतिः पितरो ऽअन्वविन्दन्त्सत्यमन्त्रा ऽअजनयन्नुषासम् ॥४॥
ते । इत् । देवानाम् । सध०मादः । आसन् । ऋत०वानः ।
कवयः । पूर्व्यासः ॥ गूळ्हम् । ज्योतिः । पितरः । अनु ।
अविन्दन् । सत्य०मन्त्राः । अजनयन् । उषसम् ॥४॥

समान ऽऊर्वे ऽअधि संगतासः सं जानते न यतन्ते मिथस्ते ।
ते देवानां न मिनन्ति व्रतान्यमर्द्धन्तो वसुभिर्यादमानाः ॥५॥
समाने । ऊर्वे । अधि । सम्०गतासः । सम् । जानते ।
न । यतन्ते । मिथः । ते ॥ ते । देवानाम् । न ।
मिनन्ति । व्रतानि । अमर्द्धन्तः । वसु०भिः । यादमानाः ॥५॥

प्रति त्वा स्तोमैरीळते वसिष्ठा ऽउषर्बुधः सुभगे तुष्टुवांसः ।
गवां नेत्री वाजपत्नी न ऽउच्छोषः सुजाते प्रथमा जरस्व ॥६॥
प्रति । त्वा । स्तोमैः । ईळते । वसिष्ठाः । उषः२बुधः ।
सु०भगे । तुस्तु०वांसः ॥ गवाम् । नेत्री । वाज०पत्नी ।
नः । उच्छ । उषः । सु०जाते । प्रथमा । जरस्व ॥६॥

एषा नेत्री राधसः सूनृतानामुषा ऽउच्छन्ती रिभ्यते वसिष्ठैः ।
दीर्घश्रुतं रयिमस्मे दधाना यूयं पात स्वस्तिभिः सदा नः ॥७॥ ( २३ ) [ ७५१ ]
एषा । नेत्री । राधसः । सूनृतानाम् । उषाः । उच्छन्ती ।
रिभ्यते । वसिष्ठैः ॥ दीर्घ०श्रुतम् । रयिम् । अस्मे इति ।
दधाना । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥७॥

## ( ७७ )

६ मैत्रावरुणिर्वसिष्ठः । उषसः । त्रिष्टुप् ।

उपो रुरुचे युवतिर्न योषा विश्वं जीवं प्रसुवन्ती चरायै ।
अभूदग्निः समिधे मानुषाणामकर्ज्योतिर्बाधमाना तमांसि ॥१॥
उपो इति । रुरुचे । युवतिः । न । योषा । विश्वम् । जीवम् ।
प्र०सुवन्ती । चरायै ॥ अभूत् । अग्निः । सम्०इधे ।
मानुषाणाम् । अकः । ज्योतिः । बाधमाना । तमांसि ॥१॥

**विश्वं प्रतीची सप्रथा ऽउदस्थाद्रुशद्वासो बिभ्रती शुक्रमश्वैत् ।**
**हिरण्यवर्णा सुदृशीकसंदृग्गवां माता नेत्र्यह्नामरोचि ॥२॥**

विश्वम् । प्रतीची । स०प्रथाः । उत् । अस्थात् । रुशत् । वासः ।
बिभ्रती । शुक्रम् । अश्वैत् ॥ हिरण्य०वर्णा । सुदृशीक०संदृक् ।
गवाम् । माता । नेत्री । अह्नाम् । अरोचि ॥२॥

**देवानां चक्षुः सुभगा वहन्ती श्वेतं नयन्ती सुदृशीकमश्वम् ।**
**उषा ऽअदर्शि रश्मिभिर्व्यक्ता चित्रामघा विश्वमनु प्रभूता ॥३॥**

देवानाम् । चक्षुः । सु०भगा । वहन्ती । श्वेतम् । नयन्ती ।
सु०दृशीकम् । अश्वम् ॥ उषाः । अदर्शि । रश्मि०भिः ।
वि०अक्ता । चित्र०मघा । विश्वम् । अनु । प्र०भूता ॥३॥

**अन्तिवामा दूरे ऽअमित्रमुच्छोर्वीं गव्यूतिमभयं कृधी नः ।**
**यावय द्वेष ऽआ भरा वसूनि चोदय राधो गृणते मघोनि ॥४॥**

अन्ति०वामा । दूरे । अमित्रम् । उच्छ । उर्वीम् ।
गव्यूतिम् । अभयम् । कृधि । नः ॥ यवय । द्वेषः ।
आ । भर । वसूनि । चोदय । राधः । गृणते । मघोनि ॥४॥

**अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्युषो देवि प्रतिरन्ती न ऽआयुः ।**
**इषं च नो दधती विश्ववारे गोमदश्वावद्रथवच्च राधः ॥५॥**

अस्मे इति । श्रेष्ठेभिः । भानु०भिः । वि । भाहि । उषः ।
देवि । प्र०तिरन्ती । नः । आयुः ॥ इषम् । च । नः । दधती ।
विश्व०वारे । गो०मत् । अश्व०वत् । रथ०वत् । च । राधः ॥५॥

**यां त्वा दिवो दुहितर्वर्द्धयन्त्युषः सुजाते मतिभिर्वसिष्ठाः ।**
**सास्मासु धा रयिमृष्वं बृहन्तं यूयं पात स्वस्तिभिः सदा नः॥६॥ ( २४ ) [ ७५७ ]**

याम् । त्वा । दिवः । दुहितः । वर्द्धयन्ति । उर्षः । सु०जाते ।
मति०भिः । वसिष्ठाः ॥ सा । अस्मासु । धाः । रयिम् ।
ऋष्वम् । बृहन्तम् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥६॥

# ( ७८ )

५ मैत्रावरुणिर्वसिष्ठः । उषसः । त्रिष्टुप् ।

**प्रति केतवः प्रथमा ऽअदृश्रन्नूर्ध्वा ऽअस्या ऽअञ्जयो वि श्रयन्ते ।**
**उषो ऽअर्वाचा बृहता रथेन ज्योतिष्मता वाममस्मभ्यं वक्षि ॥१॥**

प्रति । केतवः । प्रथमाः । अदृश्रन् । ऊर्ध्वाः । अस्याः ।
अञ्जयः । वि । श्रयन्ते ॥ उषः । अर्वाचा । बृहता ।
रथेन । ज्योतिष्मता । वामम् । अस्मभ्यम् । वक्षि ॥१॥

**प्रति षीमग्निर्जरते समिद्धः प्रति विप्रासो मतिभिर्गृणन्तः ।**
**उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरितापं देवी ॥२॥**

प्रति । सीम् । अग्निः । जरते । सम्०इद्धः । प्रति । विप्रासः ।
मति०भिः । गृणन्तः ॥ उषाः । याति । ज्योतिषा ।
बाधमाना । विश्वा । तमांसि । दुः२इता । अप । देवी ॥२॥

**एता ऽउ त्याः प्रत्यदृश्रन्पुरस्ताज्ज्योतिर्यच्छन्तीरुषसो विभातीः ।**
**अजीजनन्त्सूर्यं यज्ञमग्निमपाचीनं तमो ऽअगादजुष्टम् ॥३॥**

एताः । ऊँ इति । त्याः । प्रति । अदृश्रन् । पुरस्तात् । ज्योतिः ।
यच्छन्तीः । उषसः । वि०भातीः ॥ अजीजनन् । सूर्यम् । यज्ञम् ।
अग्निम् । अपाचीनम् । तमः । अगात् । अजुष्टम् ॥३॥

**अचेति दिवो दुहिता मघोनी विश्वे पश्यन्त्युषसं विभातीम् ।**
**आस्थाद्रथं स्वधया युज्यमानमा यमश्वासः सुयुजो वहन्ति ॥४॥**

अचेति । दिवः । दुहिता । मघोनी । विश्वे । पश्यन्ति ।
उषसम् । वि०भातीम् ॥ आ । अस्थात् । रथम् । स्वधया ।
युज्यमानम् । आ । यम् । अश्वासः । सु०युजः । वहन्ति ॥४॥

प्रति त्वाद्य सुमनसो बुधन्तास्माकासो मघवानो वयं च ।
तिल्विलायध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः ॥५॥ ( २५ ) [ ७६२ ]
प्रति । त्वा । अद्य । सु०मनसः । बुधन्त । अस्माकासः ।
मघ०वानः । वयम् । च ॥ तिल्विलायध्वम् । उषसः ।
वि०भातीः । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥५॥

## ( ७९ )

५ मैत्रावरुणिर्वसिष्ठः । उषसः । त्रिष्टुप् ।

व्युषा ऽआवः पथ्या३ जनानां पञ्च क्षितीर्मानुषीर्बोधयन्ती ।
सुसंदृग्भिरुक्षभिर्भानुमश्रेद्वि सूर्यो रोदसी चक्षसावः ॥१॥
वि । उषाः । आवः । पथ्या । जनानाम् । पञ्च । क्षितीः ।
मानुषीः । बोधयन्ती ॥ सुसन्दृक्०भिः । उक्ष०भिः । भानुम् ।
अश्रेत् । वि । सूर्यः । रोदसी इति । चक्षसा । आवरित्यावः ॥१॥

व्यञ्जते दिवो ऽअन्तेष्वक्तून्विशो न युक्ता ऽउषसो यतन्ते ।
सं ते गावस्तम ऽआ वर्त्तयन्ति ज्योतिर्यच्छन्ति सवितेव बाहू ॥२॥
वि । अञ्जते । दिवः । अन्तेषु । अक्तून् । विशः । न ।
युक्ताः । उषसः । यतन्ते ॥ सम् । ते । गावः । तमः । आ ।
वर्त्तयन्ति । ज्योतिः । यच्छन्ति । सविताऽइव । बाहू इति ॥२॥

अभूदुषा ऽइन्द्रतमा मघोन्यजीजनत्सुविताय श्रवांसि ।
वि दिवो देवी दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि ॥३॥

अभूत् । उषाः । इन्द्र॰तमा । मघोनी । अजीजनत् ।
सुवितार्य । श्रवांसि ॥ वि । दिवः । देवी । दुहिता ।
दधाति । अङ्गिरः२तमा । सु॰कृते । वसूनि ॥३॥

**तावदुषो राधो ऽअस्मभ्यं रास्व यावत्स्तोतृभ्यो ऽअरदो गृणाना ।**
**यां त्वा जज्ञुर्वृषभस्या रवेण वि दृळ्हस्य दुरो ऽअद्रेरौर्णोः ॥४॥**
तावत् । उषः । राधः । अस्मभ्यम् । रास्व । यावत् ।
स्तोतृ॰भ्यः । अरदः । गृणाना ॥ याम् । त्वा । जज्ञुः ।
वृषभस्य । रवेण । वि । दृळ्हस्य । दुरः । अद्रेः । और्णोः ॥४॥

**देवंदेवं राधसे चोदयन्त्यस्मद्र्यक्सूनृता ऽईरयन्ती ।**
**व्युच्छन्ती नः सनये धियो धा यूयं पात स्वस्तिभिः सदा नः ॥५॥ ( २६ ) [ ७६७ ]**
देवम्॰देवम् । राधसे । चोदयन्ती । अस्मद्र्यक् । सूनृताः ।
ईरयन्ती ॥ वि॰उच्छन्ती । नः । सनये । धियः ।
धाः । यूयम् । पात । स्वस्ति॰भिः । सदा । नः ॥५॥

## ( ८० )

**३ मैत्रावरुणिर्वसिष्ठः । उषसः । त्रिष्टुप् ।**

**प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा ऽअबुध्रन् ।**
**विवर्त्तयन्तीं रजसी समन्ते ऽआविष्कृण्वतीं भुवनानि विश्वा ॥१॥**
प्रति । स्तोमेभिः । उषसम् । वसिष्ठाः । गीःर्भिः । विप्रासः ।
प्रथमाः । अबुध्रन् ॥ वि॰वर्त्तयन्तीम् । रजसी इति । समन्ते इति ।
सम्॰अन्ते । आविः२कृण्वतीम् । भुवनानि । विश्वा ॥१॥

**एषा स्या नव्यमायुर्दधाना गूढ्वी तमो ज्योतिषोषा ऽअबोधि ।**

**अग्र ऽएति युवतिरह्रयाणा प्राचिकितत्सूर्यं यज्ञमग्निम् ॥२॥**

एषा । स्या । नव्यम् । आयुः । दधाना । गूढ्वी । तमः ।

ज्योतिषा । उषाः । अबोधि ॥ अग्रे । एति । युवतिः ।

अह्रयाणा । प्र । अचिकितत् । सूर्यम् । यज्ञम् । अग्निम् ॥२॥

**अश्वावतीर्गोमतीर्न ऽउषासो वीरवतीः सदमुच्छन्तु भद्राः ।**

**घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः॥३॥ ( २७ ) [ ७७० ]**

अश्व०वतीः । गो०मतीः । नः । उषसः । वीर०वतीः । सदम् ।

उच्छन्तु । भद्राः ॥ घृतम् । दुहानाः । विश्वतः । प्र०पीताः ।

यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥३॥

**॥ इति पञ्चमाष्टके पञ्चमोऽध्यायः ॥ ५ ॥**

# पञ्चमाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां पञ्चमाष्टके पञ्चमोऽध्यायः ॥
(पञ्चमाध्याये वर्गाः २७, सूक्तानि २१, ऋचः १५०)

# ॥ पञ्चमाष्टके षष्ठोऽध्यायः॥

**अथ षष्ठोऽध्यायः॥६॥ वर्गाः १-२५ ]** [ सप्तममण्डले सूक्तानि ८१-१०० ]

## ( ८१ )

६ मैत्रावरुणिर्वसिष्ठः । उषसः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।

**प्रत्यु ऽअदर्श्यायत्युच्छन्ती दुहिता दिवः ।**

**अपो महिं व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥१॥**

प्रतिं । ऊँ इतिं । अदर्शि । आ॰यती । उच्छन्ती ।

दुहिता । दिवः ॥ अपो इतिं । महिं । व्ययति ।

चक्षसे । तमः । ज्योतिः । कृणोति । सूनरी ॥१॥

**उदुस्त्रियाः सृजते सूर्यः सचाँ ऽउद्यन्नक्षत्रमर्चिवत् ।**

**तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥२॥**

उत् । उस्त्रियाः । सृजते । सूर्यः । सचा । उत्॰यत् ।

नक्षत्रम् । अर्चि॰वत् ॥ तव । इत् । उषः । वि॰उषि ।

सूर्यस्य । च । सम् । भक्तेन । गमेमहि ॥२॥

**प्रतिं त्वा दुहितर्दिव ऽउषो जीरा ऽअभुत्स्महि ।**

**या वहसि पुरु स्पार्हं वनन्वति रत्नं न दाशुषे मयः ॥३॥**

प्रतिं । त्वा । दुहितः । दिवः । उषः । जीराः ।

अभुत्स्महि ॥ या । वहसि । पुरु । स्पार्हम् ।

वनन्॰वति । रत्नम् । न । दाशुषे । मयः ॥३॥

**उच्छन्ती या कृणोषि मंहना महि प्रख्यै देवि स्वर्दृशे ।**

**तस्यास्ते रत्नभाज ऽईमहे वयं स्याम मातुर्न सूनवः ॥४॥**

उच्छन्ती । या । कृणोषि । मंहना । महि । प्र०ख्यै ।
देवि । स्वः । दृशे ॥ तस्याः । ते । रत्न०भाजः ।
ईमहे । वयम् । स्याम । मातुः । न । सूनवः ॥४॥

**तच्चित्रं राध ऽआ भरोषो यद्दीर्घश्रुत्तमम् ।**
**यत्ते दिवो दुहितर्मर्त्तभोजनं तद्रास्व भुनजामहै ॥५॥**
तत् । चित्रम् । राधः । आ । भर । उषः । यत् ।
दीर्घश्रुत्०तमम् ॥ यत् । ते । दिवः । दुहितः ।
मर्त्त०भोजनम् । तत् । रास्व । भुनजामहै ॥५॥

**श्रवः सूरिभ्यो ऽअमृतं वसुत्वनं वाजाँ ऽअस्मभ्यं गोमतः ।**
**चोदयित्री मघोनः सूनृतावत्युषा ऽउच्छदप स्त्रिधः ॥६॥ ( १ )** [ ७७६ ]
श्रवः । सूरि०भ्यः । अमृतम् । वसु०त्वनम् । वाजान् ।
अस्मभ्यम् । गो०मतः ॥ चोदयित्री । मघोनः ।
सूनृता०वती । उषाः । उच्छत् । अप । स्त्रिधः ॥६॥

## ( ८२ )

१० मैत्रावरुणिर्वसिष्ठः । इन्द्रावरुणौ । जगती ।

**इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।**
**दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥१॥**
इन्द्रावरुणा । युवम् । अध्वराय । नः । विशे । जनाय ।
महि । शर्म । यच्छतम् ॥ दीर्घप्रयज्युम् । अति । यः ।
वनुष्यति । वयम् । जयेम । पृतनासु । दुः२ध्यः ॥१॥

**सम्राळन्यः स्वराळन्य ऽउच्यते वां महान्ताविन्द्रावरुणा महावसू ।**
**विश्वे देवासः परमे व्योमनि सं वामोजो वृषणा सं बलं दधुः ॥२॥**

सम्ऽराट् । अन्यः । स्वऽराट् । अन्यः । उच्यते । वाम् । महान्तौ ।
इन्द्रावरुणा । महावसू इति महाऽवसू ॥ विश्वे । देवासः । परमे ।
विऽओमनि । सम् । वाम् । ओजः । वृषणा । सम् । बलम् । दधुः ॥२॥

**अन्वपां खान्यतृन्तमोजसा सूर्यमैरयतं दिवि प्रभुम् ।**
**इन्द्रावरुणा मदे ऽअस्य मायिनोऽपिन्वतमपितः पिन्वतं धियः ॥३॥**
अनु । अपाम् । खानि । अतृन्तम् । ओजसा । आ । सूर्यम् ।
ऐरयतम् । दिवि । प्रऽभुम् ॥ इन्द्रावरुणा । मदे । अस्य ।
मायिनः । अपिन्वतम् । अपितः । पिन्वतम् । धियः ॥३॥

**युवामिद्युत्सु पृतनासु वह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः ।**
**ईशाना वस्व ऽउभयस्य कारव ऽइन्द्रावरुणा सुहवा हवामहे ॥४॥**
युवाम् । इत् । युत्ऽसु । पृतनासु । वह्नयः । युवाम् । क्षेमस्य ।
प्रऽसवे । मितऽज्ञवः ॥ ईशाना । वस्वः । उभयस्य ।
कारवः । इन्द्रावरुणा । सुऽहवा । हवामहे ॥४॥

**इन्द्रावरुणा यदिमानि चक्रथुर्विश्वा जातानि भुवनस्य मज्मना ।**
**क्षेमेण मित्रो वरुणं दुवस्यति मरुद्भिरुग्रः शुभमन्य ऽईयते ॥५॥**
इन्द्रावरुणा । यत् । इमानि । चक्रथुः । विश्वा । जातानि ।
भुवनस्य । मज्मना ॥ क्षेमेण । मित्रः । वरुणम् । दुवस्यति ।
मरुत्ऽभिः । उग्रः । शुभम् । अन्यः । ईयते ॥५॥

**महे शुल्काय वरुणस्य नु त्विष ऽओजो मिमाते ध्रुवमस्य यत्स्वम् ।**
**अजामिमन्यः श्नथयन्तमातिरद्दभ्रेभिरन्यः प्र वृणोति भूयसः ॥६॥**
महे । शुल्काय । वरुणस्य । नु । त्विषे । ओजः । मिमाते इति ।
ध्रुवम् । अस्य । यत् । स्वम् ॥ अजामिम् । अन्यः । श्नथयन्तम् ।
आ । अतिरत् । दभ्रेभिः । अन्यः । प्र । वृणोति । भूयसः ॥६॥

न तमंहो न दुरितानि मर्त्यमिन्द्रावरुणा न तपः कुतश्चन ।
यस्यं देवा गच्छंथो वीथो ऽअध्वरं न तं मर्त्तस्य नशते परिंह्वृतिः ॥७॥
न । तम् । अंहः । न । दुःऽइतानि । मर्त्यम् । इन्द्रावरुणा ।
न । तपः । कुतः । चन ॥ यस्यं । देवा । गच्छंथः । वीथः ।
अध्वरम् । न । तम् । मर्त्तस्य । नशते । परिं०ह्वृतिः ॥७॥

अर्वाङ् नरा दैव्येनावसा गंतं शृणुतं हवं यदिं मे जुजोषथः ।
युवोर्हि सख्यमुत वा यदाप्यं मार्डीकमिन्द्रावरुणा नि यच्छतम् ॥८॥
अर्वाक् । नरा । दैव्येन । अवसा । आ । गतम् । शृणुतम् ।
हवम् । यदि । मे । जुजोषथः । युवोः । हि । सख्यम् । उत ।
वा । यत् । आप्यम् । मार्डीकम् । इन्द्रावरुणा । नि । यच्छतम् ॥८॥

अस्माकमिन्द्रावरुणा भरेंभरे पुरोयोधा भवतं कृष्ट्योजसा ।
यद्वां हवन्त ऽउभये ऽअध स्पृधि नरस्तोकस्य तनयस्य सातिषु ॥९॥
अस्माकम् । इन्द्रावरुणा । भरे०भरे । पुरःऽयोधा ।
भवतम् । कृष्टि०ओजसा ॥ यत् । वाम् । हवन्ते । उभये ।
अध । स्पृधि । नरः । तोकस्य । तनयस्य । सातिषु ॥९॥

अस्मे ऽइन्द्रो वरुणो मित्रो ऽअर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥१०॥ ( ३ ) [ ७८६ ]
अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् ।
यच्छन्तु । महि । शर्म । स०प्रथः ॥ अवध्रम् । ज्योतिः ।
अदितेः । ऋत०वृधः । देवस्य । श्लोकम् । सवितुः । मनामहे ॥१०॥

# (८३)

१० मैत्रावरुणिर्वसिष्ठः । इन्द्रावरुणौ । जगती ।

**युवां नरा पश्यमानास ऽआप्यं प्राचा गव्यन्तः पृथुपर्शवो ययुः ।**
**दासा च वृत्रा हतमार्याणि च सुदासमिन्द्रावरुणावसावतम् ॥१॥**

युवम् । नरा । पश्यमानासः । आप्यम् । प्राचा । गव्यन्तः ।
पृथु०पर्शवः । ययुः ॥ दासा । च । वृत्रा । हतम् । आर्याणि ।
च । सु०दासम् । इन्द्रावरुणा । अवसा । अवतम् ॥१॥

**यत्रा नरः समयन्ते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियम् ।**
**यत्रा भयन्ते भुवना स्वर्दृशस्तत्रा न ऽइन्द्रावरुणाधि वोचतम् ॥२॥**

यत्र । नरः । सम्०अयन्ते । कृत०ध्वजः । यस्मिन् । आजा ।
भवति । किम् । चन । प्रियम् ॥ यत्र । भयन्ते । भुवना ।
स्वः२दृशः । तत्र । नः । इन्द्रावरुणा । अधि । वोचतम् ॥२॥

**सं भूम्या ऽअन्ता ध्वसिरा ऽअदृक्षतेन्द्रावरुणा दिवि घोष ऽआरुहत् ।**
**अस्थुर्जनानामुप मामरातयोऽर्वागवसा हवनश्रुता गतम् ॥३॥**

सम् । भूम्याः । अन्ताः । ध्वसिराः । अदृक्षत । इन्द्रावरुणा । दिवि ।
घोषः । आ । अरुहत् ॥ अस्थुः । जनानाम् । उप । माम् ।
अरातयः । अर्वाक् । अवसा । हवन०श्रुता । आ । गतम् ॥३॥

**इन्द्रावरुणा वधनाभिरप्रति भेदं वन्वन्ता प्र सुदासमावतम् ।**
**ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत्पुरोहितिः ॥४॥**

इन्द्रावरुणा । वधनाभिः । अप्रति । भेदम् । वन्वन्ता । प्र ।
सु०दासम् । आवतम् ॥ ब्रह्माणि । एषाम् । शृणुतम् ।
हवीमनि । सत्या । तृत्सूनाम् । अभवत् । पुरः२हितिः ॥४॥

इन्द्रावरुणावभ्या तपन्ति माघान्यर्यो वनुषामरातयः ।
युवं हि वस्व उभयस्य राजथोऽध स्मा नोऽवतं पार्ये दिवि ॥५॥ (४)
इन्द्रावरुणौ । अभि । आ । तपन्ति । मा । अघानि । अर्यः ।
वनुषाम् । अरातयः ॥ युवम् । हि । वस्वः । उभयस्य ।
राजथः । अध । स्म । नः । अवतम् । पार्ये । दिवि ॥५॥

युवां हवन्त उभयास आजिष्विन्द्रं च वस्वो वरुणं च सातये ।
यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह ॥६॥
युवाम् । हवन्ते । उभयासः । आजिषु । इन्द्रम् । च । वस्वः ।
वरुणम् । च । सातये ॥ यत्र । राज॰भिः । दश॰भिः ।
नि॰बाधितम् । प्र । सु॰दासम् । आवतम् । तृत्सु॰भिः । सह ॥६॥

दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः ।
सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन्देवहूतिषु ॥७॥
दश । राजानः । सम्॰इताः । अयज्यवः । सु॰दासम् ।
इन्द्रावरुणा । न । युयुधुः ॥ सत्या । नृणाम् । अद्म॰सदाम् ।
उप॰स्तुतिः । देवाः । एषाम् । अभवन् । देव॰हूतिषु ॥७॥

दाशराज्ञे परियत्ताय विश्वतः सुदास इन्द्रावरुणावशिक्षतम् ।
श्वित्यञ्चो यत्र नमसा कपर्दिनो धिया धीवन्तो असपन्त तृत्सवः ॥८॥
दाश॰राज्ञे । परि॰यत्ताय । विश्वतः । सु॰दासे ।
इन्द्रावरुणौ । अशिक्षतम् ॥ श्वित्यञ्चः । यत्र । नमसा ।
कपर्दिनः । धिया । धी॰वन्तः । असपन्त । तृत्सवः ॥८॥

वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभिरस्मे इन्द्रावरुणा शर्म यच्छतम् ॥९॥

वृत्राणि । अन्यः । सम्०इथेषु । जिघ्नते । व्रतानि । अन्यः ।
अभि । रक्षते । सदा ॥ हवामहे । वाम् । वृषणा ।
सुवृक्ति०भिः । अस्मे इति । इन्द्रावरुणा । शर्म । यच्छतम् ॥९॥

**अस्मे ऽइन्द्रो वरुणो मित्रो ऽअर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।**
**अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥१०॥ ( ५ ) [ ७९६ ]**
अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् ।
यच्छन्तु । महि । शर्म । स०प्रथः ॥ अवध्रम् । ज्योतिः ।
अदितेः । ऋत०वृधः । देवस्य । श्लोकम् । सवितुः । मनामहे ॥१०॥

# ( ८४ )

**५ मैत्रावरुणिर्वसिष्ठः । इन्द्रावरुणौ । त्रिष्टुप् ।**

**आ वां राजानावध्वरे ववृत्यां हव्येभिरिन्द्रावरुणा नमोभिः ।**
**प्र वां घृताची बाह्वोर्दधाना परि त्मना विषुरूपा जिगाति ॥१॥**
आ । वाम् । राजानौ । अध्वरे । ववृत्याम् । हव्येभिः ।
इन्द्रावरुणा । नमःऽभिः ॥ प्र । वाम् । घृताची । बाह्वोः ।
दधाना । परि । त्मना । विषु०रूपा । जिगाति ॥१॥

**युवो राष्ट्रं बृहदिन्वति द्यौर्यौ सेतृभिररज्जुभिः सिनीथः ।**
**परि नो हेळो वरुणस्य वृज्या ऽउरुं न ऽइन्द्रः कृणवदु लोकम् ॥२॥**
युवोः । राष्ट्रम् । बृहत् । इन्वति । द्यौः । यौ । सेतृ०भिः ।
अरज्जु०भिः । सिनीथः ॥ परि । नः । हेळः । वरुणस्य ।
वृज्याः । उरुम् । नः । इन्द्रः । कृणवत् । ॐ इति । लोकम् ॥२॥

**कृतं नो यज्ञं विदथेषु चारुं कृतं ब्रह्माणि सूरिषु प्रशस्ता ।**
**उपो रयिर्देवजूतो न ऽएतु प्र णः स्पार्हाभिरूतिभिस्तिरेतम् ॥३॥**

कृतम् । नः । यज्ञम् । विदथेषु । चारुम् । कृतम् । ब्रह्माणि ।
सूरिषु । प्र०शस्ता ॥ उपो इति । रयिः । देव०जूतः । नः ।
एतु । प्र । नः । स्पार्हाभिः । ऊति०भिः । तिरेतम् ॥३॥

**अस्मे ऽइन्द्रावरुणा विश्ववारं रयिं धत्तं वसुमन्तं पुरुक्षुम् ।**
**प्र य ऽआदित्यो ऽअनृता मिनात्यमिता शूरो दयते वसूनि ॥४॥**
अस्मे इति । इन्द्रावरुणा । विश्व०वारम् । रयिम् ।
धत्तम् । वसु०मन्तम् । पुरु०क्षुम् ॥ प्र । यः । आदित्यः ।
अनृता । मिनाति । अमिता । शूरः । दयते । वसूनि ॥४॥

**इयमिन्द्रं वरुणमष्ट मे गीः प्रावत्तोके तनये तूतुजाना ।**
**सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥५॥ (६) [८०१]**
इयम् । इन्द्रम् । वरुणम् । अष्ट । मे । गीः । प्र । आवत् ।
तोके । तनये । तूतुजाना ॥ सु०रत्नासः । देव०वीतिम् ।
गमेम । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥५॥

## (८५)

५ मैत्रावरुणिर्वसिष्ठः । इन्द्रावरुणो । त्रिष्टुप् ।

**पुनीषे वामरक्षसं मनीषां सोममिन्द्राय वरुणाय जुह्वत् ।**
**घृतप्रतीकामुषसं न देवीं ता नो यामन्नुरुष्यतामभीके ॥१॥**
पुनीषे । वाम् । अरक्षसम् । मनीषाम् । सोमम् । इन्द्राय ।
वरुणाय । जुह्वत् ॥ घृत०प्रतीकाम् । उषसम् । न ।
देवीम् । ता । नः । यामन् । उरुष्यताम् । अभीके ॥१॥

**स्पर्धन्ते वा ऽउ देवहूये ऽअत्र येषु ध्वजेषु दिद्यवः पतन्ति ।**
**युवं ताँ ऽइन्द्रावरुणावमित्रान्हतं पराचः शर्वा विषूचः ॥२॥**

स्पर्द्धन्ते । वै । ऊँ इति । देव॰हूये । अत्र । येषु ।
ध्वजेषु । दिद्यवः । पतन्ति ॥ युवम् । तान् । इन्द्रावरुणौ ।
अमित्रान् । हतम् । पराचः । शर्वा । विषूचः ॥२॥

**आपश्चिद्धि स्वयशसः सदःसु देवीरिन्द्रं वरुणं देवता धुः ।**
**कृष्टीरन्यो धारयति प्रविक्ता वृत्राण्यन्योऽअप्रतीनि हन्ति ॥३॥**
आपः । चित् । हि । स्व॰यशसः । सदः२सु । देवीः ।
इन्द्रम् । वरुणम् । देवता । धुरिति धुः ॥ कृष्टीः । अन्यः ।
धारयति । प्र॰विक्ताः । वृत्राणि । अन्यः । अप्रतीनि । हन्ति ॥३॥

**स सुक्रतुर्ऋतचिदस्तु होता य ऽआदित्य शवसा वां नमस्वान् ।**
**आववर्त्तदवसे वां हविष्मानसदित्स सुविताय प्रयस्वान् ॥४॥**
सः । सु॰क्रतुः । ऋत॰चित् । अस्तु । होता । यः । आदित्या ।
शवसा । वाम् । नमस्वान् ॥ आ॰ववर्त्तत् । अवसे । वाम् ।
हविष्मान् । असत् । इत् । सः । सुविताय । प्रयस्वान् ॥४॥

**इयमिन्द्रं वरुणमष्ट मे गीः प्रावत्तोके तनये तूतुजाना ।**
**सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥५॥ (७) [ ८०६ ]**
इयम् । इन्द्रम् । वरुणम् । अष्ट । मे । गीः । प्र । आवत् ।
तोके । तनये । तूतुजाना ॥ सु॰रत्नासः । देव॰वीतिम् ।
गमेम । यूयम् । पात । स्वस्ति॰भिः । सदा । नः ॥५॥

# ( ८६ )

८ मैत्रावरुणिर्वसिष्ठः । वरुणः । त्रिष्टुप् ।

**धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।**
**प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥१॥**

धीरा । तु । अस्य । महिना । जनूंषि । वि । यः । तस्तम्भ ।
रोदसी इति । चित् । उर्वी इति ॥ प्र । नाकम् । ऋष्वम् ।
नुनुदे । बृहन्तम् । द्विता । नक्षत्रम् । पप्रथत् । च । भूम ॥

**उत स्वया तन्वा३ सं वदे तत्कदा न्वश्न्तर्वरुणे भुवानि ।**
**किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना ऽअभि ख्यम् ॥२॥**
उत । स्वया । तन्वा । सम् । वदे । तत् । कदा । नु ।
अन्तः । वरुणे । भुवानि ॥ किम् । मे । हव्यम् । अहृणानः ।
जुषेत । कदा । मृळीकम् । सु०मनाः । अभि । ख्यम् ॥२॥

**पृच्छे तदेनो वरुण दिदृक्षूपो ऽएमि चिकितुषो विपृच्छम् ।**
**समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥३॥**
पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपो इति । एमि ।
चिकितुषः । वि०पृच्छम् ॥ समानम् । इत् । मे । कवयः ।
चित् । आहुः । अयम् । ह । तुभ्यम् । वरुणः । हृणीते ॥३॥

**किमाग ऽआस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम् ।**
**प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर ऽईयाम् ॥४॥**
किम् । आगः । आस । वरुण । ज्येष्ठम् । यत् । स्तोतारम् ।
जिघांससि । सखायम् ॥ प्र । तत् । मे । वोचः । दुःऽदभ ।
स्वधा०वः । अव । त्वा । अनेनाः । नमसा । तुरः । इयाम् ॥४॥

**अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।**
**अव राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥५॥**
अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या ।
वयम् । चकृम । तनूभिः ॥ अव । राजन् । पशु०तृपम् ।
न । तायुम् । सृज । वत्सम् । न । दाम्नः । वसिष्ठम् ॥५॥

न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको ऽअचित्तिः ।
अस्ति ज्यायान्कनीयस ऽउपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥६॥
न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः ।
वि॰भीदकः । अचित्तिः ॥ अस्ति । ज्यायान् । कनीयसः ।
उप॰अरे । स्वप्नः । चन । इत् । अनृतस्य । प्र॰योता ॥६॥

अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो ऽअर्यो गृत्सं राये कवितरो जुनाति ॥७॥
अरम् । दासः । न । मीळ्हुषे । कराणि । अहम् ।
देवाय । भूर्णये । अनागाः ॥ अचेतयत् । अचितः ।
देवः । अर्यः । गृत्सम् । राये । कवि॰तरः । जुनाति ॥७॥

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम ऽउपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो ऽअस्तु यूयं पात स्वस्तिभिः सदा नः ॥८॥ (८) [८१४]
अयम् । सु । तुभ्यम् । वरुण । स्वधा॰वः । हृदि । स्तोमः ।
उप॰श्रितः । चित् । अस्तु ॥ शम् । नः । क्षेमे । शम् । ऊँ इति ।
योगे । नः । अस्तु । यूयम् । पात । स्वस्ति॰भिः । सदा । नः ॥८॥

## (८७)

७ मैत्रावरुणिर्वसिष्ठः । वरुणः । त्रिष्टुप् ।

रदत्पथो वरुणः सूर्याय प्रार्णांसि समुद्रिया नदीनाम् ।
सर्गो न सृष्टो ऽअर्वतीर्ऋतायञ्चकार महीरवनीरहभ्यः ॥१॥
रदत् । पथः । वरुणः । सूर्याय । प्र । अर्णांसि ।
समुद्रिया । नदीनाम् ॥ सर्गः । न । सृष्टः । अर्वतीः ।
ऋत॰यन् । चकार । महीः । अवनीः । अह॰भ्यः ॥१॥

आत्मा ते वातो रज ऽआ नवीनोत्पशुर्न भूर्णिर्यवसे ससवान् ।
अन्तर्मही बृहती रोदसीमे विश्वा ते धाम वरुण प्रियाणि ॥२॥
आत्मा । ते । वातः । रजः । आ । नवीनोत् । पशुः । न ।
भूर्णिः । यवसे । सस०वान् ॥ अन्तः । मही इति । बृहती इति ।
रोदसी इति । इमे इति । विश्वा । ते । धाम । वरुण । प्रियाणि ॥२॥

परि स्पशो वरुणस्य स्मदिष्टा ऽउभे पश्यन्ति रोदसी सुमेके ।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो य ऽइषयन्त मन्म ॥३॥
परि । स्पशः । वरुणस्य । स्मत्०इष्टाः । उभे इति । पश्यन्ति ।
रोदसी इति । सुमेके इति सु०मेके ॥ ऋत०वानः । कवयः ।
यज्ञ०धीराः । प्र०चेतसः । ये । इषयन्त । मन्म ॥३॥

उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।
विद्वान्पदस्य गुह्या न वोचद्युगाय विप्र ऽउपराय शिक्षन् ॥४॥
उवाच । मे । वरुणः । मेधिराय । त्रिः । सप्त ।
नाम । अघ्न्या । बिभर्ति ॥ विद्वान् । पदस्य । गुह्या ।
न । वोचत् । युगाय । विप्रः । उपराय । शिक्षन् ॥४॥

तिस्रो द्यावो निहिता ऽअन्तरस्मिन्तिस्रो भूमीरुपराः षड्विधानाः ।
गृत्सो राजा वरुणश्चक्र ऽएतं दिवि प्रेङ्खं हिरण्ययं शुभे कम् ॥५॥
तिस्रः । द्यावः । नि०हिताः । अन्तः । अस्मिन् । तिस्रः ।
भूमीः । उपराः । षट्०विधानाः ॥ गृत्सः । राजा । वरुणः ।
चक्रे । एतम् । दिवि । प्र०ईङ्खम् । हिरण्ययम् । शुभे । कम् ॥५॥

अव सिन्धुं वरुणो द्यौरिव स्थाद्द्रप्सो न श्वेतो मृगस्तुविष्मान् ।
गम्भीरशंसो रजसो विमानः सुपारक्षत्रः सतो ऽअस्य राजा ॥६॥

अव । सिन्धुम् । वरुणः । द्यौःऽइव । स्थात् । द्रप्सः ।
न । श्वेतः । मृगः । तुविष्मान् ॥ गम्भीर०शंसः । रजसः ।
वि०मानः । सुपार०क्षत्रः । सतः । अस्य । राजा ॥६॥

यो मृळयाति चक्रुषे चिदागो वयं स्याम वरुणे ऽअनागाः ।
अनु व्रतान्यदितेर्ऋधन्तो यूयं पात स्वस्तिभिः सदा नः ॥७॥ (९) [८२१]
यः । मृळयाति । चकुषे । चित् । आगः । वयम् । स्याम ।
वरुणे । अनागाः ॥ अनु । व्रतानि । अदितेः । ऋधन्तः ।
यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥८॥

## (८८)

७ मैत्रावरुणिर्वसिष्ठः । वरुणः, (७ पाशविमोचिनी) । त्रिष्टुप् ।

प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ऽईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहन्तम् ॥१॥
प्र । शुन्ध्युवम् । वरुणाय । प्रेष्ठाम् । मतिम् । वसिष्ठ ।
मीळ्हुषे । भरस्व ॥ यः । ईम् । अर्वाञ्चम् । करते ।
यजत्रम् । सहस्र०मघम् । वृषणम् । बृहन्तम् ॥१॥

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्वर्यदश्मन्नधिपाऽउ ऽअन्धोऽभि मा वपुर्दृशये निनीयात् ॥२॥
अध । नु । अस्य । सम्०दृशम् । जगन्वान् । अग्नेः । अनीकम् ।
वरुणस्य । मंसि ॥ स्वः । यत् । अश्मन् । अधि०पाः ।
ऊँ इति । अन्धः । अभि । मा । वपुः । दृशये । निनीयात् ॥२॥

आ यद्रुहाव वरुणश्च नावं प्र यत्समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्खऽईङ्खयावहै शुभे कम् ॥३॥

आ । यत् । रुहाव । वरुणः । च । नावम् । प्र । यत् ।
समुद्रम् । ईरयाव । मध्यम् ॥ अधि । यत् । अपाम् ।
स्नुऽभिः । चराव । प्र । प्रऽईङ्खे । ईङ्खयावहै । शुभे । कम् ॥३॥

**वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।**
**स्तोतारं विप्रः सुदिनत्वे ऽअह्नां यान्नु द्यावस्ततनन्यादुषासः ॥४॥**
वसिष्ठम् । ह । वरुणः । नावि । आ । अधात् । ऋषिम् ।
चकार । सुऽअपाः । महःऽभिः ॥ स्तोतारम् । विप्रः । सुदिनऽत्वे ।
अह्नाम् । यात् । नु । द्यावः । ततनन् । यात् । उषसः ॥४॥

**क्व१ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा चित् ।**
**बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥५॥**
क्व । त्यानि । नौ । सख्या । बभूवुः । सचावहे इति । यत् ।
अवृकम् । पुरा । चित् ॥ बृहन्तम् । मानम् । वरुण ।
स्वधाऽवः । सहस्रऽद्वारम् । जगम । गृहम् । ते ॥५॥

**य ऽआपिर्नित्यो वरुण प्रियः सन्त्वामागांसि कृणवत्सखा ते ।**
**मा त ऽएनस्वन्तो यक्षिन्भुजेम यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥६॥**
यः । आपिः । नित्यः । वरुण । प्रियः । सन् । त्वाम् ।
आगांसि । कृणवत् । सखा । ते ॥ मा । ते । एनस्वन्तः ।
यक्षिन् । भुजेम । यन्धि । स्म । विप्रः । स्तुवते । वरूथम् ॥६॥

**ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत्पाशं वरुणो मुमोचत् ।**
**अवो वन्वाना ऽअदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥७॥ (१०) [८२८]**
ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियन्तः । वि । अस्मत् ।
पाशम् । वरुणः । मुमोचत् ॥ अवः । वन्वानाः । अदितेः ।
उपऽस्थात् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

# ( ८९ )

५ मैत्रावरुणिर्वसिष्ठः । वरुणः । गायत्री, ५ जगती ।

**मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् ।**

**मृळा सुक्षत्र मृळय ॥१॥**

मो इति । सु । वरुण । मृत्ऽमयम् । गृहम् । राजन् । अहम् । गमम् ॥

मृळ । सुऽक्षत्र । मृळय ॥१॥

**यदेमि प्रस्फुरन्निव दृतिर्न ध्मातोऽअद्रिवः ।**

**मृळा सुक्षत्र मृळय ॥२॥**

यत् । एमि । प्रस्फुरन्ऽइव । दृतिः । न । ध्मातः । अद्रिऽवः ॥

मृळ । सुऽक्षत्र । मृळय ॥२॥

**क्रत्वः समह दीनता प्रतीपं जगमा शुचे ।**

**मृळा सुक्षत्र मृळय ॥३॥**

क्रत्वः । समह । दीनता । प्रतिऽईपम् । जगम । शुचे ॥

मृळ । सुऽक्षत्र । मृळय ॥३॥

**अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् ।**

**मृळा सुक्षत्र मृळय ॥४॥**

अपाम् । मध्ये । तस्थिऽवांसम् । तृष्णा । अविदत् । जरितारम् ॥

मृळ । सुऽक्षत्र । मृळय ॥४॥

**यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।**

**अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥५॥ ( ११ ) [ ८३३ ]**

यत् । किम् । च । इदम् । वरुण । दैव्ये । जने । अभि०द्रोहम् ।
मनुष्याः । चरामसि ॥ अचित्ती । यत् । तव । धर्म ।
युयोपिम । मा । नः । तस्मात् । एनसः । देव । रिरिषः ॥५॥

## ( ९० ) [ अथ षष्ठोऽनुवाकः ॥६॥ सूक्तानि ९०-१०४

७ मैत्रावरुणिर्वसिष्ठः । वायुः, ५-७ इन्द्रवायू । त्रिष्टुप् ।

**प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्तः सुतासः ।**
**वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ॥१॥**

प्र । वीर०या । शुचयः । दद्रिरे । वाम् । अध्वर्यु०भिः ।
मधु०मन्तः । सुतासः ॥ वह । वायो इति । नि०युतः ।
याहि । अच्छ । पिब । सुतस्य । अन्धसः । मदाय ॥१॥

**ईशानाय प्रहुतिं यस्त ऽआनट्छुचिं सोमं शुचिपास्तुभ्यं वायो ।**
**कृणोषि तं मर्त्येषु प्रशस्तं जातोजातो जायते वाज्यस्य ॥२॥**

ईशानाय । प्र०हुतिम् । यः । ते । आनट् । शुचिम् । सोमम् ।
शुचि०पाः । तुभ्यम् । वायो इति ॥ कृणोषि । तम् । मर्त्येषु ।
प्र०शस्तम् । जातः२जातः । जायते । वाजी । अस्य ॥२॥

**राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ।**
**अध वायुं नियुतः सश्चत स्वा ऽउत श्वेतं वसुधितिं निरेके ॥३॥**

राये । नु । यम् । जज्ञतुः । रोदसी इति । इमे इति । राये ।
देवी । धिषणा । धाति । देवम् ॥ अध । वायुम् । नि०युतः ।
सश्चत । स्वाः । उत । श्वेतम् । वसु०धितिम् । निरेके ॥३॥

**उच्छन्नुषसः सुदिना ऽअरिप्रा ऽउरु ज्योतिर्विविदुर्दीध्यानाः ।**
**गव्यं चिदूर्वमुशिजो वि वव्रुस्तेषामनु प्रदिवः सस्रुरापः ॥४॥**

उच्छन् । उषसः । सुऽदिनाः । अरिप्राः । उरु । ज्योतिः ।
विविदुः । दीध्यानाः ॥ गव्यम् । चित् । ऊर्वम् । उशिजः ।
वि । वव्रुः । तेषाम् । अनु । प्रऽदिवः । सस्रुः । आपः ॥४॥

**ते सत्येन मनसा दीध्यानाः स्वेन युक्तासः क्रतुना वहन्ति ।**
**इन्द्रवायू वीरवाहं रथं वामीशानयोरभि पृक्षः सचन्ते ॥५॥**
ते । सत्येन । मनसा । दीध्यानाः । स्वेन । युक्तासः ।
क्रतुना । वहन्ति ॥ इन्द्रवायू इति । वीरऽवाहम् ।
रथम् । वाम् । ईशानयोः । अभि । पृक्षः । सचन्ते ॥५॥

**ईशानासो ये दधते स्वर्णो गोभिरश्वेभिर्वसुभिर्हिरण्यैः ।**
**इन्द्रवायू सूरयो विश्वमायुरर्वद्भिर्वीरैः पृतनासु सह्युः ॥६॥**
ईशानासः । ये । दधते । स्वः । नः । गोभिः । अश्वेभिः ।
वसुऽभिः । हिरण्यैः ॥ इन्द्रवायू इति । सूरयः । विश्वम् ।
आयुः । अर्वत्ऽभिः । वीरैः । पृतनासु । सह्युः ॥६॥

**अर्वन्तो न श्रवसो भिक्षमाणा ऽइन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ।**
**वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥७॥ ( १२ )** [ ८४० ]
अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायू इति ।
सुस्तुतिऽभिः । वसिष्ठाः ॥ वाजऽयन्तः । सु । अवसे ।
हुवेम । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

## ( ९१ )

**७ मैत्रावरुणिर्वसिष्ठः । १, ३ वायुः, २, ४-७ इन्द्रवायू । त्रिष्टुप् ।**

**कुविदङ्ग नमसा ये वृधासः पुरा देवाऽअनवद्यासऽआसन् ।**
**ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥१॥**

कुवित् । अङ्ग । नमसा । ये । वृधासः । पुरा । देवाः ।
अनवद्यासः । आसन् ॥ ते । वायवे । मनवे ।
बाधिताय । अवासयन् । उषसम् । सूर्येण ॥१॥

**उशन्ता दूता न दभाय गोपा मासश्च पाथः शरदश्च पूर्वीः ।**
**इन्द्रवायू सुष्टुतिर्वामियाना मार्डीकमीट्टे सुवितं च नव्यम् ॥२॥**
उशन्ता । दूता । न । दभाय । गोपा । मासः । च । पाथः ।
शरदः । च । पूर्वीः ॥ इन्द्रवायू इति । सु०स्तुतिः । वाम् ।
इयाना । मार्डीकम् । ईट्टे । सुवितम् । च । नव्यम् ॥२॥

**पीवोअन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।**
**ते वायवे समनसो वि तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः ॥३॥**
पीवः२अन्नान् । रयि०वृधः । सु०मेधाः । श्वेतः । सिषक्ति ।
नि०युताम् । अभि०श्रीः ॥ ते । वायवे । स०मनसः । वि ।
तस्थुः । विश्वा । इत् । नरः । सु०अपत्यानि । चक्रुः ॥३॥

**यावत्तरस्तन्वो३ यावदोजो यावन्नरश्चक्षसा दीध्यानाः ।**
**शुचिं सोमं शुचिपा पातमस्मे ऽइन्द्रवायू सदतं बर्हिरेदम् ॥४॥**
यावत् । तरः । तन्वः । यावत् । ओजः । यावत् । नरः ।
चक्षसा । दीध्यानाः ॥ शुचिम् । सोमम् । शुचि०पा । पातम् ।
अस्मे इति । इन्द्रवायू इति । सदतम् । बर्हिः । आ । इदम् ॥४॥

**नियुवाना नियुतः स्पार्हवीरा ऽइन्द्रवायू सरथं यातमर्वाक् ।**
**इदं हि वां प्रभृतं मध्वो ऽअग्रमध प्रीणाना वि मुमुक्तमस्मे ॥५॥**
नि०युवाना । नि०युतः । स्पार्ह०वीराः । इन्द्रवायू इति । स०रथम् ।
यातम् । अर्वाक् ॥ इदम् । हि । वाम् । प्र०भृतम् । मध्वः ।
अग्रम् । अध । प्रीणाना । वि । मुमुक्तम् । अस्मे इति ॥५॥

या वां शतं नियुतो याः सहस्रमिन्द्रवायू विश्ववाराः सचन्ते ।
आभिर्यातं सुविदत्राभिरर्वाक्पातं नरा प्रतिभृतस्य मध्वः ॥६॥
या । वाम् । शतम् । नि॰युतः । याः । सहस्रम् । इन्द्रवायू इति ।
विश्व॰वाराः । सचन्ते ॥ आ । आभिः । यातम् । सु॰विदत्राभिः ।
अर्वाक् । पातम् । नरा । प्रति॰भृतस्य । मध्वः ॥६॥

अर्वन्तो न श्रवसो भिक्षमाणा ऽइन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ।
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥७॥ ( १३ ) [ ८४७ ]
अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायू इति ।
सुस्तुति॰भिः । वसिष्ठाः ॥ वाज॰यन्तः । सु । अवसे ।
हुवेम । यूयम् । पात । स्वस्ति॰भिः । सदा । नः ॥७॥

# ( ९२ )

५ मैत्रावरुणिर्वसिष्ठः । वायुः, २, ४ इन्द्रवायू । त्रिष्टुप् ।

आ वायो भूष शुचिपा ऽउप नः सहस्रं ते नियुतो विश्ववार ।
उपो ते ऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥१॥
आ । वायो इति । भूष । शुचि॰पाः । उप । नः । सहस्रम् ।
ते । नि॰युतः । विश्व॰वार ॥ उपो इति । ते । अन्धः ।
मद्यम् । अयामि । यस्य । देव । दधिषे । पूर्व॰पेयम् ॥१॥

प्र सोता जीरोऽअध्वरेष्वस्थात्सोममिन्द्राय वायवे पिबध्यै ।
प्र यद्वां मध्वो ऽअग्रियं भरन्त्यध्वर्यवो देवयन्तः शचीभिः ॥२॥
प्र । सोता । जीरः । अध्वरेषु । अस्थात् । सोमम् ।
इन्द्राय । वायवे । पिबध्यै ॥ प्र । यत् । वाम् । मध्वः ।
अग्रियम् । भरन्ति । अध्वर्यवः । देव॰यन्तः । शचीभिः ॥२॥

प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥३॥
प्र । याभिः । यासि । दाश्वांसम् । अच्छ । नियुत्ऽभिः ।
वायो इति । इष्टये । दुरोणे ॥ नि । नः । रयिम् । सुऽभोजसम् ।
युवस्व । नि । वीरम् । गव्यम् । अश्व्यम् । च । राधः ॥३॥

ये वायव ऽइन्द्रमादनास ऽआदेवासो नितोशनासो ऽअर्यः ।
घ्नन्तो वृत्राणि सूरिभिः ष्याम सासह्वांसो युधा नृभिरमित्रान् ॥४॥
ये । वायवे । इन्द्रऽमादनासः । आऽदेवासः । निऽतोशनासः ।
अर्यः ॥ घ्नन्तः । वृत्राणि । सूरिऽभिः । स्याम ।
ससह्वांसः । युधा । नृऽभिः । अमित्रान् ॥४॥

आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम् ।
वायो ऽअस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥५॥ (१४) [८५२]
आ । नः । नियुत्ऽभिः । शतिनीभिः । अध्वरम् । सहस्रिणीभिः ।
उप । याहि । यज्ञम् ॥ वायो इति । अस्मिन् । सवने ।
मादयस्व । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

## ( ९३ )

८ मैत्रावरुणिर्वसिष्ठः । इन्द्राग्नी । त्रिष्टुप् ।

शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।
उभा हि वां सुहवा जोहवीमि ता वाजं सद्य ऽउशते धेष्ठा ॥१॥
शुचिम् । नु । स्तोमम् । नवऽजातम् । अद्य । इन्द्राग्नी इति ।
वृत्रऽहना । जुषेथाम् ॥ उभा । हि । वाम् । सुऽहवा ।
जोहवीमि । ता । वाजम् । सद्यः । उशते । धेष्ठा ॥१॥

ता सानसी शवसाना हि भूतं साकंवृधा शवसा शूशुवांसा ।
क्षयन्तौ रायो यवसस्य भूरेः पृङ्क्तं वाजस्य स्थविरस्य घृष्वेः ॥२॥
ता । सानसी इति । शवसाना । हि । भूतम् । साकम्०वृधा ।
शवसा । शूशु०वांसा ॥ क्षयन्तौ । रायः । यवसस्य ।
भूरेः । पृङ्क्तम् । वाजस्य । स्थविरस्य । घृष्वेः ॥२॥

उपो ह यद्विदथं वाजिनो गुर्धीभिर्विप्राः प्रमतिमिच्छमानाः ।
अर्वन्तो न काष्ठां नक्षमाणा ऽइन्द्राग्नी जोहुवतो नरस्ते ॥३॥
उपो इति । ह । यत् । विदथम् । वाजिनः । गुः । धीभिः ।
विप्राः । प्र०मतिम् । इच्छमानाः ॥ अर्वन्तः । न । काष्ठाम् ।
नक्षमाणाः । इन्द्राग्नी इति । जोहुवतः । नरः । ते ॥३॥

गीर्भिर्विप्रः प्रमतिमिच्छमान ऽईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ॥४॥
गीःऽभिः । विप्रः । प्र०मतिम् । इच्छमानः । ईट्टे । रयिम् ।
यशसम् । पूर्व०भाजम् ॥ इन्द्राग्नी इति । वृत्र०हना ।
सु०वज्रा । प्र । नः । नव्येभिः । तिरतम् । देष्णैः ॥४॥

सं यन्मही मिथती स्पर्द्धमाने तनूरुचा शूरसाता यतैते ।
अदेवयुं विदथे देवयुभिः सत्रा हतं सोमसुता जनेन ॥५॥ (१५)
सम् । यत् । मही इति । मिथती इति । स्पर्द्धमाने इति ।
तनू०रुचा । शूर०साता । यतैते इति ॥ अदेव०युम् । विदथे ।
देवयु०भिः । सत्रा । हतम् । सोम०सुता । जनेन ॥५॥

इमामु षु सोमसुतिमुप न ऽएन्द्राग्नी सौमनसाय यातम् ।
नू चिद्धि परिमम्नाथे ऽअस्माना वां शश्वद्भिर्ववृतीय वाजैः ॥६॥

इमाम् । ऊँ इति । सु । सोम०सुतिम् । उप । नः । आ । इन्द्राग्नी इति ।
सौमनसाय । यातम् ॥ नु । चित् । हि । परिमम्नाथे इति परि०मम्नाथे ।
अस्मान् । आ । वाम् । शश्वत्०भिः । ववृतीय । वाजैः ॥६॥

**सो ऽअग्न ऽएना नमसा समिद्धोऽच्छा मित्रं वरुणमिन्द्रं वोचेः ।**
**यत्सीमागश्चकृमा तत्सु मृळ तदर्यमादितिः शिश्रथन्तु ॥७॥**
सः । अग्ने । एना । नमसा । सम्०इद्धः । अच्छ । मित्रम् ।
वरुणम् । इन्द्रम् । वोचेः ॥ यत् । सीम् । आगः । चकृम ।
तत् । सु । मृळ । तत् । अर्यमा । अदितिः । शिश्रथन्तु ॥७॥

**एता ऽअग्न ऽआशुषाणास ऽइष्टीर्युवोः सचाभ्यश्याम वाजान् ।**
**मेन्द्रो नो विष्णुर्मरुतः परि ख्यन्यूयं पात स्वस्तिभिः सदा नः ॥८॥ ( १६ ) [ ८६० ]**
एताः । अग्ने । आशुषाणासः । इष्टीः । युवोः । सचा । अभि ।
अश्याम । वाजान् ॥ मा । इन्द्रः । नः । विष्णुः । मरुतः ।
परि । ख्यन् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥८॥

# ( ९४ )

**१२ मैत्रावरुणिर्वसिष्ठः । इन्द्राग्नी । गायत्री, १२ अनुष्टुप् ।**

**इयं वामस्य मन्मन ऽइन्द्राग्नी पूर्व्यस्तुतिः ।**
**अभ्राद्वृष्टिरिवाजनि ॥१॥**
इयम् । वाम् । अस्य । मन्मनः । इन्द्राग्नी इति । पूर्व्य०स्तुतिः ॥
अभ्रात् । वृष्टिःऽइव । अजनि ॥१॥

**शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः ।**
**ईशाना पिप्यतं धियः ॥२॥**

शृणुतम् । जरितुः । हवम् । इन्द्राग्नी इति । वनतम् । गिरः ॥
ईशाना । पिप्यतम् । धियः ॥२॥

**मा पापत्वार्य नो नरेन्द्राग्नी माभिशस्तये ।**
**मा नो रीरधतं निदे ॥३॥**
मा । पाप०त्वार्य । नः । नरा । इन्द्राग्नी इति । मा । अभि०शस्तये ॥
मा । नः । रीरधतम् । निदे ॥३॥

**इन्द्रे ऽअग्ना नमो बृहत्सुवृक्तिमेरयामहे ।**
**धिया धेना ऽअवस्यवः ॥४॥**
इन्द्रे । अग्ना । नमः । बृहत् । सु०वृक्तिम् । आ । ईरयामहे ॥
धिया । धेनाः । अवस्यवः ॥४॥

**ता हि शश्वन्त ऽईळत ऽइत्था विप्रास ऽऊतये ।**
**सबाधो वाजसातये ॥५॥**
ता । हि । शश्वन्तः । ईळते । इत्था । विप्रासः । ऊतये ॥
स०बाधः । वाज०सातये ॥५॥

**ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे ।**
**मेधसाता सनिष्यवः ॥६॥ ( १७ )**
ता । वाम् । गीःऽभिः । विपन्यवः । प्रयस्वन्तः । हवामहे ॥
मेध०साता । सनिष्यवः ॥६॥

**इन्द्राग्नी ऽअवसा गतमस्मभ्यं चर्षणीसहा ।**
**मा नो दुःशंस ऽईशत ॥७॥**

इन्द्राग्नी इति । अवसा । आ । गतम् । अस्मभ्यम् । चर्षणि०सहा ॥
मा । नः । दुः२शंसः । ईशत ॥७॥

**मा कस्य नो ऽअररुषो धूर्त्तिः प्रणङ् मर्त्त्यस्य ।**
**इन्द्राग्नी शर्म यच्छतम् ॥८॥**
मा । कस्य । नः । अररुषः । धूर्त्तिः । प्रणक् । मर्त्त्यस्य ॥
इन्द्राग्नी इति । शर्म । यच्छतम् ॥८॥

**गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे ।**
**इन्द्राग्नी तद्वनेमहि ॥९॥**
गो०मत् । हिरण्य०वत् । वसु । यत् । वाम् । अश्व०वत् । ईमहे ॥
इन्द्राग्नी इति । तत् । वनेमहि ॥९॥

**यत्सोम ऽआ सुते नर ऽइन्द्राग्नी ऽअजोहवुः ।**
**सप्तीवन्ता सपर्यवः ॥१०॥**
यत् । सोमे । आ । सुते । नरः । इन्द्राग्नी इति । अजोहवुः ॥
सप्ति०वन्ता । सपर्यवः ॥१०॥

**उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा ।**
**आङ्गूषैराविवासतः ॥११॥**
उक्थेभिः । वृत्रहन्०तमा । या । मन्दाना । चित् । आ । गिरा ॥
आङ्गूषैः । आ०विवासतः ॥११॥

**ताविद्दुःशंसं मर्त्त्यं दुर्विद्वांसं रक्षस्विनम् ।**
**आभोगं हन्मना हतमुदधिं हन्मना हतम् ॥१२॥ (१८)** [ ८७२ ]

तौ । इत् । दुःऽशंसम् । मर्त्यम् । दुःऽविद्वांसम् । रक्षस्विनम् ॥
आ॒ऽभोगम् । हन्मना । हतम् । उद॒ऽधिम् । हन्मना । हतम् ॥१२॥

# ( ९५ )

६ मैत्रावरुणिर्वसिष्ठः । सरस्वती, ३ सरस्वान् । त्रिष्टुप् ।

प्र क्षोदसा धायसा सस्र ऽएषा सरस्वती धरुणमायसी पूः ।
प्रबाबधाना रथ्येव याति विश्वा ऽअपो महिना सिन्धुरन्याः ॥१॥
प्र । क्षोदसा । धायसा । सस्रे । एषा । सरस्वती ।
धरुणम् । आयसी । पूः ॥ प्र॒ऽबाबधाना । रथ्याऽइव ।
याति । विश्वाः । अपः । महिना । सिन्धुः । अन्याः ॥१॥

एकाचेतत्सरस्वती नदीनां शुचिर्यती गिरिभ्य ऽआ समुद्रात् ।
रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय ॥२॥
एका । अचेतत् । सरस्वती । नदीनाम् । शुचिः । यती ।
गिरि॒ऽभ्यः । आ । समुद्रात् ॥ रायः । चेतन्ती ।
भुवनस्य । भूरेः । घृतम् । पयः । दुदुहे । नाहुषाय ॥२॥

स वावृधे नर्यो योषणासु वृषा शिशुर्वृषभो यज्ञियासु ।
स वाजिनं मघवद्भ्यो दधाति वि सातये तन्वं मामृजीत ॥३॥
सः । ववृधे । नर्यः । योषणासु । वृषा । शिशुः ।
वृषभः । यज्ञियासु ॥ सः । वाजिनम् । मघवत्॒ऽभ्यः ।
दधाति । वि । सातये । तन्वम् । ममृजीत ॥३॥

उत स्या नः सरस्वती जुषाणोप श्रवत्सुभगा यज्ञेऽअस्मिन् ।
मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा सखिभ्यः ॥४॥

उत । स्या । नः । सरस्वती । जुषाणा । उप । श्रवत् ।
सु०भगा । यज्ञे । अस्मिन् ॥ मितज्ञु०भिः । नमस्यैः ।
इयाना । राया । युजा । चित् । उत्०तरा । सखि०भ्यः ॥४॥

**इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व ।**
**तव शर्मन्प्रियतमे दधाना ऽउप स्थेयाम शरणं न वृक्षम् ॥५॥**
इमा । जुह्वानाः । युष्मत् । आ । नमः२भिः । प्रति ।
स्तोमम् । सरस्वति । जुषस्व ॥ तव । शर्मन् । प्रिय०तमे ।
दधानाः । उप । स्थेयाम । शरणम् । न । वृक्षम् ॥५॥

**अयमु ते सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः ।**
**वर्द्ध शुभ्रे स्तुवते रासि वाजान्यूयं पात स्वस्तिभिः सदा नः ॥६॥ ( १९ ) [ ८७८ ]**
अयम् । ऊँ इति । ते । सरस्वति । वसिष्ठः । द्वारौ । ऋतस्य ।
सु०भगे । वि । आवरित्यावः ॥ वर्द्ध । शुभ्रे । स्तुवते ।
रासि । वाजान् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥६॥

## ( ९६ )

**६ मैत्रावरुणिर्वसिष्ठः । सरस्वती, ४-६ सरस्वान् । १-२ प्रगाथः = ( १ बृहती, २ सतोबृहती ), ३ प्रस्तारपङ्क्तिः, ४-६ गायत्री ।**

**बृहदु गायिषे वचोऽसुर्या नदीनाम् ।**
**सरस्वतीमिन्महया सुवृक्तिभिः स्तोमैर्वसिष्ठ रोदसी ॥१॥**
बृहत् । ऊँ इति । गायिषे । वचः । असुर्या । नदीनाम् ॥
सरस्वतीम् । इत् । महय । सुवृक्ति०भिः । स्तोमैः । वसिष्ठ । रोदसी इति ॥१॥

**उभे यत्ते महिना शुभ्रे ऽअन्धसी ऽअधिक्षियन्ति पूरवः ।**
**सा नो बोध्यवित्री मरुत्सखा चोद राधो मघोनाम् ॥२॥**

उभे इति । यत् । ते । महिना । शुभ्रे । अन्धसी इति ।
अधि०क्षियन्ति । पूरवः ॥ सा । नः । बोधि । अवित्री ।
मरुत्०सखा । चोद । राधः । मघोनाम् ॥२॥

भद्रमिद्भद्रा कृणवत्सरस्वत्यकवारी चेतति वाजिनीवती ।
गृणाना जमदग्निवत्स्तुवाना च वसिष्ठवत् ॥३॥
भद्रम् । इत् । भद्रा । कृणवत् । सरस्वती । अकव०अरी । चेतति । वाजिनी०वती ॥
गृणाना । जमदग्नि०वत् । स्तुवाना । च । वसिष्ठ०वत् ॥३॥

जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः ।
सरस्वन्तं हवामहे ॥४॥
जनि०यन्तः । नु । अग्रवः । पुत्रि०यन्तः । सु०दानवः ॥
सरस्वन्तम् । हवामहे ॥४॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः ।
तेभिर्नोऽविता भव ॥५॥
ये । ते । सरस्वः । ऊर्मयः । मधु०मन्तः । घृत०श्चुतः ॥
तेभिः । नः । अविता । भव ॥५॥

पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः ।
भक्षीमहि प्रजामिषम् ॥६॥ (२०) [८८४]
पीपि०वांसम् । सरस्वतः । स्तनम् । यः । विश्व०दर्शतः ॥
भक्षीमहि । प्र०जाम् । इषम् ॥६॥

# ॥ अथ खिलम् ॥

१ मैत्रावरुणिर्वसिष्ठः । सरस्वान् । त्रिष्टुप् ।

यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त ऽआपः ।
यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे हुवेम ॥१॥ [ २४ ]
यस्य । व्रतम् । पशवः । यन्ति । सर्वे । यस्य । व्रतम् ।
उप॰तिष्ठन्ते । आपः ॥ यस्य । व्रते । पुष्टि॰पतिः ।
नि॰विष्टः । तम् । सरस्वन्तम् । अवसे । हुवेम ॥१॥

## ( ९७ )

१० मैत्रावरुणिर्वसिष्ठः । १ इन्द्रः, २, ४-८ बृहस्पतिः, ३, ९ इन्द्राब्रह्मणस्पती, १० इन्द्राबृहस्पती । त्रिष्टुप् ।

यज्ञे दिवो नृषदने पृथिव्या नरो यत्र देवयवो मदन्ति ।
इन्द्राय यत्र सवनानि सुन्वे गमन्मदाय प्रथमं वयश्च ॥१॥
यज्ञे । दिवः । नृ॰सदने । पृथिव्याः । नरः । यत्र ।
देव॰यवः । मदन्ति ॥ इन्द्राय । यत्र । सवनानि ।
सुन्वे । गमत् । मदाय । प्रथमम् । वयः । च ॥१॥

आ दैव्या वृणीमहेऽवांसि बृहस्पतिर्नो मह ऽआ सखायः ।
यथा भवेम मीळ्हुषेऽअनागा यो नो दाता परावतः पितेव ॥२॥
आ । दैव्या । वृणीमहे । अवांसि । बृहस्पतिः । नः ।
महे । आ । सखायः ॥ यथा । भवेम । मीळ्हुषे ।
अनागाः । यः । नः । दाता । परा॰वतः । पिताऽइव ॥२॥

तमु ज्येष्ठं नमसा हविर्भिः सुशेवं ब्रह्मणस्पतिं गृणीषे ।
इन्द्रं श्लोको महि दैव्यः सिषक्तु यो ब्रह्मणो देवकृतस्य राजा ॥३॥

तम् । ॐ इति । ज्येष्ठम् । नमसा । हविःऽभिः । सुऽशेवम् ।
ब्रह्मणः । पतिम् । गृणीषे ॥ इन्द्रम् । श्लोकः । महि ।
दैव्यः । सिसक्तु । यः । ब्रह्मणः । देवऽकृतस्य । राजा ॥३॥

**स ऽआ नो योनिं सदतु प्रेष्ठो बृहस्पतिर्विश्ववारो यो ऽअस्ति ।**
**कामो रायः सुवीर्यस्य तं दात्पर्षन्नो ऽअति सश्चतो ऽअरिष्टान् ॥४॥**
सः । आ । नः । योनिम् । सदतु । प्रेष्ठः । बृहस्पतिः ।
विश्वऽवारः । यः । अस्ति ॥ कामः । रायः । सुऽवीर्यस्य ।
तम् । दात् । पर्षत् । नः । अति । सश्चतः । अरिष्टान् ॥४॥

**तमा नो ऽअर्कममृताय जुष्टमिमे धासुरमृतासः पुराजाः ।**
**शुचिक्रन्दं यजतं पस्त्यानां बृहस्पतिमनर्वाणं हुवेम ॥५॥ (२१)**
तम् । आ । नः । अर्कम् । अमृताय । जुष्टम् । इमे ।
धासुः । अमृतासः । पुराऽजाः ॥ शुचिऽक्रन्दम् । यजतम् ।
पस्त्यानाम् । बृहस्पतिम् । अनर्वाणम् । हुवेम ॥५॥

**तं शग्मासो ऽअरुषासो ऽअश्वा बृहस्पतिं सहवाहो वहन्ति ।**
**सहश्चिद्यस्य नीलवत्सधस्थं नभो न रूपमरुषं वसानाः ॥६॥**
तम् । शग्मासः । अरुषासः । अश्वाः । बृहस्पतिम् ।
सहऽवाहः । वहन्ति ॥ सहः । चित् । यस्य । नीलऽवत् ।
सधऽस्थम् । नभः । न । रूपम् । अरुषम् । वसानाः ॥६॥

**स हि शुचिः शतपत्रः स शुन्ध्युर्हिरण्यवाशीरिषिरः स्वर्षाः ।**
**बृहस्पतिः स स्वावेश ऽऋष्वः पुरू सखिभ्य ऽआसुतिं करिष्ठः ॥७॥**
सः । हि । शुचिः । शतऽपत्रः । सः । शुन्ध्युः । हिरण्यऽवाशीः ।
इषिरः । स्वःऽसाः ॥ बृहस्पतिः । सः । सुऽआवेशः ।
ऋष्वः । पुरु । सखिऽभ्यः । आऽसुतिम् । करिष्ठः ॥७॥

देवी देवस्य रोदसी जनित्री बृहस्पतिं वावृधतुर्महित्वा ।
दक्षाय्याय दक्षता सखायः करद्ब्रह्मणे सुतरा सुगाधा ॥८॥
देवी इति । देवस्य । रोदसी इति । जनित्री इति ।
बृहस्पतिम् । ववृधतुः । महि०त्वा ॥ दक्षाय्याय । दक्षत ।
सखायः । करत् । ब्रह्मणे । सुतरा । सु०गाधा ॥८॥

इयं वां ब्रह्मणस्पते सुवृक्तिर्ब्रह्मेन्द्राय वज्रिणे ऽअकारि ।
अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥९॥
इयम् । वाम् । ब्रह्मणः । पते । सु०वृक्तिः । ब्रह्म । इन्द्राय ।
वज्रिणे । अकारि ॥ अविष्टम् । धियः । जिगृतम् ।
पुरम्०धीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥९॥

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे ऽउत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः॥१०॥ ( २२ ) [ ८९४ ]
बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति ।
उत । पार्थिवस्य ॥ धत्तम् । रयिम् । स्तुवते । कीरये ।
चित् । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥१०॥

## ( ९८ )

७ मैत्रावरुणिर्वसिष्ठः । इन्द्रः, ७ इन्द्राबृहस्पती । त्रिष्टुप् ।

अध्वर्यवोऽरुणं दुग्धमंशुं जुहोतन वृषभाय क्षितीनाम् ।
गौराद्वेदीयाँ ऽअवपानमिन्द्रो विश्वाहेद्याति सुतसोममिच्छन् ॥१॥
अध्वर्यवः । अरुणम् । दुग्धम् । अंशुम् । जुहोतन ।
वृषभाय । क्षितीनाम् ॥ गौरात् । वेदीयान् । अव०पानम् ।
इन्द्रः । विश्वाहा । इत् । याति । सुत०सोमम् । इच्छन् ॥१॥

यद्दधिषे प्रदिवि चार्वन्नं दिवेदिवे पीतिमिदस्य वक्षि ।
उत हृदोत मनसा जुषाण उशन्निन्द्र प्रस्थितान्पाहि सोमान् ॥२॥
यत् । दधिषे । प्रऽदिवि । चारु । अन्नम् । दिवेऽदिवे । पीतिम् ।
इत् । अस्य । वक्षि ॥ उत । हृदा । उत । मनसा । जुषाणः ।
उशन् । इन्द्र । प्रऽस्थितान् । पाहि । सोमान् ॥२॥

जज्ञानः सोमं सहसे पपाथ प्र ते माता महिमानमुवाच ।
एन्द्र पप्राथोर्वन्तरिक्षं युधा देवेभ्यो वरिवश्चकर्थ ॥३॥
जज्ञानः । सोमम् । सहसे । पपाथ । प्र । ते । माता ।
महिमानम् । उवाच ॥ आ । इन्द्र । पप्राथ । उरु ।
अन्तरिक्षम् । युधा । देवेभ्यः । वरिवः । चकर्थ ॥३॥

यद्योधया महतो मन्यमानान्त्साक्षाम तान्बाहुभिः शाशदानान् ।
यद्वा नृभिर्वृत इन्द्राभियुध्यास्तं त्वयाजिं सौश्रवसं जयेम ॥४॥
यत् । योधयाः । महतः । मन्यमानान् । साक्षाम । तान् । बाहुऽभिः ।
शाशदानान् ॥ यत् । वा । नृऽभिः । वृतः । इन्द्र । अभिऽयुध्याः ।
तम् । त्वया । आजिम् । सौश्रवसम् । जयेम ॥४॥

प्रेन्द्रस्य वोचं प्रथमा कृतानि प्र नूतना मघवा या चकार ।
यदेददेवीरसहिष्ट माया अथाभवत्केवलः सोमो अस्य ॥५॥
प्र । इन्द्रस्य । वोचम् । प्रथमा । कृतानि । प्र । नूतना ।
मघऽवा । या । चकार ॥ यदा । इत् । अदेवीः । असहिष्ट ।
मायाः । अथ । अभवत् । केवलः । सोमः । अस्य ॥५॥

तवेदं विश्वमभितः पशव्यं यत्पश्यसि चक्षसा सूर्यस्य ।
गवामसि गोपतिरेक इन्द्र भक्षीमहि ते प्रयतस्य वस्वः ॥६॥

तर्व । इदम् । विश्वम् । अभितः । पशव्यम् । यत् ।
पश्यसि । चक्षसा । सूर्यस्य ॥ गवाम् । असि । गोऽपतिः ।
एकः । इन्द्र । भक्षीमहि । ते । प्रऽयतस्य । वस्वः ॥६॥

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे ऽउत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः ॥७॥ ( २३ ) [ ९०१ ]
बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति ।
उत । पार्थिवस्य ॥ धत्तम् । रयिम् । स्तुवते । कीरये ।
चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

# ( ९९ )

७ मैत्रावरुणिर्वसिष्ठः । विष्णुः, ४-६ इन्द्राविष्णू । त्रिष्टुप् ।

परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥१॥
परः । मात्रया । तन्वा । वृधान । न । ते । महिऽत्वम् ।
अनु । अश्नुवन्ति ॥ उभे इति । ते । विद्म । रजसी इति ।
पृथिव्याः । विष्णो इति । देव । त्वम् । परमस्य । वित्से ॥१॥

न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।
उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥२॥
न । ते । विष्णो इति । जायमानः । न । जातः । देव । महिम्नः ।
परम् । अन्तम् । आप ॥ उत् । अस्तभ्नाः । नाकम् । ऋष्वम् ।
बृहन्तम् । दाधर्थ । प्राचीम् । ककुभम् । पृथिव्याः ॥२॥

इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ।
व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥३॥

इरावती इतीरा०वती । धेनुमती इति धेनु०मती । हि । भूतम् ।
सुयवसिनी इति । सु०यवसिनी । मनुषे । दशस्या ॥ वि । अस्तभ्नाः ।
रोदसी इति । विष्णो इति । एते इति । दाधर्थ । पृथिवीम् । अभितः । मयूखैः ॥३॥

**उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् ।**
**दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥४॥**
उरुम् । यज्ञाय । चक्रथुः । ऊँ इति । लोकम् । जनयन्ता ।
सूर्यम् । उषसम् । अग्निम् ॥ दासस्य । चित् ।
वृष०शिप्रस्य । मायाः । जघ्नथुः । नरा । पृतनाज्येषु ॥४॥

**इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।**
**शतं वर्चिनः सहस्रं च साकं हथो ऽअप्रत्यसुरस्य वीरान् ॥५॥**
इन्द्राविष्णू इति । दृंहिताः । शम्बरस्य । नव । पुरः ।
नवतिम् । च । श्नथिष्टम् ॥ शतम् । वर्चिनः । सहस्रम् ।
च । साकम् । हथः । अप्रति । असुरस्य । वीरान् ॥५॥

**इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्द्धयन्ती ।**
**ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥६॥**
इयम् । मनीषा । बृहती । बृहन्ता । उरु०क्रमा ।
तवसा । वर्द्धयन्ती ॥ ररे । वाम् । स्तोमम् । विदथेषु ।
विष्णो इति । पिन्वतम् । इषः । वृजनेषु । इन्द्र ॥६॥

**वषट् ते विष्णवास ऽआ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।**
**वर्द्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥७॥ (२४) [१०८]**
वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् । मे ।
जुषस्व । शिपि०विष्ट । हव्यम् ॥ वर्द्धन्तु । त्वा । सु०स्तुतयः ।
गिरः । मे । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥७॥

# ( १०० )

७ मैत्रावरुणिर्वसिष्ठः । विष्णुः । त्रिष्टुप् ।

नू मर्त्तो॑ दयते सनि॒ष्यन्यो विष्ण॑व ऽउरुगा॒याय॒ दाश॑त् ।
प्र यः स॒त्राचा॒ मन॑सा॒ यजा॑त ऽए॒ताव॑न्तं॒ नर्य॑मा॒विवा॑सात् ॥१॥
नु । मर्त्तः॑ । द॒य॒ते॒ । स॒नि॒ष्यन् । यः । विष्ण॑वे ।
उ॒रु॒ऽगा॒याय॑ । दाश॑त् ॥ प्र । यः । स॒त्राचा॑ । मन॑सा ।
यजा॑ते । ए॒ताव॑न्तम् । नर्य॑म् । आ॒ऽविवा॑सात् ॥१॥

त्वं विष्णो सुम॒तिं वि॒श्वज॑न्या॒मप्र॑युतामेवयावो म॒तिं दाः॑ ।
पर्चो॒ यथा॑ नः सुवि॒तस्य॒ भूरे॒रश्वा॑वतः पुरुश्च॒न्द्रस्य॑ रा॒यः ॥२॥
त्वम् । वि॒ष्णो॒ इति॑ । सु॒ऽम॒तिम् । वि॒श्व॒ऽज॑न्याम् । अप्र॑ऽयुताम् ।
ए॒व॒ऽया॒वः॒ । म॒तिम् । दा॒ः ॥ पर्चः॑ । यथा॑ । न॒ः । सु॒वि॒तस्य॑ ।
भूरेः॑ । अश्व॑ऽवतः । पु॒रु॒ऽच॒न्द्रस्य॑ । रा॒यः ॥२॥

त्रिर्दे॒वः पृ॒थि॒वीमे॒ष ऽए॒तां वि च॑क्रमे श॒तर्च॑सं महि॒त्वा ।
प्र विष्णु॑रस्तु त॒वस॒स्तवी॑यान्त्वे॒षं ह्य॑स्य॒ स्थवि॑रस्य॒ नाम॑ ॥३॥
त्रिः । दे॒वः । पृ॒थि॒वीम् । ए॒षः । ए॒ताम् । वि । च॒क्र॒मे॒ ।
श॒त॒ऽअ॑र्चसम् । म॒हि॒ऽत्वा ॥ प्र । विष्णुः॑ । अ॒स्तु॒ । त॒वसः॑ ।
तवी॑यान् । त्वे॒षम् । हि । अ॒स्य॒ । स्थवि॑रस्य । नाम॑ ॥३॥

वि च॑क्रमे पृथि॒वीमे॒ष ऽए॒तां क्षेत्रा॑य॒ विष्णु॒र्मनु॑षे दश॒स्यन् ।
ध्रु॒वासो॑ ऽअस्य की॒रयो॒ जना॑स ऽउरुक्षि॒तिं सु॒जनि॑मा चकार ॥४॥
वि । च॒क्र॒मे॒ । पृ॒थि॒वीम् । ए॒षः । ए॒ताम् । क्षेत्रा॑य ।
विष्णुः॑ । मनु॑षे । द॒श॒स्यन् ॥ ध्रु॒वासः॑ । अ॒स्य॒ । की॒रयः॑ ।
जना॑सः । उ॒रु॒ऽक्षि॒तिम् । सु॒ऽजनि॑मा । च॒का॒र॒ ॥४॥

प्र तत्ते ऽअद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥५॥
प्र । तत् । ते । अद्य । शिपि॰विष्ट । नाम । अर्यः ।
शंसामि । वयुनानि । विद्वान् ॥ तम् । त्वा । गृणामि ।
तवसम् । अतव्यान् । क्षयन्तम् । अस्य । रजसः । पराके ॥५॥

किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो ऽअस्मि ।
मा वर्पो ऽअस्मदप गूह ऽएतद्यदन्यरूपः समिथे बभूथ ॥६॥
किम् । इत् । ते । विष्णो इति । परि॰चक्ष्यम् । भूत् । प्र । यत् ।
ववक्षे । शिपि॰विष्टः । अस्मि ॥ मा । वर्पः । अस्मत् । अप ।
गूहः । एतत् । यत् । अन्य॰रूपः । समिथे । बभूथ ॥६॥

वषट् ते विष्णवास ऽआ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्द्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥७॥ (२५) [९१५]
वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् । मे ।
जुषस्व । शिपि॰विष्ट । हव्यम् ॥ वर्द्धन्तु । त्वा । सु॰स्तुतयः ।
गिरः । मे । यूयम् । पात । स्वस्ति॰भिः । सदा । नः ॥७॥

॥ इति पञ्चमाष्टके षष्ठोऽध्यायः ॥ ६ ॥

# षष्ठाध्यायस्य मन्त्रवर्गानुक्रमणी

प्रत्यु अदर्श्या ॥१॥
इन्द्रावरुणा युवम ॥२॥
महे शुल्काय वरुणस्य ॥३॥
युवां नरा पश्यमानास ॥४॥
युवां हवन्त उभयास ॥ ५॥
आ वां राजानावध्वरे ॥६॥
पुनीषे वामरक्षसं ॥७॥
धीरा त्वस्य महिना ॥८॥
रदत्पथो वरुणः ॥९॥
प्र शुन्ध्युवं वरुणाय ॥१०॥
मो षु वरुण मृन्मयं ॥११॥
प्र वीरया शुचयो ॥१२॥
कुविदङ्ग नमसा ॥१३॥
आ वायो भूष ॥१४॥
शुचिं नु स्तोमं ॥१५॥
इमामु षु सोमं ॥१६॥
इयं वामस्य मन्मन ॥१७॥
इन्द्राग्नी अवसा ॥१८॥
प्र क्षोदसा धायसा ॥१९॥
बृहदु गायिषे ॥२०॥
यज्ञे दिवो नृषदने ॥२१॥
तं शग्मासो अरुषासो ॥२२॥
अध्वर्यवोऽरुणं ॥२३॥
परो मात्रया तन्वा ॥२४॥
नू मर्तो दयते ॥२५॥

॥ इति शाङ्खायनसंहितायां पञ्चमाष्टके षष्ठोऽध्यायः ॥
( षष्ठाध्याये वर्गाः २५, सूक्तानि २०, ऋचः १४५ + १ खिलम् = १४६ )

# ॥ पञ्चमाष्टके सप्तमोऽध्यायः॥

अथ सप्तमोऽध्यायः॥७॥ वर्गाः १-३३ ][ सप्तममण्डले सूक्तानि १०१-१०४
अष्टममण्डले सूक्तानि १-४

## ( १०१ )

६ मैत्रावरुणिर्वसिष्ठः (वृस्टिकामः), कुमार आग्नेयो वा। पर्जन्यः । त्रिष्टुप् ।

तिस्रो वाचः प्र वद ज्योतिरग्रा या एतद् दुह्रे मधुदोघमूधः ।
स वत्सं कृण्वन्गर्भमोषधीनां सद्यो जातो वृषभो रोरवीति ॥१॥
तिस्रः । वाचः । प्र । वद । ज्योतिः२अग्राः । याः । एतत् ।
दुह्रे । मधु०दोघम् । ऊधः ॥ सः । वत्सम् । कृण्वन् ।
गर्भम् । ओषधीनाम् । सद्यः । जातः । वृषभः । रोरवीति ॥१॥

यो वर्धन ओषधीनां यो अपां यो विश्वस्य जगतो देव ईशे ।
स त्रिधातु शरणं शर्म यंसत्त्रिवर्तु ज्योतिः स्वभिष्ट्य१स्मे ॥२॥
यः । वर्धनः । ओषधीनाम् । यः । अपाम् । यः । विश्वस्य ।
जगतः । देवः । ईशे ॥ सः । त्रि०धातु । शरणम् । शर्म ।
यंसत् । त्रि०वर्तु । ज्योतिः । सु०अभिष्टि । अस्मे इति ॥२॥

स्तरीरु त्वद्भवति सूत उ त्वद्यथावशं तन्वं चक्र एषः ।
पितुः पयः प्रति गृभ्णाति माता तेन पिता वर्धते तेन पुत्रः ॥३॥
स्तरीः । ऊँ इति । त्वत् । भवति । सूते । ऊँ इति । त्वत् ।
यथा०वशम् । तन्वम् । चक्रे । एषः ॥ पितुः । पयः । प्रति ।
गृभ्णाति । माता । तेन । पिता । वर्धते । तेन । पुत्रः ॥३॥

यस्मिन्विश्वानि भुवनानि तस्थुस्तिस्रो द्यावस्त्रेधा सस्रुरापः ।
त्रयः कोशास उपसेचनासो मध्वः श्चोतन्त्यभितो विरप्शम् ॥४॥

यस्मिन् । विश्वानि । भुवनानि । तस्थुः । तिस्रः । द्यावः ।
त्रेधा । सस्रुः । आपः ॥ त्रयः । कोशासः । उप०सेचनासः ।
मध्वः । श्चोतन्ति । अभितः । वि०रप्शम् ॥४॥

**इदं वचः पर्जन्याय स्वराजे हृदो ऽअस्त्वन्तरं तज्जुजोषत् ।**
**मयोभुवो वृष्टयः सन्त्वस्मे सुपिप्पला ऽओषधीर्देवगोपाः ॥५॥**
इदम् । वचः । पर्जन्याय । स्व०राजे । हृदः । अस्तु ।
अन्तरम् । तत् । जुजोषत् ॥ मयः२भुवः । वृष्टयः । सन्तु ।
अस्मे इति । सु०पिप्पलाः । ओषधीः । देव०गोपाः ॥५॥

**स रेतोधा वृषभः शश्वतीनां तस्मिन्नात्मा जगतस्तस्थुषश्च ।**
**तन्म ऽऋतं पातु शतशारदाय यूयं पात स्वस्तिभिः सदा नः ॥६॥ ( १ ) [ ९२१ ]**
सः । रेतः२धाः । वृषभः । शश्वतीनाम् । तस्मिन् । आत्मा ।
जगतः । तस्थुषः । च ॥ तत् । मा । ऋतम् । पातु ।
शत०शारदाय । यूयम् । पात । स्वस्ति०भिः । सदा । नः ॥६॥

## ( १०२ )

**३ मैत्रावरुणिर्वसिष्ठः ( वृष्टिकामः ), कुमार आत्रेयो वा । पर्जन्यः । गायत्री, २ पादनिचृत् ।**

**पर्जन्याय प्र गायत दिवस्पुत्राय मीळ्हुषे ।**
**स नो यवसमिच्छतु ॥१॥**
पर्जन्याय । प्र । गायत । दिवः । पुत्राय । मीळ्हुषे ॥
सः । नः । यवसम् । इच्छतु ॥१॥

**यो गर्भमोषधीनां गवां कृणोत्यर्वताम् ।**
**पर्जन्यः पुरुषीणाम् ॥२॥**

यः । गर्भम् । ओषधीनाम् । गवाम् । कृणोति । अर्वताम् ॥
पर्जन्यः । पुरुषीणाम् ॥२॥

तस्मा ऽइदास्ये हविर्जुहोता मधुमत्तमम् ।
इळां नः संयतं करत् ॥३॥ (२) [ १२४ ]
तस्मै । इत् । आस्ये । हविः । जुहोत । मधुमत्०तमम् ॥
इळाम् । नः । सम्०यतम् । करत् ॥३॥

# ( १०३ )

१० मैत्रावरुणिर्वसिष्ठः मण्डूकाः ( पर्जन्यः ) । त्रिष्टुप्, १ अनुष्टुप् ।

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां प्र मण्डूका ऽअवादिषुः ॥१॥
संवत्सरम् । शशयानाः । ब्राह्मणाः । व्रत०चारिणः ॥
वाचम् । पर्जन्य०जिन्विताम् । प्र । मण्डूकाः । अवादिषुः ॥१॥

दिव्या ऽआपो ऽअभि यदेनमायन्दृतिं न शुष्कं सरसी शयानम् ।
गवामह न मायुर्वत्सिनीनां मण्डूकानां वग्नुरत्रा समेति ॥२॥
दिव्याः । आपः । अभि । यत् । एनम् । आयन् । दृतिम् । न ।
शुष्कम् । सरसी इति । शयानम् ॥ गवाम् । अह । न । मायुः ।
वत्सिनीनाम् । मण्डूकानाम् । वग्नुः । अत्र । सम् । एति ॥२॥

यदीमेनाँ ऽउशतो ऽअभ्यवर्षीत्तृष्यावतः प्रावृष्यागतायाम् ।
अख्खलीकृत्या पितरं न पुत्रो ऽअन्यो ऽअन्यमुप वदन्तमेति ॥३॥
यत् । ईम् । एनान् । उशतः । अभि । अवर्षीत् । तृष्या०वतः ।
प्रावृषि । आ०गतायाम् ॥ अख्खलीकृत्य । पितरम् । न ।
पुत्रः । अन्यः । अन्यम् । उप । वदन्तम् । एति ॥३॥

**अन्यो ऽअन्यमनु गृभ्णात्येनोरपां प्रसर्गे यदमन्दिषाताम् ।**
**मण्डूको यदभिवृष्टः कनिष्कन्पृश्निः सम्पृङ्क्ते हरितेन वाचम् ॥४॥**
अन्यः । अन्यम् । अनु । गृभ्णाति । एनोः । अपाम् । प्र०सर्गे ।
यत् । अमन्दिषाताम् ॥ मण्डूकः । यत् । अभि०वृष्टः ।
कनिस्कन् । पृश्निः । सम्०पृङ्क्ते । हरितेन । वाचम् ॥४॥

**यदेषामन्यो ऽअन्यस्य वाचं शाक्तस्येव वदति शिक्षमाणः ।**
**सर्वं तदेषां समृधेव पर्व यत्सुवाचो वदथनाध्यप्सु ॥५॥ ( ३ )**
यत् । एषाम् । अन्यः । अन्यस्य । वाचम् । शाक्तस्यऽइव ।
वदति । शिक्षमाणः ॥ सर्वम् । तत् । एषाम् । समृधाऽइव ।
पर्व । यत् । सु०वाचः । वदथन । अधि । अप्०सु ॥५॥

**गोमायुरेको ऽअजमायुरेकः पृश्निरेको हरित ऽएक ऽएषाम् ।**
**समानं नाम बिभ्रतो विरूपाः पुरुत्रा वाचं पिपिशुर्वदन्तः ॥६॥**
गो०मायुः । एकः । अज०मायुः । एकः । पृश्निः । एकः ।
हरितः । एकः । एषाम् ॥ समानम् । नाम । बिभ्रतः ।
वि०रूपाः । पुरु०त्रा । वाचम् । पिपिशुः । वदन्तः ॥६॥

**ब्राह्मणासो ऽअतिरात्रे न सोमे सरो न पूर्णमभितो वदन्तः ।**
**संवत्सरस्य तदहः परि ष्ठ यन्मण्डूकाः प्रावृषीणं बभूव ॥७॥**
ब्राह्मणासः । अति०रात्रे । न । सोमे । सरः । न । पूर्णम् ।
अभितः । वदन्तः ॥ संवत्सरस्य । तत् । अहरिति ।
परि । स्थ । यत् । मण्डूकाः । प्रावृषीणम् । बभूव ॥७॥

**ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणम् ।**
**अध्वर्यवो घर्मिणः सिष्विदाना ऽआविर्भवन्ति गुह्या न के चित् ॥८॥**

ब्राह्मणासः । सोमिनः । वाचम् । अक्रत । ब्रह्म । कृण्वन्तः ।
परिवत्सरीणम् ॥ अध्वर्यवः । घर्मिणः । सिस्विदानाः ।
आविः । भवन्ति । गुह्याः । न । के । चित् ॥८॥

देवहितिं जुगुपुर्द्वादशस्य ऽऋतुं नरो न प्र मिनन्त्येते ।
संवत्सरे प्रावृष्यागतायां तप्ता घर्मा ऽअश्नुवते विसर्गम् ॥९॥
देव०हितिम् । जुगुपुः । द्वादशस्य । ऋतुम् । नरः । न । प्र ।
मिनन्ति । एते ॥ संवत्सरे । प्रावृषि । आ०गतायाम् ।
तप्ताः । घर्माः । अश्नुवते । वि०सर्गम् ॥९॥

गोमायुरदादजमायुरदात्पृश्निरदाद्धरितो नो वसूनि ।
गवां मण्डूका ददतः शतानि सहस्रसावे प्र तिरन्त ऽआयुः ॥१०॥ (४) [ १३४ ]
गो०मायुः । अदात् । अज०मायुः । अदात् । पृश्निः ।
अदात् । हरितः । नः । वसूनि ॥ गवाम् । मण्डूकाः ।
ददतः । शतानि । सहस्र०सावे । प्र । तिरन्ते । आयुः ॥१०॥

# अथ खिलम्

१ मैत्रावरुणिर्वसिष्ठः (वृष्टिकामः), कुमार आत्रेयो वा । पर्जन्यः । अनुष्टुप् ।

उपप्रवद मण्डूकि वर्षमा वद तादुरि ।
मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः ॥१॥ [ २५ ]
उप०प्रवद । मण्डुकि । वर्षम् । आ । वद । तादुरि ॥
मध्ये । ह्रदस्य । प्लवस्य । वि०गृह्य । चतुरः । पदः ॥१॥

# ( १०४ )

२५ मैत्रावरुणिर्वसिष्ठः । (राक्षोघ्नं) इन्द्रासोमौ, ८, १६, १९-२२ इन्द्रः, ९, १२-१३ सोमः, १०, १४ अग्निः, ११ देवाः, १७ ग्रावाणः, १८ मरुतः, २३ (पूर्वार्द्धस्य) वसिष्ठाशीः (उत्तरार्द्धस्य) पृथिव्यन्तरिक्षे । त्रिष्टुप्, १-६, १८, २१, २३ जगती, ७ जगती त्रिष्टुब्वा, २५ अनुष्टुप् ।

**इन्द्रासोमा तपतं रक्ष ऽउब्जतं न्यर्पयतं वृषणा तमोवृधः ।**

**परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्रिणः ॥१॥**

इन्द्रासोमा । तपतम् । रक्षः । उब्जतम् । नि । अर्पयतम् ।
वृषणा । तमः२वृधः ॥ परा । शृणीतम् । अचितः । नि ।
ओषतम् । हतम् । नुदेथाम् । नि । शिशीतम् । अत्रिणः ॥१॥

**इन्द्रासोमा समघशंसमभ्य१घं तपुर्ययस्तु चरुरग्निवाँइव ।**

**ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥२॥**

इन्द्रासोमा । सम् । अघ०शंसम् । अभि । अघम् । तपुः ।
ययस्तु । चरुः । अग्निवान्ऽइव ॥ ब्रह्म०द्विषे । क्रव्य०अदे ।
घोर०चक्षसे । द्वेषः । धत्तम् । अनवायम् । किमीदिने ॥२॥

**इन्द्रासोमा दुष्कृतो वव्रे ऽअन्तरनारम्भणे तमसि प्र विध्यतम् ।**

**यथा नातः पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः ॥३॥**

इन्द्रासोमा । दुः२कृतः । वव्रे । अन्तः । अनारम्भणे । तमसि ।
प्र । विध्यतम् ॥ यथा । न । अतः । पुनः । एकः । चन ।
उत्०अयत् । तत् । वाम् । अस्तु । सहसे । मन्यु०मत् । शवः ॥३॥

**इन्द्रासोमा वर्त्तयतं दिवो वधं सं पृथिव्या ऽअघशंसाय तर्हणम् ।**

**उत्तक्षतं स्वर्य१ पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथः ॥४॥**

इन्द्रा॑सोमा । व॒र्त्तय॑तम् । दि॒वः । व॒धम् । सम् । पृ॒थि॒व्याः ।
अ॒घ॒ऽशं॑साय । तर्ह॑णम् ॥ उत् । त॒क्ष॒त॒म् । स्व॒र्य॑म् ।
पर्व॑तेभ्यः । येन॑ । रक्षः॑ । व॒वृ॒धा॒नम् । नि॒ऽजूर्व॑थः ॥४॥

**इन्द्रा॑सोमा व॒र्त्तय॑तं दि॒वस्पर्य॑ग्नित॒प्तेभि॑र्यु॒वमश्म॑हन्मभिः ।**
**तपु॑र्वधेभिर॒जरे॑भिर॒त्रिणो॒ नि पर्शा॑ने विध्यतं॒ यन्तु॑ निस्व॒रम् ॥५॥ (५)**
इन्द्रा॑सोमा । व॒र्त्तय॑तम् । दि॒वः । परि॑ । अ॒ग्नि॒ऽत॒प्तेभिः॑ ।
यु॒वम् । अश्म॑हन्मऽभिः ॥ तपुः॑ऽवधेभिः । अ॒जरे॑भिः ।
अ॒त्रिणः॑ । नि । पर्शा॑ने । वि॒ध्य॒त॒म् । यन्तु॑ । नि॒ऽस्व॒रम् ॥५॥

**इन्द्रा॑सोमा॒ परि॑ वां भूतु वि॒श्वत॑ ऽइ॒यं म॒तिः क॒क्ष्याश्वे॑व वा॒जिना॑ ।**
**यां वां॒ होत्रां॑ परिहि॒नोमि॑ मे॒धये॒मा ब्रह्मा॑णि नृ॒पती॑व जिन्वतम् ॥६॥**
इन्द्रा॑सोमा । परि॑ । वा॒म् । भू॒तु । वि॒श्वतः॑ । इ॒यम् । म॒तिः । क॒क्ष्या॑ ।
अश्वा॑ऽइव । वा॒जिना॑ ॥ याम् । वा॒म् । होत्रा॑म् । प॒रि॒ऽहि॒नोमि॑ ।
मे॒धया॑ । इ॒मा । ब्रह्मा॑णि । नृ॒पती॑ इ॒वेति॑ नृ॒पती॑ऽइव । जि॒न्व॒त॒म् ॥६॥

**प्रति॑ स्मरेथां तु॒जय॑द्भि॒रेवै॑र्ह॒तं द्रु॒हो र॒क्षसो॑ भङ्गु॒राव॑तः ।**
**इन्द्रा॑सोमा दु॒ष्कृते॒ मा सु॒गं भू॒द्यो नः॑ क॒दा चि॑दभि॒दास॑ति द्रु॒हा ॥७॥**
प्रति॑ । स्म॒रे॒था॒म् । तु॒जय॑त्ऽभिः । एवैः॑ । ह॒तम् । द्रु॒हः ।
र॒क्षसः॑ । भ॒ङ्गु॒र॒ऽवतः ॥ इन्द्रा॑सोमा । दुः॒ऽकृते॑ । मा । सु॒ऽगम् ।
भू॒त् । यः । न॒ः । क॒दा । चि॒त् । अ॒भि॒ऽदास॑ति । द्रु॒हा ॥७॥

**यो मा॒ पाके॑न॒ मन॑सा॒ चर॑न्तमभि॒चष्टे॒ ऽअनृ॑तेभि॒र्वचो॑भिः ।**
**आप॑इव का॒शिना॒ संगृ॑भीता॒ ऽअस॑न्नस्त्वास॑त ऽइन्द्र व॒क्ता ॥८॥**
यः । मा॒ । पाके॑न । मन॑सा । चर॑न्तम् । अ॒भि॒ऽचष्टे॑ ।
अनृ॑तेभिः । वच॑ःऽभिः ॥ आप॑ःऽइव । का॒शिना॑ ।
सम्ऽगृ॑भीताः । अस॑न् । अ॒स्तु । अस॑तः । इ॒न्द्र । व॒क्ता ॥८॥

**ये पाकशंसं विहरन्त ऽएवैर्ये वा भद्रं दूषयन्ति स्वधाभिः ।**
**अहये वा तान्प्रददातु सोम ऽआ वा दधातु निर्ऋतेरुपस्थे ॥९॥**
ये । पाक०शंसम् । वि०हरन्ते । एवैः । ये । वा । भद्रम् ।
दूषयन्ति । स्वधा०भिः ॥ अहये । वा । तान् । प्र०ददातु ।
सोमः । आ । वा । दधातु । निः२ऋतेः । उप०स्थे ॥९॥

**यो नो रसं दिप्सति पित्वो ऽअग्ने यो ऽअश्वानां यो गवां यस्तनूनाम् ।**
**रिपुः स्तेनः स्तेयकृद्दभ्रमेतु नि ष हीयतां तन्वाइ तना च ॥१०॥ (६)**
यः । नः । रसम् । दिप्सति । पित्वः । अग्ने । यः । अश्वानाम् ।
यः । गवाम् । यः । तनूनाम् ॥ रिपुः । स्तेनः । स्तेय०कृत् ।
दभ्रम् । एतु । नि । सः । हीयताम् । तन्वा । तना । च ॥१०॥

**परः सो ऽअस्तु तन्वाइ तना च तिस्रः पृथिवीरधो ऽअस्तु विश्वाः ।**
**प्रति शुष्यतु यशो ऽअस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् ॥११॥**
परः । सः । अस्तु । तन्वा । तना । च । तिस्रः । पृथिवीः ।
अधः । अस्तु । विश्वाः ॥ प्रति । शुष्यतु । यशः । अस्य ।
देवाः । यः । नः । दिवा । दिप्सति । यः । च । नक्तम् ॥११॥

**सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।**
**तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥१२॥**
सु०विज्ञानम् । चिकितुषे । जनाय । सत् । च । असत् । च ।
वचसी इति । पस्पृधाते इति ॥ तयोः । यत् । सत्यम् । यतरत् ।
ऋजीयः । तत् । इत् । सोमः । अवति । हन्ति । असत् ॥१२॥

**न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।**
**हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥१३॥**

न । वै । ऊँ इति । सोमः । वृजिनम् । हिनोति । न ।
क्षत्रियम् । मिथुया । धारयन्तम् ॥ हन्ति । रक्षः । हन्ति ।
असत् । वदन्तम् । उभौ । इन्द्रस्य । प्र०सितौ । शयाते इति ॥१३॥

**यदि वाहमनृतदेव ऽआस मोघं वा देवाँ ऽअप्यूहे ऽअग्ने ।**
**किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निर्ऋथं सचन्ताम् ॥१४॥**
यदि । वा । अहम् । अनृत०देवः । आस । मोघम् । वा ।
देवान् । अपि०ऊहे । अग्ने ॥ किम् । अस्मभ्यम् । जात०वेदः ।
हृणीषे । द्रोघ०वाचः । ते । निःऽऋथम् । सचन्ताम् ॥१४॥

**अद्या मुरीय यदि यातुधानो ऽअस्मि यदि वायुस्ततप पूरुषस्य ।**
**अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥१५॥ (७)**
अद्य । मुरीय । यदि । यातु०धानः । अस्मि । यदि । वा ।
आयुः । ततप । पुरुषस्य ॥ अध । सः । वीरैः । दश०भिः ।
वि । यूयाः । यः । मा । मोघम् । यातु०धान । इति । आह ॥१५॥

**यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ।**
**इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट ॥१६॥**
यः । मा । अयातुम् । यातु०धान । इति । आह । यः । वा ।
रक्षाः । शुचिः । अस्मि । इति । आह ॥ इन्द्रः । तम् । हन्तु ।
महता । वधेन । विश्वस्य । जन्तोः । अधमः । पदीष्ट ॥१६॥

**प्र या जिगाति खर्गलेव नक्तमप द्रुहा तन्वं गूहमाना ।**
**वव्राँ ऽअनन्ताँ ऽअव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस ऽउपब्दैः ॥१७॥**
प्र । या । जिगाति । खर्गलाऽइव । नक्तम् । अप ।
द्रुहा । तन्वम् । गूहमाना ॥ वव्रान् । अनन्तान् । अव ।
सा । पदीष्ट । ग्रावाणः । घ्नन्तु । रक्षसः । उपब्दैः ॥१७॥

**वि तिष्ठध्वं मरुतो विक्ष्विऽच्छत गृभायत रक्षसः सं पिनष्टन ।**
**वयो ये भूत्वी पतयन्ति नक्तभिर्ये वा रिपो दधिरे देवे ऽअध्वरे ॥१८॥**

वि । तिष्ठध्वम् । मरुतः । विक्षु । इच्छत । गृभायत ।
रक्षसः । सम् । पिनष्टन ॥ वयः । ये । भूत्वी । पतयन्ति ।
नक्त०भिः । ये । वा । रिपः । दधिरे । देवे । अध्वरे ॥१८॥

**प्र वर्त्तय दिवो ऽअश्मानमिन्द्र सोमशितं मघवन्त्सं शिशाधि ।**
**प्राक्तादपाक्तादधरादुदक्तादभि जहि रक्षसः पर्वतेन ॥१९॥**

प्र । वर्त्तय । दिवः । अश्मानम् । इन्द्र । सोम०शितम् ।
मघ०वन् । सम् । शिशाधि ॥ प्राक्तात् । अपाक्तात् ।
अधरात् । उदक्तात् । अभि । जहि । रक्षसः । पर्वतेन ॥१९॥

**एत ऽउ त्ये पतयन्ति श्वयातव ऽइन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।**
**शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥२०॥ (८)**

एते । ऊँ इति । त्ये । पतयन्ति । श्व०यातवः । इन्द्रम् । दिप्सन्ति ।
दिप्सवः । अदाभ्यम् ॥ शिशीते । शक्रः । पिशुनेभ्यः ।
वधम् । नूनम् । सृजत् । अशनिम् । यातुमत्०भ्यः ॥२०॥

**इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्याऽविवासताम् ।**
**अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत ऽएति रक्षसः ॥२१॥**

इन्द्रः । यातूनाम् । अभवत् । परा०शरः । हविःऽमथीनाम् । अभि ।
आ०विवासताम् ॥ अभि । इत् । ऊँ इति । शक्रः । परशुः ।
यथा । वनम् । पात्राऽइव । भिन्दन् । सतः । एति । रक्षसः ॥२१॥

**उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।**
**सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष ऽइन्द्र ॥२२॥**

उलूक॰यातुम् । शुशुलूक॰यातुम् । जहि । श्व॰यातुम् ।
उत । कोक॰यातुम् ॥ सुपर्ण॰यातुम् । उत । गृध्र॰यातुम् ।
दृषदाऽइव । प्र । मृण । रक्षः । इन्द्र ॥२२॥

**मा नो रक्षो ऽअभि नड्यातुमावतामपोच्छतु मिथुना या किमीदिना ।**
**पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात्पात्वस्मान् ॥२३॥**
मा । नः । रक्षः । अभि । नट् । यातु॰मावताम् । अप । उच्छतु ।
मिथुना । या । किमीदिना ॥ पृथिवी । नः । पार्थिवात् ।
पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥२३॥

**इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।**
**विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् ॥२४॥**
इन्द्र । जहि । पुमांसम् । यातु॰धानम् । उत । स्त्रियम् ।
मायया । शाशदानाम् ॥ वि॰ग्रीवासः । मूर॰देवाः ।
ऋदन्तु । मा । ते । दृशन् । सूर्यम् । उत्॰चरन्तम् ॥२४॥

**प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।**
**रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥२५॥ (९)** [ ९५९ ]
प्रति । चक्ष्व । वि । चक्ष्व । इन्द्रः । च । सोम । जागृतम् ॥
रक्षः॰भ्यः । वधम् । अस्यतम् । अशनिम् । यातुमत्॰भ्यः ॥२५॥

॥ इति सप्तमं मण्डलम् ॥७॥

# ॥ अथाष्टमं मण्डलम् ॥

## ( १ ) [ अथ प्रथमोऽनुवाकः ॥१॥ सूक्तानि १-५

३४, १-२ प्रगाथो (घौरः) काण्वः, (३-२९) मेधातिथि-मेध्यातिथी काण्वौ, ३०-३३ प्लायोगिरासङ्गः, ३४ आङ्गिरसी शाश्वती ऋषिका । इन्द्रः, ३०-३४ आसङ्ग । १-४ प्रगाथः = (विषमाबृहती, समा सतोबृहती), ५-३२ बृहती, ३३-३४ त्रिष्टुप् ।

मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥१॥
मा । चित् । अन्यत् । वि । शंसत । सखायः ।
मा । रिषण्यत ॥ इन्द्रम् । इत् । स्तोत । वृषणम् ।
सचा । सुते । मुहुः । उक्था । च । शंसत ॥१॥

अवक्रक्षिणं वृषभं यथाजुरं गां न चर्षणीसहम् ।
विद्वेषणं संवननोभयंकरं मंहिष्ठमुभयाविनम् ॥२॥
अव०क्रक्षिणम् । वृषभम् । यथा । अजुरम् । गाम् ।
न । चर्षणि०सहम् ॥ वि०द्वेषणम् । सम्०वनना ।
उभयम्०करम् । मंहिष्ठम् । उभयाविनम् ॥२॥

यच्चिद्धि त्वा जना ऽइमे नाना हवन्त ऽऊतये ।
अस्माकं ब्रह्मेदमिन्द्र भूतु तेऽहा विश्वा च वर्द्धनम् ॥३॥
यत् । चित् । हि । त्वा । जनाः । इमे । नाना ।
हवन्ते । ऊतये ॥ अस्माकम् । ब्रह्म । इदम् । इन्द्र ।
भूतु । ते । अहा । विश्वा । च । वर्द्धनम् ॥३॥

वि तर्तूर्यन्ते मघवन्विपश्चितोऽर्यो विपो जनानाम् ।
उप क्रमस्व पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥४॥

वि । तर्तूर्यन्ते । मघ०वन् । विपः॰चितः । अर्यः ।
विपः । जनानाम् ॥ उप । क्रमस्व । पुरु०रूपम् ।
आ । भर । वाजम् । नेदिष्ठम् । ऊतये ॥४॥

**महे चन त्वामद्रिवः परा शुल्काय देयाम् ।**
**न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥५॥ (१०)**
महे । चन । त्वाम् । अद्रि०वः । परा । शुल्काय । देयाम् ॥
न । सहस्राय । न । अयुताय । वज्रि०वः । न । शताय । शत०मघ ॥५॥

**वस्याँ ऽइन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः ।**
**माता च मे च्छदयथः समा वसो वसुत्वनाय राधसे ॥६॥**
वस्यान् । इन्द्र । असि । मे । पितुः । उत ।
भ्रातुः । अभुञ्जतः ॥ माता । च । मे । छदयथः ।
समा । वसो इति । वसु०त्वनाय । राधसे ॥६॥

**क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।**
**अलर्षि युध्म खजकृत्पुरंदर प्र गायत्रा ऽअगासिषुः ॥७॥**
क्व । इयथ । क्व । इत् । असि । पुरु०त्रा । चित् ।
हि । ते । मनः ॥ अलर्षि । युध्म । खज०कृत् ।
पुरम्०दर । प्र । गायत्राः । अगासिषुः ॥७॥

**प्रास्मै गायत्रमर्चत वावातुर्यः पुरंदरः ।**
**याभिः काण्वस्योप बर्हिरासदं यासद्वज्री भिनत्पुरः ॥८॥**
प्र । अस्मै । गायत्रम् । अर्चत । ववातुः । यः ।
पुरम्०दरः ॥ याभिः । काण्वस्य । उप । बर्हिः ।
आ०सदम् । यासत् । वज्री । भिनत् । पुरः ॥८॥

ये ते सन्ति दशग्विनः शतिनो ये सहस्रिणः ।
अश्वासो ये ते वृषणो रघुद्रुवस्तेभिर्नस्तूयमा गहि ॥९॥
ये । ते । सन्ति । दश॰ग्विनः । शतिनः । ये ।
सहस्रिणः ॥ अश्वासः । ये । ते । वृषणः ।
रघु॰द्रुवः । तेभिः । नः । तूयम् । आ । गहि ॥९॥

आ त्वद्य सबर्दुघां हुवे गायत्रवेपसम् ।
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतम् ॥१०॥ ( ११ )
आ । तु । अद्य । सबः॰दुघाम् । हुवे । गायत्र॰वेपसम् ॥
इन्द्रम् । धेनुम् । सु॰दुघाम् । अन्याम् । इषम् ।
उरु॰धाराम् । अरम्॰कृतम् ॥१०॥

यत्तुदत्सूर ऽएतशं वङ्कू वातस्य पर्णिना ।
वहत्कुत्समार्जुनेयं शतक्रतुः त्सरद्गन्धर्वमस्तृतम् ॥११॥
यत् । तुदत् । सूरः । एतशम् । वङ्कू इति ।
वातस्य । पर्णिना ॥ वहत् । कुत्सम् । आर्जुनेयम् ।
शत॰क्रतुः । त्सरत् । गन्धर्वम् । अस्तृतम् ॥११॥

य ऽऋते चिदभिश्रिषः पुरा जत्रुभ्य ऽआतृदः ।
संधाता संधिं मघवा पुरूवसुरिष्कर्त्ता विह्रुतं पुनः ॥१२॥
यः । ऋते । चित् । अभि॰श्रिषः । पुरा । जत्रु॰भ्यः ।
आ॰तृदः ॥ सम्॰धाता । सम्॰धिम् । मघ॰वा ।
पुरु॰वसुः । इष्कर्त्ता । वि॰ह्रुतम् । पुनरिति ॥१२॥

मा भूम निष्ट्याइवेन्द्र त्वदरणाइव ।
वनानि न प्रजहितान्यद्रिवो दुरोषासो ऽअमन्महि ॥१३॥

मा । भूम । निष्ट्याःऽइव । इन्द्र । त्वत् । अरणाःऽइव ॥
वनानि । न । प्रऽजहितानि । अद्रिऽवः । दुरोषासः । अमन्महि ॥१३॥

अमन्महीदनाशवोऽनुग्रासश्च वृत्रहन् ।
सकृत्सु ते महता शूर राधसा ऽअनु स्तोमं मुदीमहि ॥१४॥
अमन्महि । इत् । अनाशवः । अनुग्रासः ।
च । वृत्रऽहन् ॥ सकृत् । सु । ते । महता ।
शूर । राधसा । अनु । स्तोमम् । मुदीमहि ॥१४॥

यदि स्तोमं मम श्रवदस्माकमिन्द्रमिन्दवः ।
तिरः पवित्रं ससृवांस ऽआशवो मन्दन्तु तुग्र्यावृधः ॥१५॥ ( १२ )
यदि । स्तोमम् । मम । श्रवत् । अस्माकम् ।
इन्द्रम् । इन्दवः ॥ तिरः । पवित्रम् । ससृऽवांसः ।
आशवः । मन्दन्तु । तुग्र्यऽवृधः ॥१५॥

आ त्वद्य सधस्तुतिं वावातुः सख्युरा गहि ।
उपस्तुतिर्मघोनां प्र त्वावत्वधा ते वश्मि सुष्टुतिम् ॥१६॥
आ । तु । अद्य । सधऽस्तुतिम् । ववातुः । सख्युः ।
आ । गहि ॥ उपऽस्तुतिः । मघोनाम् । प्र । त्वा ।
अवतु । अध । ते । वश्मि । सुऽस्तुतिम् ॥१६॥

सोता हि सोममद्रिभिरेमेनमप्सु धावत ।
गव्या वस्त्रेव वासयन्त ऽइन्नरो निर्धुक्षन्वक्षणाभ्यः ॥१७॥
सोता । हि । सोमम् । अद्रिऽभिः । आ । ईम् । एनम् ।
अप्ऽसु । धावत ॥ गव्या । वस्त्राऽइव । वासयन्तः ।
इत् । नरः । निः । धुक्षन् । वक्षणाभ्यः ॥१७॥

**अध ज्मो ऽअध वा दिवो बृहतो रोचनादधि ।**
**अया वर्द्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥१८॥**
अध । ज्मः । अध । वा । दिवः । बृहतः ।
रोचनात् । अधि ॥ अया । वर्द्धस्व । तन्वा । गिरा ।
मम । आ । जाता । सुक्रतो इति सु०क्रतो । पृण ॥१८॥

**इन्द्राय सु मदिन्तमं सोमं सोता वरेण्यम् ।**
**शक्र ऽएणं पीपयद्विश्वया धिया हिन्वानं न वाजयुम् ॥१९॥**
इन्द्राय । सु । मदिन्०तमम् । सोमम् । सोत ।
वरेण्यम् ॥ शक्रः । एनम् । पीपयत् ।
विश्वया । धिया । हिन्वानम् । न । वाज०युम् ॥१९॥

**मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा ।**
**भूर्णिं मृगं न सवनेषु चुक्रुधं क ऽईशानं न याचिषत् ॥२०॥ ( १३ )**
मा । त्वा । सोमस्य । गल्दया । सदा । याचन् ।
अहम् । गिरा ॥ भूर्णिम् । मृगम् । न । सवनेषु ।
चुक्रुधम् । कः । ईशानम् । न । याचिषत् ॥२०॥

**मदेनेषितं मदमुग्रमुग्रेण शवसा ।**
**विश्वेषां तरुतारं मदच्युतं मदे हि ष्मा ददाति नः ॥२१॥**
मदेन । इषितम् । मदम् । उग्रम् । उग्रेण ।
शवसा ॥ विश्वेषाम् । तरुतारम् । मद०च्युतम् ।
मदे । हि । स्म । ददाति । नः ॥२१॥

**शेवारे वार्या पुरु देवो मर्त्ताय दाशुषे ।**
**स सुन्वते च स्तुवते च रासते विश्वगूर्त्तो ऽअरिष्टुतः ॥२२॥**

शेवारे । वार्या । पुरु । देवः । मर्त्ताय । दाशुषे ॥
सः । सुन्वते । च । स्तुवते । च । रासते । विश्व०गूर्त्तः । अरि०स्तुतः ॥२२॥

एन्द्र याहि मत्स्व चित्रेण देव राधसा ।
सरो न प्रास्युदरं सपीतिभिरा सोमेभिरुरु स्फिरम् ॥२३॥
आ । इन्द्र । याहि । मत्स्व । चित्रेण । देव ।
राधसा ॥ सरः । न । प्रासि । उदरम् ।
सपीति०भिः । आ । सोमेभिः । उरु । स्फिरम् ॥२३॥

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय ऽइन्द्र केशिनो वहन्तु सोमपीतये ॥२४॥
आ । त्वा । सहस्रम् । आ । शतम् । युक्ताः ।
रथे । हिरण्यये ॥ ब्रह्म०युजः । हरयः ।
इन्द्र । केशिनः । वहन्तु । सोम०पीतये ॥२४॥

आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।
शितिपृष्ठा वहतां मध्वो ऽअन्धसो विवक्षणस्य पीतये ॥२५॥ (१४)
आ । त्वा । रथे । हिरण्यये । हरी इति । मयूर०शेप्या ॥
शिति०पृष्ठा । वहताम् । मध्वः । अन्धसः । विवक्षणस्य । पीतये ॥२५॥

पिबा त्व१स्य गिर्वणः सुतस्य पूर्वपाइव ।
परिष्कृतस्य रसिन ऽइयमासुतिश्चारुर्मदाय पत्यते ॥२६॥
पिब । तु । अस्य । गिर्वणः । सुतस्य । पूर्वपाःऽइव ॥
परि०कृतस्य । रसिनः । इयम् । आ०सुतिः । चारुः । मदाय । पत्यते ॥२६॥

य ऽएको ऽअस्ति दंसना महाँ ऽउग्रो ऽअभि व्रतैः ।
गमत्स शिप्री न स योषदा गमद्धवं न परि वर्जति ॥२७॥
यः । एकः । अस्ति । दंसना । महान् । उग्रः ।
अभि । व्रतैः ॥ गमत् । सः । शिप्री । न । सः ।
योषत् । आ । गमत् । हवम् । न । परि । वर्जति ॥२७॥

त्वं पुरं चरिष्ण्वं वधैः शुष्णस्य सं पिणक् ।
त्वं भा ऽअनु चरो ऽअध द्विता यदिन्द्र हव्यो भुवः ॥२८॥
त्वम् । पुरम् । चरिष्ण्वम् । वधैः । शुष्णस्य ।
सम् । पिणक् ॥ त्वम् । भाः । अनु । चरः ।
अध । द्विता । यत् । इन्द्र । हव्यः । भुवः ॥२८॥

मम त्वा सूर ऽउदिते मम मध्यंदिने दिवः ।
मम प्रपित्वे ऽअपिशर्वरे वसवा स्तोमासो ऽअवृत्सत ॥२९॥
मम । त्वा । सूरे । उत्॰इते । मम । मध्यन्दिने ।
दिवः ॥ मम । प्र॰पित्वे । अपि॰शर्वरे ।
वसो इति । आ । स्तोमासः । अवृत्सत ॥२९॥

स्तुहि स्तुहीदेते घा ते मंहिष्ठासो मघोनाम् ।
निन्दिताश्वः प्रपथी परमज्या मघस्य मेध्यातिथे ॥३०॥ (१५)
स्तुहि । स्तुहि । इत् । एते । घ । ते । मंहिष्ठासः ।
मघोनाम् ॥ निन्दित॰अश्वः । प्र॰पथी ।
परम॰ज्याः । मघस्य । मेध्य॰अतिथे ॥३०॥

आ यदश्वान्वनन्वतः श्रद्धयाहं रथे रुहम् ।
उत वामस्य वसुनश्चिकेतति यो ऽअस्ति याद्वः पशुः ॥३१॥

आ । यत् । अश्वान् । वनन्ऽवतः । श्रद्धया ।
अहम् । रथे । रुहम् ॥ उत । वामस्य । वसुनः ।
चिकेतति । यः । अस्ति । याद्वः । पशुः ॥३१॥

य ऽऋज्रा मह्यं मामहे सह त्वचा हिरण्यया ।
एष विश्वान्यभ्यस्तु सौभगासङ्गस्य स्वनद्रथः ॥३२॥
यः । ऋज्रा । मह्यम् । ममहे । सह । त्वचा ।
हिरण्यया ॥ एषः । विश्वानि । अभि । अस्तु ।
सौभगा । आऽसङ्गस्य । स्वनत्ऽरथः ॥३२॥

अध प्लायोगिरति दासदन्यानासङ्गो ऽअग्ने दशभिः सहस्रैः ।
अधोक्षणो दश मह्यं रुशन्तो नळाइव सरसो निरतिष्ठन् ॥३३॥
अध । प्लायोगिः । अति । दासत् । अन्यान् । आऽसङ्गः ।
अग्ने । दशऽभिः । सहस्रैः ॥ अध । उक्षणः । दश ।
मह्यम् । रुशन्तः । नळाःऽइव । सरसः । निः । अतिष्ठन् ॥३३॥

अन्वस्य स्थूरं ददृशे पुरस्तादनस्थ ऽऊरुरवरम्बमाणः ।
शश्वती नार्यभिचक्ष्याह सुभद्रमर्य भोजनं बिभर्षि ॥३४॥ ( १६ ) [ ९९३ ]
अनु । अस्य । स्थूरम् । ददृशे । पुरस्तात् । अनस्थः ।
ऊरुः । अवऽरम्बमाणः ॥ शश्वती । नारी । अभिऽचक्ष्य ।
आह । सुऽभद्रम् । अर्य । भोजनम् । बिभर्षि ॥३४॥

# ( २ )

(४२) १-४० मेघातिथिः काण्वः, आङ्गिरसः प्रियमेधश्च, ४१-४२ मेघातिथिः काण्वः । इन्द्रः, ४१-४२ विभिन्दुः । गायत्री, २८ अनुष्टुप् ।

इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।
अनाभयिन्ररिमा ते ॥१॥

इदम् । वसो इति । सुतम् । अन्धः । पिब । सु०पूर्णम् । उदरम् ॥
अनाभयिन् । ररिम । ते ॥१॥

**नृभिर्धूतः सुतो ऽअश्नैरव्यो वारैः परिपूतः ।**
**अश्वो न निक्तो नदीषु ॥२॥**
नृ०भिः । धूतः । सुतः । अश्नैः । अव्यः । वारैः । परि०पूतः ॥
अश्वः । न । निक्तः । नदीषु ॥२॥

**तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः ।**
**इन्द्र त्वास्मिन्सधमादे ॥३॥**
तम् । ते । यवम् । यथा । गोभिः । स्वादुम् । अकर्म । श्रीणन्तः ॥
इन्द्र । त्वा । अस्मिन् । सध०मादे ॥३॥

**इन्द्र इत्सोमपा ऽएक ऽइन्द्रः सुतपा विश्वायुः ।**
**अन्तर्देवान्मर्त्यांश्च ॥४॥**
इन्द्र । इत् । सोम०पाः । एकः । इन्द्रः । सुत०पाः । विश्व०आयुः ॥
अन्तः । देवान् । मर्त्यान् । च ॥४॥

**न यं शुक्रो न दुराशीर्न तृप्रा ऽउरुव्यचसम् ।**
**अपस्पृण्वते सुहार्दम् ॥५॥ (१७)**
न । यम् । शुक्रः । न । दुः०आशीः । न । तृप्राः । उरु०व्यचसम् ॥
अप०स्पृण्वते । सु०हार्दम् ॥५॥

**गोभिर्यदीमन्ये ऽअस्मन्मृगं न व्रा मृगयन्ते ।**
**अभित्सरन्ति धेनुभिः ॥६॥**

गोभिः । यत् । ईम् । अन्ये । अस्मत् । मृगम् । न । व्राः । मृगयन्ते ॥
अभि०त्सरन्ति । धेनु०भिः ॥६॥

**त्रय ऽइन्द्रस्य सोमाः सुतासः सन्तु देवस्य ।**
**स्वे क्षये सुतपाव्नः ॥७॥**
त्रयः । इन्द्रस्य । सोमाः । सुतासः । सन्तु । देवस्य ॥
स्वे । क्षये । सुत०पाव्नः ॥७॥

**त्रयः कोशासः श्चोतन्ति तिस्रश्चम्वः सुपूर्णाः ।**
**समाने ऽअधि भार्मन् ॥८॥**
त्रयः । कोशासः । श्चोतन्ति । तिस्रः । चम्वः । सु०पूर्णाः ॥
समाने । अधि । भार्मन् ॥८॥

**शुचिरसि पुरुनिःष्ठाः क्षीरैर्मध्यत ऽआशीर्तः ।**
**दध्ना मन्दिष्ठः शूरस्य ॥९॥**
शुचिः । असि । पुरुनिःस्थाः । क्षीरैः । मध्यतः । आ०शीर्तः ।
दध्ना । मन्दिष्ठः । शूरस्य ॥९॥

**इमे त ऽइन्द्र सोमास्तीव्रा ऽअस्मे सुतासः ।**
**शुक्रा ऽआशिरं याचन्ते ॥१०॥ (१८)**
इमे । ते । इन्द्र । सोमाः । तीव्राः । अस्मे इति । सुतासः ॥
शुक्राः । आ०शिरम् । याचन्ते ॥१०॥

**ताँ ऽआशिरं पुरोळाशमिन्द्रेमं सोमं श्रीणीहि ।**
**रेवन्तं हि त्वा शृणोमि ॥११॥**

तान् । आ०शिरम् । पुरोळाशम् । इन्द्र । इमम् । सोमम् । श्रीणीहि ॥
रेवन्तम् । हि । त्वा । शृणोमि ॥११॥

**हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम् ।**
**ऊधर्न नग्ना जरन्ते ॥१२॥**
हृत्०सु । पीतासः । युध्यन्ते । दुः२मदासः । न । सुरायाम् ॥
ऊधः । न । नग्नाः । जरन्ते ॥१२॥

**रेवाँ ऽइद्रेवतः स्तोता स्यात्त्वावतो मघोनः ।**
**प्रेदु हरिवः श्रुतस्य ॥१३॥**
रेवान् । इत् । रेवतः । स्तोता । स्यात् । त्वा०वतः । मघोनः ॥
प्र । इत् । ऊँ इति । हरि०वः । श्रुतस्य ॥१३॥

**उक्थं चन शस्यमानमगोररिरा चिकेत ।**
**न गायत्रं गीयमानम् ॥१४॥**
उक्थम् । चन । शस्यमानम् । अगोः । अरिः । आ । चिकेत ॥
न । गायत्रम् । गीयमानम् ॥१४॥

**मा न ऽइन्द्र पीयत्नवे मा शर्द्धते परा दाः ।**
**शिक्षा शचीवः शचीभिः ॥१५॥ (१९)**
मा । नः । इन्द्र । पीयत्नवे । मा । शर्द्धते । परा । दाः ॥
शिक्ष । शची०वः । शचीभिः ॥१५॥

**वयमु त्वा तदिदर्था ऽइन्द्र त्वायन्तः सखायः ।**
**कण्वा ऽउक्थेभिर्जरन्ते ॥१६॥**

वयम् । ऊँ इति । त्वा । तदित्०अर्थाः । इन्द्र । त्वा०यन्तः । सखायः ॥
कण्वाः । उक्थेभिः । जरन्ते ॥१६॥

**न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ ।**
**तवेदु स्तोमं चिकेत ॥१७॥**
न । घ । ईम् । अन्यत् । आ । पपन । वज्रिन् । अपसः । नविष्टौ ॥
तव । इत् । ऊँ इति । स्तोमम् । चिकेत ॥१७॥

**इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।**
**यन्ति प्रमादमतन्द्राः ॥१८॥**
इच्छन्ति । देवाः । सुन्वन्तम् । न । स्वप्नाय । स्पृहयन्ति ॥
यन्ति । प्र०मादम् । अतन्द्राः ॥१८॥

**ओ षु प्र याहि वाजेभिर्मा हृणीथा ऽअभ्यस्मान् ।**
**महाँइव युवजानिः ॥१९॥**
ओ इति । सु । प्र । याहि । वाजेभिः । मा । हृणीथाः । अभि । अस्मान् ॥
महान्ऽइव । युव०जानिः ॥१९॥

**मो ष्वद्य दुर्हणावान्सायं करदारे ऽअस्मत् ।**
**अश्रीरइव जामाता ॥२०॥ ( २० )**
मो इति । सु । अद्य । दुःऽहनावान् । सायम् । करत् । आरे । अस्मत् ॥
अश्रीरःऽइव । जामाता ॥२०॥

**विद्मा ह्यस्य वीरस्य भूरिदावरीं सुमतिम् ।**
**त्रिषु जातस्य मनांसि ॥२१॥**

विद्म । हि । अस्य । वीरस्य । भूरि॰दावरीम् । सु॰मतिम् ॥
त्रिषु । जातस्य । मनांसि ॥२१॥

**आ तू षिञ्च कण्वमन्तं न घा विद्म शवसानात् ।**
**यशस्तरं शतमूतेः ॥२२॥**
आ । तु । सिञ्च । कण्व॰मन्तम् । न । घ । विद्म । शवसानात् ॥
यशः॰तरम् । शतम्॰ऊतेः ॥२२॥

**ज्येष्ठेन सोतरिन्द्राय सोमं वीराय शक्राय ।**
**भरा पिबन्नर्याय ॥२३॥**
ज्येष्ठेन । सोतः । इन्द्राय । सोमम् । वीराय । शक्राय ॥
भर । पिबत् । नर्याय ॥२३॥

**यो वेदिष्ठो ऽअव्यथिष्वश्वावन्तं जरितृभ्यः ।**
**वाजं स्तोतृभ्यो गोमन्तम् ॥२४॥**
यः । वेदिष्ठः । अव्यथिषु । अश्व॰वन्तम् । जरितृ॰भ्यः ॥
वाजम् । स्तोतृ॰भ्यः । गो॰मन्तम् ॥२४॥

**पन्यंपन्यमित्सोतार ऽआ धावत मद्याय ।**
**सोमं वीराय शूराय ॥२५॥ ( २१ )**
पन्यम्॰पन्यम् । इत् । सोतारः । आ । धावत । मद्याय ॥
सोमम् । वीराय । शूराय ॥२५॥

**पाता वृत्रहा सुतमा घा गमन्नारे ऽअस्मत् ।**
**नि यमते शतमूतिः ॥२६॥**

पाता । वृत्र॰हा । सुतम् । आ । घ । गमत् । न । आरे । अस्मत् ॥
नि । यमते । शतम्॰ऊतिः ॥२६॥

एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् ।
गीर्भिः श्रुतं गिर्वणसम् ॥२७॥
आ । इह । हरी इति । ब्रह्म॰युजा । शग्मा । वक्षतः । सखायम् ॥
गीः॰भिः । श्रुतम् । गिर्वणसम् ॥२७॥

स्वादवः सोमा ऽआ याहि श्रीताः सोमा ऽआ याहि ।
शिप्रिन्नृषीवः शचीवो नायमच्छा सधमादम् ॥२८॥
स्वादवः । सोमाः । आ । याहि । श्रीताः ।
सोमाः । आ । याहि ॥ शिप्रिन् । ऋषि॰वः ।
शची॰वः । न । अयम् । अच्छ । सध॰मादम् ॥२८॥

स्तुतश्च यास्त्वा वर्द्धन्ति महे राधसे नृम्णाय ।
इन्द्र कारिणं वृधन्तः ॥२९॥
स्तुतः । च । याः । त्वा । वर्द्धन्ति । महे । राधसे । नृम्णाय ॥
इन्द्र । कारिणम् । वृधन्तः ॥२९॥

गिरश्च यास्ते गिर्वाह ऽउक्था च तुभ्यं तानि ।
सत्रा दधिरे शवांसि ॥३०॥ ( २२ )
गिरः । च । याः । ते । गिर्वाहः । उक्था । च । तुभ्यम् । तानि ॥
सत्रा । दधिरे । शवांसि ॥३०॥

एवेदेष तुविकूर्मि वाजाँ ऽएको वज्रहस्तः ।
सनादमृक्तो दयते ॥३१॥

एव । इत् । एषः । तुवि॰कूर्मिः । वाजान् । एकः । वज्र॰हस्तः ॥
सनात् । अमृक्तः । दयते ॥३१॥

**हन्ता वृत्रं दक्षिणेनेन्द्रः पुरू पुरुहूतः ।**
**महान्महीभिः शचीभिः ॥३२॥**
हन्ता । वृत्रम् । दक्षिणेन । इन्द्रः । पुरु । पुरु॰हूतः ॥
महान् । महीभिः । शचीभिः ॥३२॥

**यस्मिन्विश्वाश्चर्षणय ऽउत च्यौत्ना ज्रयांसि च ।**
**अनु घेन्मन्दी मघोनः ॥३३॥**
यस्मिन् । विश्वाः । चर्षणयः । उत । च्यौत्ना । ज्रयांसि । च ॥
अनु । घ । इत् । मन्दी । मघोनः ॥३३॥

**एष ऽएतानि चकारेन्द्रो विश्वा योऽति शृण्वे ।**
**वाजदावा मघोनाम् ॥३४॥**
एषः । एतानि । चकार । इन्द्रः । विश्वा । यः । अति । शृण्वे ॥
वाज॰दावा । मघोनाम् ॥३४॥

**प्रभर्त्ता रथं गव्यन्तमपाकाच्चिद्यमवति ।**
**इनो वसु स हि वोळ्हा ॥३५॥ (२३)**
प्र॰भर्त्ता । रथम् । गव्यन्तम् । अपाकात् । चित् । यम् । अवति ॥
इनः । वसु । सः । हि । वोळ्हा ॥३५॥

**सनिता विप्रोऽअर्वद्भिर्हन्ता वृत्रं नृभिः शूरः ।**
**सत्योऽविता विधन्तम् ॥३६॥**

सनिता । विप्रः । अर्वत्०भिः । हन्ता । वृत्रम् । नृ०भिः । शूरः ॥
सत्यः । अविता । विधन्तम् ॥३६॥

**यजध्वैनं प्रियमेधा ऽइन्द्रं सत्राचा मनसा ।**
**यो भूत्सोमैः सत्यमद्वा ॥३७॥**
यजध्व । एनम् । प्रिय०मेधाः । इन्द्रम् । सत्राचा । मनसा ॥
यः । भूत् । सोमैः । सत्य०मद्वा ॥३७॥

**गाथश्रवसं सत्पतिं श्रवस्कामं पुरुत्मानम् ।**
**कण्वासो गात वाजिनम् ॥३८॥**
गाथ०श्रवसम् । सत्०पतिम् । श्रवः२कामम् । पुरु०त्मानम् ॥
कण्वासः । गात । वाजिनम् ॥३८॥

**य ऽऋते चिद्गास्पदेभ्यो दात्सखा नृभ्यः शचीवान् ।**
**ये ऽअस्मिन्काममश्रियन् ॥३९॥**
यः । ऋते । चित् । गाः । पदेभ्यः । दात् । सखा । नृ०भ्यः । शची०वान् ॥
ये । अस्मिन् । कामम् । अश्रियन् ॥३९॥

**इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् ।**
**मेषो भूतो३ऽभि यन्नयः ॥४०॥**
इत्था । धी०वन्तम् । अद्रि०वः । काण्वम् । मेध्य०अतिथिम् ॥
मेषः । भूतः । अभि । यन् । अयः ॥४०॥

**शिक्षा विभिन्दो ऽअस्मै चत्वार्ययुता ददत् ।**
**अष्टा परः सहस्रा ॥४१॥**

शिक्षं । विभिन्दो इति विऽभिन्दो । अस्मै । चत्वारि । अयुता । ददंत् ॥
अष्ट । परः । सहस्रा ॥४१॥

**उत सु त्ये पयोवृधा माकी रणस्य नप्त्या ।**
**जनित्वनाय मामहे ॥४२॥ ( २४ )** [ १०३५ ]
उत । सु । त्ये इति । पयःऽवृधा । माकी इति । रणस्य । नप्त्या ॥
जनिऽत्वनाय । ममहे ॥४२॥

# ( ३ )

**२४ मेध्यातिथिः काण्वः । इन्द्रः, २१-२४ कौरयाणः पाकस्थामा । प्रगाथः = ( विषमा बृहती, समा सतोबृहती), २१ अनुष्टुप्, २२-२३ गायत्री, २४ बृहती ।**

**पिबा सुतस्य रसिनो मत्स्वा न ऽइन्द्र गोमतः ।**
**आपिर्नो बोधि सधमाद्यो वृधेऽ३ऽस्माँ ऽअवन्तु ते धियः ॥१॥**
पिब । सुतस्य । रसिनः । मत्स्व । नः । इन्द्र । गोऽमतः ॥
आपिः । नः । बोधि । सधऽमाद्यः । वृधे । अस्मान् । अवन्तु । ते । धियः ॥१॥

**भूयाम ते सुमतौ वाजिनो वयं मा नः स्तरभिमातये ।**
**अस्माञ्चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥२॥**
भूयाम । ते । सुऽमतौ । वाजिनः । वयम् । मा । नः ।
स्तः । अभिऽमातये ॥ अस्मान् । चित्राभिः । अवतात् ।
अभिष्टिऽभिः । आ । नः । सुम्नेषु । यमय ॥२॥

**इमा उ त्वा पुरूवसो गिरो वर्द्धन्तु या मम ।**
**पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥३॥**
इमाः । ऊँ इति । त्वा । पुरुवसो इति पुरुऽवसो । गिरः । वर्द्धन्तु । याः । मम ॥
पावकऽवर्णाः । शुचयः । विपःऽचितः । अभि । स्तोमैः । अनूषत ॥३॥

अयं सहस्रमृषिभिः सहस्कृतः समुद्रइव पप्रथे ।
सत्यः सो ऽअस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥४॥
अयम् । सहस्रम् । ऋषिऽभिः । सहःऽकृतः । समुद्रःऽइव । पप्रथे ॥
सत्यः । सः । अस्य । महिमा । गृणे । शवः । यज्ञेषु । विप्रऽराज्ये ॥४॥

इन्द्रमिद्देवतातय ऽइन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह ऽइन्द्रं धनस्य सातये ॥५॥ ( २५ )
इन्द्रम् । इत् । देवऽतातये । इन्द्रम् । प्रऽयति । अध्वरे ॥
इन्द्रम् । सम्ऽईके । वनिनः । हवामहे । इन्द्रम् । धनस्य । सातये ॥५॥

इन्द्रो मह्ना रोदसी पप्रथच्छव ऽइन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर ऽइन्द्रे सुवानास ऽइन्दवः ॥६॥
इन्द्रः । मह्ना । रोदसी इति । पप्रथत् । शवः । इन्द्रः । सूर्यम् । अरोचयत् ॥
इन्द्रे । ह । विश्वा । भुवनानि । येमिरे । इन्द्रे । सुवानासः । इन्दवः ॥६॥

अभि त्वा पूर्वपीतय ऽइन्द्र स्तोमेभिरायवः ।
समीचीनास ऽऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥७॥
अभि । त्वा । पूर्वऽपीतये । इन्द्र । स्तोमेभिः । आयवः ॥
सम्ऽईचीनासः । ऋभवः । सम् । अस्वरन् । रुद्राः । गृणन्त । पूर्व्यम् ॥७॥

अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥८॥
अस्य । इत् । इन्द्रः । ववृधे । वृष्ण्यम् । शवः । मदे । सुतस्य । विष्णवि ॥
अद्य । तम् । अस्य । महिमानम् । आयवः । अनु । स्तुवन्ति । पूर्वऽथा ॥८॥

**तत्त्वा यामि सुवीर्यं तद् ब्रह्म पूर्वचित्तये ।**

**येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥९॥**

तत् । त्वा । यामि । सु॰वीर्यम् । तत् । ब्रह्म । पूर्व॰चित्तये ॥

येन । यति॰भ्यः । भृगवे । धने । हिते । येन । प्रस्कण्वम् । आविथ ॥९॥

**येना समुद्रमसृजो महीरपस्तदिन्द्र वृष्णि ते शवः ।**

**सद्यः सो ऽअस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ॥१०॥ ( २६ )**

येन । समुद्रम् । असृजः । महीः । अपः । तत् । इन्द्र ।

वृष्णि । ते । शवः ॥ सद्यः । सः । अस्य । महिमा ।

न । सम्॰नशे । यम् । क्षोणीः । अनु॰चक्रदे ॥१०॥

**शग्धी न ऽइन्द्र यत्त्वा रयिं यामि सुवीर्यम् ।**

**शग्धि वाजाय प्रथमं सिषासते शग्धि स्तोमाय पूर्व्य ॥११॥**

शग्धि । नः । इन्द्र । यत् । त्वा । रयिम् । यामि । सु॰वीर्यम् ॥

शग्धि । वाजाय । प्रथमम् । सिसासते । शग्धि । स्तोमाय । पूर्व्य ॥११॥

**शग्धी नो ऽअस्य यद्ध पौरमाविथ धिय ऽइन्द्र सिषासतः ।**

**शग्धि यथा रुशमं श्यावकं कृपमिन्द्र प्रावः स्वर्णरम् ॥१२॥**

शग्धि । नः । अस्य । यत् । ह । पौरम् । आविथ ।

धियः । इन्द्र । सिसासतः ॥ शग्धि । यथा । रुशमम् ।

श्यावकम् । कृपम् । इन्द्र । प्र । आवः । स्वः॰नरम् ॥१२॥

**कन्नव्यो ऽअतसीनां तुरो गृणीत मर्त्यः ।**

**नही न्वस्य महिमानमिन्द्रियं स्वर्गृणन्त ऽआनशुः ॥१३॥**

कत् । नव्यः । अतसीनाम् । तुरः । गृणीत । मर्त्यः ॥

नहि । नु । अस्य । महिमानम् । इन्द्रियम् । स्वः । गृणन्तः । आनशुः ॥१३॥

कदु स्तुवन्त ऽऋतयन्त देवत ऽऋषिः को विप्र ऽओहते ।
कदा हवं मघवन्निन्द्र सुन्वतः कदु स्तुवत ऽआ गमः ॥१४॥
कत् । ऊँ इति । स्तुवन्तः । ऋत॰यन्त । देवता । ऋषिः ।
कः । विप्रः । ओहते ॥ कदा । हवम् । मघवन् । इन्द्र ।
सुन्वतः । कत् । ऊँ इति । स्तुवतः । आ । गमः ॥१४॥

उदु त्ये मधुमत्तमा गिरः स्तोमास ऽईरते ।
सत्राजितो धनसा ऽअक्षितोतयो वाजयन्तो रथाइव ॥१५॥ (२७)
उत् । ऊँ इति । त्ये । मधुमत्॰तमाः । गिरः । स्तोमासः । ईरते ॥
सत्रा॰जितः । धन॰साः । अक्षित॰ऊतयः । वाजयन्तः । रथाःऽइव ॥१५॥

कण्वाइव भृगवः सूर्याइव विश्वमिद्धीतमानशुः ।
इन्द्रं स्तोमेभिर्महयन्त ऽआयवः प्रियमेधासो ऽअस्वरन् ॥१६॥
कण्वाःऽइव । भृगवः । सूर्याःऽइव । विश्वम् । इत् ।
धीतन् । आनशुः ॥ इन्द्रम् । स्तोमेभिः । महयन्तः ।
आयवः । प्रिय॰मेधासः । अस्वरन् ॥१६॥

युक्ष्वा हि वृत्रहन्तम हरी ऽइन्द्र परावतः ।
अर्वाचीनो मघवन्त्सोमपीतय ऽउग्र ऽऋष्वेभिरा गहि ॥१७॥
युक्ष्व । हि । वृत्रहन्॰तम । हरी इति । इन्द्र ।
परा॰वतः ॥ अर्वाचीनः । मघ॰वन् । सोम॰पीतये ।
उग्रः । ऋष्वेभिः । आ । गहि ॥१७॥

इमे हि ते कारवो वावशुर्धिया विप्रासो मेधसातये ।
स त्वं नो मघवन्निन्द्र गिर्वणो वेनो न शृणुधी हवम् ॥१८॥

इमे । हि । ते । कारवः । वावशुः । धिया । विप्रासः ।
मेध०सातये ॥ सः । त्वम् । नः । मघ०वन् । इन्द्र ।
गिर्वणः । वेनः । न । शृणुधि । हवम् ॥१८॥

**निरिन्द्र बृहतीभ्यो वृत्रं धनुभ्यो ऽअस्फुरः ।**
**निरर्बुदस्य मृगयस्य मायिनो निः पर्वतस्य गा ऽआजः ॥१९॥**
निः । इन्द्र । बृहतीभ्यः । वृत्रम् । धनु०भ्यः । अस्फुरः ॥
निः । अर्बुदस्य । मृगयस्य । मायिनः । निः । पर्वतस्य । गाः । आजः ॥१९॥

**निरग्नयो रुरुचुर्निरु सूर्यो निः सोम ऽइन्द्रियो रसः ।**
**निरन्तरिक्षादधमो महामहिं कृषे तदिन्द्र पौंस्यम् ॥२०॥ ( २८ )**
निः । अग्नयः । रुरुचुः । निः । ऊँ इति । सूर्यः । निः ।
सोमः । इन्द्रियः । रसः ॥ निः । अन्तरिक्षात् । अधमः ।
महाम् । अहिम् । कृषे । तत् । इन्द्र । पौंस्यम् ॥२०॥

**यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः ।**
**विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम् ॥२१॥**
यम् । मे । दुः । इन्द्रः । मरुतः । पाक०स्थामा । कौरयाणः ॥
विश्वेषाम् । त्मना । शोभिष्ठम् । उपऽइव । दिवि । धावमानम् ॥२१॥

**रोहितं मे पाकस्थामा सुधुरं कक्ष्यप्राम् ।**
**अदाद्रायो विबोधनम् ॥२२॥**
रोहितम् । मे । पाक०स्थामा । सु०धुरम् । कक्ष्य०प्राम् ॥
अदात् । रायः । वि०बोधनम् ॥२२॥

यस्मा ऽअन्ये दश प्रति धुरं वहन्ति वह्नयः ।
अस्तं वयो न तुग्र्यम् ॥२३॥
यस्मै । अन्ये । दश । प्रति । धुरम् । वहन्ति । वह्नयः ॥
अस्तम् । वयः । न । तुग्र्यम् ॥२३॥

आत्मा पितुस्तनूर्वास ऽओजोदा ऽअभ्यञ्जनम् ।
तुरीयमिद्रोहितस्य पाकस्थामानं भोजं दातारमब्रवम् ॥२४॥ ( २९ ) [ १०५९ ]
आत्मा । पितुः । तनूः । वासः । ओजःऽदाः । अभि॰अञ्जनम् ॥
तुरीयम् । इत् । रोहितस्य । पाक॰स्थामानम् । भोजम् । दातारम् । अब्रवम् ॥२४॥

# ( ४ )

२१ देवातिथिः काण्वः । इन्द्रः, १५-१८ पूषा वा, १९-२१ कुरुङ्गः ।
प्रगाथः = ( विषमा बृहती, समा सतोबृहती ), २१ पुरउष्णिक् ।

यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो ऽअस्यानवेऽसि प्रशर्द्ध तुर्वशे ॥१॥
यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृ॰भिः ॥
सिम । पुरु । नृ॰सूतः । असि । आनवे । असि । प्र॰शर्द्ध । तुर्वशे ॥१॥

यद्वा रुमे रुशमे श्यावके कृप ऽइन्द्र मादयसे सचा ।
कण्वासस्त्वा ब्रह्मभिः स्तोमवाहस ऽइन्द्रा यच्छन्त्या गहि ॥२॥
यत् । वा । रुमे । रुशमे । श्यावके । कृपे । इन्द्र ।
मादयसे । सचा ॥ कण्वासः । त्वा । ब्रह्म॰भिः ।
स्तोम॰वाहसः । इन्द्र । आ । यच्छन्ति । आ । गहि ॥२॥

यथा गौरो ऽअपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥३॥

यथा । गौरः । अपा । कृतम् । तृष्यन् । एति । अव ।
इरिणम् ॥ आ॰पित्वे । नः । प्र॰पित्वे । तूयम् ।
आ । गहि । कण्वेषु । सु । सचा । पिब ॥३॥

**मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते ।**
**आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥४॥**
मन्दन्तु । त्वा । मघ॰वन् । इन्द्र । इन्दवः ।
राधः॒ऽदेयाय । सुन्वते ॥ आ॰मुष्य । सोमम् । अपिबः ।
चमू इति । सुतम् । ज्येष्ठम् । तत् । दधिषे । सहः ॥४॥

**प्र चक्रे सहसा सहो बभञ्ज मन्युमोजसा ।**
**विश्वे त ऽइन्द्र पृतनायवो यहो नि वृक्षाइव येमिरे ॥५॥ ( ३० )**
प्र । चक्रे । सहसा । सहः । बभञ्ज । मन्युम् । ओजसा ॥
विश्वे । ते । इन्द्र । पृतना॰यवः । यहो इति । नि । वृक्षाःऽइव । येमिरे ॥५॥

**सहस्रेणेव सचते यवीयुधा यस्त ऽआनळुपस्तुतिम् ।**
**पुत्रं प्रावर्गं कृणुते सुवीर्ये दाश्नोति नमउक्तिभिः ॥६॥**
सहस्रेणऽइव । सचते । यवि॰युधा । यः । ते ।
आनट् । उप॰स्तुतिम् ॥ पुत्रम् । प्रावर्गम् । कृणुते ।
सु॰वीर्ये । दाश्नोति । नमउक्ति॰भिः ॥६॥

**मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।**
**महत्ते वृष्णो ऽअभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥७॥**
मा । भेम । मा । श्रमिष्म । उग्रस्य । सख्ये । तव ॥
महत् । ते । वृष्णः । अभि॰चक्ष्यम् । कृतम् । पश्येम । तुर्वशम् । यदुम् ॥७॥

सव्यामनु स्फिग्यं वावसे वृषा न दानो ऽअस्य रोषति ।
मध्वा सम्पृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥८॥
सव्याम् । अनु । स्फिग्यम् । ववसे । वृषा । न । दानः ।
अस्य । रोषति ॥ मध्वा । सम्ऽपृक्ताः । सारघेण ।
धेनवः । तूयम् । आ । इहि । द्रव । पिब ॥८॥

अश्वी रथी सुरूप ऽइद्गोमाँ ऽइदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा चन्द्रो याति सभामुप ॥९॥
अश्वी । रथी । सुऽरूपः । इत् । गोऽमान् । इत् ।
इन्द्र । ते । सखा ॥ श्वात्रऽभाजा । वयसा । सचते ।
सदा । चन्द्रः । याति । सभाम् । उप ॥९॥

ऋश्यो न तृष्यन्नवपानमा गहि पिबा सोमं वशाँ ऽअनु ।
निमेघमानो मघवन्दिवेदिव ऽओजिष्ठं दधिषे सहः ॥१०॥ ( ३१ )
ऋश्यः । न । तृष्यन् । अवऽपानम् । आ । गहि ।
पिब । सोमम् । वशान् । अनु ॥ निऽमेघमानः ।
मघऽवन् । दिवेऽदिवे । ओजिष्ठम् । दधिषे । सहः ॥१०॥

अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उप नूनं युयुजे वृषणा हरी ऽआ च जगाम वृत्रहा ॥११॥
अध्वर्यो इति । द्रवय । त्वम् । सोमम् । इन्द्रः । पिपासति ॥
उप । नूनम् । युयुजे । वृषणा । हरी इति । आ । च । जगाम । वृत्रऽहा ॥११॥

स्वयं चित्स मन्यते दाशुरिर्जनो यत्रा सोमस्य तृम्पसि ।
इदं ते ऽअन्नं युज्यं समुक्षितं तस्येहि प्र द्रवा पिब ॥१२॥

स्वयम् । चित् । सः । मन्यते । दाशुरिः । जनः । यत्र ।
सोमस्य । तृम्पसि ॥ इदम् । ते । अन्नम् । युज्यम् ।
सम्०उक्षितम् । तस्य । आ । इहि । प्र । द्रव । पिब ॥१२॥

**रथेष्ठायाध्वर्यवः सोममिन्द्राय सोतन ।**
**अधि ब्रध्नस्याद्रयो वि चक्षते सुन्वन्तो दाश्वध्वरम् ॥१३॥**
रथे०स्थाय । अध्वर्यवः । सोमम् । इन्द्राय । सोतन ॥
अधि । ब्रध्नस्य । अद्रयः । वि । चक्षते । सुन्वन्तः । दाशु०अध्वरम् ॥१३॥

**उप ब्रध्नं वावाता वृषणा हरी इन्द्रमपसु वक्षतः ।**
**अर्वाञ्चं त्वा सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ॥१४॥**
उप । ब्रध्नम् । ववाता । वृषणा । हरी इति । इन्द्रम् ।
अप०सु । वक्षतः ॥ अर्वाञ्चम् । त्वा । सप्तयः ।
अध्वर०श्रियः । वहन्तु । सवना । इत् । उप ॥१४॥

**प्र पूषणं वृणीमहे युज्याय पुरूवसुम् ।**
**स शक्र शिक्ष पुरुहूत नो धिया तुजे राये विमोचन ॥१५॥ (३२)**
प्र । पूषणम् । वृणीमहे । युज्याय । पुरु०वसुम् ॥
सः । शक्र । शिक्ष । पुरु०हूत । नः । धिया । तुजे । राये । वि०मोचन ॥१५॥

**सं नः शिशीहि भुरिजोरिव क्षुरं रास्व रायो विमोचन ।**
**त्वे तन्नः सुवेदमुस्रियं वसु यं त्वं हिनोषि मर्त्यम् ॥१६॥**
सम् । नः । शिशीहि । भुरिजोःऽइव । क्षुरम् । रास्व ।
रायः । वि०मोचन ॥ त्वे इति । तत् । नः । सु०वेदम् ।
उस्रियम् । वसु । यम् । त्वम् । हिनोषि । मर्त्यम् ॥१६॥

वेमि त्वा पूषन्नृञ्जसे वेमि स्तोतव ऽआघृणे ।
न तस्य वेम्यरणं हि तद्वसो स्तुषे पज्राय साम्ने॥१७॥
वेमि । त्वा । पूषन् । ऋञ्जसे । वेमि । स्तोतवे । आघृणे ॥
न । तस्य । वेमि । अरणम् । हि । तत् । वसो इति । स्तुषे । पज्राय । साम्ने॥१७॥

परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो ऽअमर्त्य ।
अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये॥१८॥
परा । गावः । यवसम् । कत् । चित् । आघृणे ।
नित्यम् । रेक्णः । अमर्त्य ॥ अस्माकम् । पूषन् ।
अविता । शिवः । भव । मंहिष्ठः । वाज०सातये॥१८॥

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।
राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि॥१९॥
स्थूरम् । राधः । शत०अश्वम् । कुरुङ्गस्य । दिविष्टिषु ॥
राज्ञः । त्वेषस्य । सु०भगस्य । रातिषु । तुर्वशेषु । अमन्महि॥१९॥

धीभिः सातानि काण्वस्य वाजिनः प्रियमेधैरभिद्युभिः ।
षष्टिं सहस्रानु निर्मजामजे निर्यूथानि गवामृषिः॥२०॥
धीभिः । सातानि । काण्वस्य । वाजिनः । प्रिय०मेधैः ।
अभिद्यु०भिः ॥ षष्टिम् । सहस्रा । अनु । निः२मजाम् ।
अजे । निः । यूथानि । गवाम् । ऋषिः॥२०॥

वृक्षाश्चिन्मे ऽअभिपित्वे ऽअरारणुः ।
गां भजन्त मेहनाश्वं भजन्त मेहना॥२१॥ ( ३३ ) [ १०८० ]
वृक्षाः । चित् । मे । अभि०पित्वे । अररणुः ॥
गाम् । भजन्त । मेहना । अश्वम् । भजन्त । मेहना॥२१॥
॥ इति पञ्चमाष्टके सप्तमोऽध्यायः ॥ ७ ॥

# सप्तमाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां पञ्चमाष्टके सप्तमोऽध्यायः ॥

( सप्तमाध्याये वर्गाः ३३, सूक्तानि ८, ऋचः १६५ + १ खिलम् = १६६ )

# ॥ पञ्चमाष्टकेऽष्टमोऽध्यायः॥

अथाऽष्टमोऽध्यायः॥८॥ वर्गाः १-३६ ] [ अष्टममण्डले सूक्तानि ५-११ ]

## ( ५ )

३९ ब्रह्मातिथिः काण्वः । अश्विनौ, ३७ ( उत्तरार्द्धस्य ), ३९ चैद्यः कशुः ।
गायत्री, ३७-३८ बृहती, ३९ अनुष्टुप् ।

दूरादिहेव यत्सत्यरुणप्सुरशिश्वितत् ।
वि भानुं विश्वधातनत् ॥१॥
दूरात् । इहऽइव । यत् । सती । अरुण०प्सुः । अशिश्वितत् ॥
वि । भानुम् । विश्वधा । अतनत् ॥१॥

नृवद्दस्रा मनोयुजा रथेन पृथुपाजसा ।
सचेथे ऽअश्विनोषसम्॥२॥
नृ०वत् । दस्रा । मनः०युजा । रथेन । पृथु०पाजसा ॥
सचेथे इति । अश्विना । उषसम् ॥२॥

युवाभ्यां वाजिनीवसू प्रति स्तोमा ऽअदृक्षत ।
वाचं दूतो यथोहिषे ॥३॥
युवाभ्याम् । वाजिनीवसू इति वाजिनी०वसू । प्रति । स्तोमाः । अदृक्षत ॥
वाचम् । दूतः । यथा । ओहिषे ॥३॥

पुरुप्रिया ण ऽऊतये पुरुमन्द्रा पुरूवसू ।
स्तुषे कण्वासो ऽअश्विना ॥४॥
पुरु०प्रिया । नः । ऊतये । पुरु०मन्द्रा । पुरुवसू इति पुरु०वसू ॥
स्तुषे । कण्वासः । अश्विना ॥४॥

**मंहिष्ठा वाजसातमेषयन्ता शुभस्पती ।**

**गन्तारा दाशुषो गृहम् ॥५॥ ( १ )**

मंहिष्ठा । वाजऽसातमा । इषयन्ता । शुभः । पती इति ॥

गन्तारा । दाशुषः । गृहम् ॥५॥

**ता सुदेवाय दाशुषे सुमेधामवितारिणीम् ।**

**घृतैर्गव्यूतिमुक्षतम् ॥६॥**

ता । सुऽदेवाय । दाशुषे । सुऽमेधाम् । अविऽतारिणीम् ॥

घृतैः । गव्यूतिम् । उक्षतम् ॥६॥

**आ नः स्तोममुप द्रवत्तूयं श्येनेभिराशुभिः ।**

**यातमश्वेभिरश्विना॥७॥**

आ । नः । स्तोमम् । उप । द्रवत् । तूयम् । श्येनेभिः । आशुऽभिः ॥

यातम् । अश्वेभिः । अश्विना ॥७॥

**येभिस्तिस्रः परावतो दिवो विश्वानि रोचना ।**

**त्रीरँक्तूर्न्परिदीयथः ॥८॥**

येभिः । तिस्रः । पराऽवतः । दिवः । विश्वानि । रोचना ।

त्रीन् । अक्तून् । परिऽदीयथः ॥८॥

**उत नो गोमतीरिष ऽउत सातीरहर्विदा ।**

**वि पथः सातये सितम् ॥९॥**

उत । नः । गोऽमती: । इषः । उत । सातीः । अहःऽविदा ॥

वि । पथः । सातये । सितम् ॥९॥

आ नो गोमन्तमश्विना सुवीरं सुरथं रयिम् ।
वोळ्हमश्वावतीरिषः ॥१०॥ (२)
आ । नः । गो॰मन्तम् । अश्विना । सु॰वीरम् । सु॰रथम् । रयिम् ॥
वोळ्हम् । अश्व॰वतीः । इषः ॥१०॥

वावृधाना शुभस्पती दस्रा हिरण्यवर्त्तनी ।
पिबतं सोम्यं मधु ॥११॥
वावृधाना । शुभः । पती इति । दस्रा । हिरण्यवर्त्तनी इति हिरण्य॰वर्त्तनी ॥
पिबतम् । सोम्यम् । मधु ॥११॥

अस्मभ्यं वाजिनीवसू मघवद्भ्यश्च सप्रथः ।
छर्दिर्यन्तमदाभ्यम् ॥१२॥
अस्मभ्यम् । वाजिनीवसू इति वाजिनी॰वसू । मघवत्॰भ्यः । च । स॰प्रथः ॥
छर्दिः । यन्तम् । अदाभ्यम् ॥१२॥

नि षु ब्रह्म जनानां याविष्टं तूयमा गतम् ।
मो ष्वन्याँ ऽउपारतम् ॥१३॥
नि । सु । ब्रह्म । जनानाम् । या । अविष्टम् । तूयम् । आ । गतम् ॥
मो इति । सु । अन्यान् । उप । अरतम् ॥१३॥

अस्य पिबतमश्विना युवं मदस्य चारुणः ।
मध्वो रातस्य धिष्ण्या ॥१४॥
अस्य । पिबतम् । अश्विना । युवम् । मदस्य । चारुणः ॥
मध्वः । रातस्य । धिष्ण्या ॥१४॥

**अस्मे ऽआ वहतं रयिं शतवन्तं सहस्रिणम् ।**

**पुरुक्षुं विश्वधायसम् ॥१५॥ (३)**

अस्मे इति । आ । वहतम् । रयिम् । शत०वन्तम् । सहस्रिणम् ॥

पुरु०क्षुम् । विश्व०धायसम् ॥१५॥

**पुरुत्रा चिद्धि वां नरा विह्वयन्ते मनीषिणः ।**

**वाघद्भिरश्विना गतम् ॥१६॥**

पुरु०त्रा । चित् । हि । वाम् । नरा । वि०ह्वयन्ते । मनीषिणः ॥

वाघत्०भिः । अश्विना । आ । गतम् ॥१६॥

**जनासो वृक्तबर्हिषो हविष्मन्तो ऽअरंकृतः ।**

**युवां हवन्ते ऽअश्विना ॥१७॥**

जनासः । वृक्त०बर्हिषः । हविष्मन्तः । अरम्०कृतः ॥

युवाम् । हवन्ते । अश्विना ॥१७॥

**अस्माकमद्य वामयं स्तोमो वाहिष्ठो ऽअन्तमः ।**

**युवाभ्यां भूत्वश्विना ॥१८॥**

अस्माकम् । अद्य । वाम् । अयम् । स्तोमः । वाहिष्ठः । अन्तमः ॥

युवाभ्याम् । भूतु । अश्विना ॥१८॥

**यो ह वां मधुनो दृतिराहितो रथचर्षणे ।**

**ततः पिबतमश्विना ॥१९॥**

यः । ह । वाम् । मधुनः । दृतिः । आ०हितः । रथ०चर्षणे ॥

ततः । पिबतम् । अश्विना ॥१९॥

**तेन॑ नो वाजिनीवसू पश्वे॑ तो॒काय॒ शं गवे॑ ।**

**वह॑तं॒ पीव॑री॒रिषः॑ ॥२०॥ (४)**

तेन॑ । न॒ः । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनी०वसू । पश्वे॑ । तो॒काय॑ । शम् । गवे॑ ॥

वह॑तम् । पीव॑रीः । इषः॑ ॥२०॥

**उ॒त नो॑ दि॒व्या ऽइष॑ ऽउ॒त सिन्धूँ॑रहर्विदा ।**

**अप॑ द्वारे॑व वर्षथः ॥२१॥**

उ॒त । न॒ः । दि॒व्याः । इषः॑ । उ॒त । सिन्धू॑न् । अ॒ह॒ः॒ऽवि॒दा॒ ॥

अप॑ । द्वारा॑ऽइव । व॒र्ष॒थ॒ः ॥२१॥

**क॒दा वां॑ तौ॒ग्र्यो वि॑धत्समु॒द्रे ज॑हि॒तो न॑रा ।**

**यद्वां॒ रथो॒ विभि॒ष्पता॑त् ॥२२॥**

क॒दा । वा॒म् । तौ॒ग्र्यः । वि॒ध॒त् । स॒मु॒द्रे । ज॒हि॒तः । न॒रा॒ ॥

यत् । वा॒म् । रथ॑ः । वि०भिः॑ । पता॑त् ॥२२॥

**युवं॑ कण्वा॑य नासत्या॒पि॑रिप्ताय ह॒र्म्ये॑ ।**

**शश्व॑दू॒तीर्द॑शस्यथः ॥२३॥**

युव॑म् । कण्वा॑य । ना॒स॒त्या॒ । अपि॑०रिप्ताय । ह॒र्म्ये॑ ॥

शश्व॑त् । ऊ॒तीः । द॒श॒स्य॒थ॒ः ॥२३॥

**ताभि॒रा या॑तमू॒तिभि॒र्नव्य॑सीभिः सुश॒स्तिभिः॑ ।**

**यद्वां॑ वृषण्वसू हु॒वे ॥२४॥**

ताभिः॑ । आ । या॒त॒म् । ऊ॒ति०भिः॑ । नव्य॑सीभिः । सु॒श॒स्ति०भिः॑ ॥

यत् । वा॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्०वसू । हु॒वे ॥२४॥

**यथा चित्कण्वमावतं प्रियमेधमुपस्तुतम् ।**

**अत्रिं शिञ्जारमश्विना ॥२५॥ (५)**

यथा । चित् । कण्वम् । आवतम् । प्रियऽमेधम् । उपऽस्तुतम् ॥

अत्रिम् । शिञ्जारम् । अश्विना ॥२५॥

**यथोत कृत्व्ये धनेऽशुं गोष्वगस्त्यम् ।**

**यथा वाजेषु सोभरिम् ॥२६॥**

यथा । उत । कृत्व्ये । धने । अंशुम् । गोषु । अगस्त्यम् ॥

यथा । वाजेषु । सोभरिम् ॥२६॥

**एतावद्वां वृषण्वसू ऽअतो वा भूयो ऽअश्विना ।**

**गृणन्तः सुम्नमीमहे ॥२७॥**

एतावत् । वाम् । वृषण्वसू इति वृषण्ऽवसू । अतः । वा । भूयः । अश्विना ॥

गृणन्तः । सुम्नम् । ईमहे ॥२७॥

**रथं हिरण्यवन्धुरं हिरण्याभीशुमश्विना ।**

**आ हि स्थाथो दिविस्पृशम् ॥२८॥**

रथम् । हिरण्यऽवन्धुरम् । हिरण्यऽअभीशुम् । अश्विना ॥

आ । हि । स्थाथः । दिविऽस्पृशम् ॥२८॥

**हिरण्ययी वां रभिरीषा ऽअक्षो हिरण्ययः ।**

**उभा चक्रा हिरण्यया ॥२९॥**

हिरण्ययीम् । वाम् । रभिः । ईषा । अक्षः । हिरण्ययः ॥

उभा । चक्रा । हिरण्यया ॥२९॥

**तेन नो वाजिनीवसू परावतश्चिदा गतम् ।**

**उपेमां सुष्टुतिं मम ॥३०॥ ( ६ )**

तेन । नः । वाजिनीवसू इति वाजिनी०वसू । परा०वतः । चित् । आ । गतम् ॥

उप । इमाम् । सु०स्तुतिम् । मम ॥३०॥

**आ वहेथे पराकात्पूर्वीरश्नन्तावश्विना ।**

**इषो दासीरमर्त्त्या ॥३१॥**

आ । वहेथे इति । पराकात् । पूर्वीः । अश्नन्तौ । अश्विना ॥

इषः । दासीः । अमर्त्त्या ॥३१॥

**आ नो द्युम्नैरा श्रवोभिरा राया यातमश्विना ।**

**पुरुश्चन्द्रा नासत्या ॥३२॥**

आ । नः । द्युम्नैः । आ । श्रवः२भिः । आ । राया । यातम् । अश्विना ॥

पुरु०चन्द्रा । नासत्या ॥३२॥

**एह वां प्रुषितप्सवो वयो वहन्तु पर्णिनः ।**

**अच्छा स्वध्वरं जनम् ॥३३॥**

आ । इह । वाम् । प्रुषित०प्सवः । वयः । वहन्तु । पर्णिनः ॥

अच्छ । सु०अध्वरम् । जनम् ॥३३॥

**रथं वामनुगायसं य ऽइषा वर्त्तते सह ।**

**न चक्रमभि बाधते ॥३४॥**

रथम् । वाम् । अनु०गायसम् । य । इषा । वर्त्तते । सह ॥

न । चक्रम् । अभि । बाधते ॥३४॥

हिरण्ययेन रथेन द्रवत्पाणिभिरश्वैः ।
धीजवना नासत्या ॥३५॥ (७)
हिरण्ययेन । रथेन । द्रवत्पाणि०भिः । अश्वैः ॥
धी०जवना । नासत्या ॥३५॥

युवं मृगं जागृवांसं स्वदथो वा वृषण्वसू ।
ता नः पृङ्क्तमिषा रयिम् ॥३६॥
युवम् । मृगम् । जागृ०वांसम् । स्वदथः । वा । वृषण्वसू इति वृषण्०वसू ॥
ता । नः । पृङ्क्तम् । इषा । रयिम् ॥३६॥

ता मे ऽअश्विना सनीनां विद्यातं नवानाम् ।
यथा चिच्चैद्यः कशुः शतमुष्ट्रानां ददत्सहस्रा दश गोनाम् ॥३७॥
ता । मे । अश्विना । सनीनाम् । विद्यातम् । नवानाम् ॥
यथा । चित् । चैद्यः । कशुः । शतम् ।
उष्ट्रानाम् । ददत् । सहस्रा । दश । गोनाम् ॥३७॥

यो मे हिरण्यसंदृशो दश राज्ञो ऽअमंहत ।
अधस्पदा ऽइच्चैद्यस्य कृष्टयश्चर्मम्ना ऽअभितो जनाः ॥३८॥
यः । मे । हिरण्य०सन्दृशः । दश । राज्ञः । अमंहत ॥
अधःऽपदाः । इत् । चैद्यस्य । कृष्टयः । चर्म०म्नाः । अभितः । जनाः ॥३८॥

माकिरेना पथा गाद्येनेमे यन्ति चेदयः ।
अन्यो नेत्सूरिरोहते भूरिदावत्तरो जनः ॥३९॥ (८) [ १११९ ]
माकिः । एना । पथा । गात् । येन । इमे । यन्ति । चेदयः ॥
अन्यः । न । इत् । सूरिः । ओहते । भूरिदावत्०तरः । जनः ॥३९॥

# ( ६ ) [ अथ द्वितीयोऽनुवाकः ॥२॥ सूक्तानि ६-१२

४८ वत्सः काण्वः । इन्द्रः, ४६-४८ तिरिन्दिरः पार्शव्यः । गायत्री ।

**महाँ ऽइन्द्रो य ऽओजसा पर्जन्यो वृष्टिमाँइव ।**
**स्तोमैर्वत्सस्य वावृधे ॥१॥**
महान् । इन्द्रः । यः । ओजसा । पर्जन्यः । वृष्टिमान्ऽइव ॥
स्तोमैः । वत्सस्य । ववृधे ॥१॥

**प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।**
**विप्रा ऽऋतस्य वाहसा ॥२॥**
प्र०जाम् । ऋतस्य । पिप्रतः । प्र । यत् । भरन्त । वह्नयः ॥
विप्राः । ऋतस्य । वाहसा ॥२॥

**कण्वा ऽइन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् ।**
**जामि ब्रुवत ऽआयुधम् ॥३॥**
कण्वाः । इन्द्रम् । यत् । अक्रत । स्तोमैः । यज्ञस्य । साधनम् ॥
जामि । ब्रुवते । आयुधम् ॥३॥

**समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।**
**समुद्रायेव सिन्धवः ॥४॥**
सम् । अस्य । मन्यवे । विशः । विश्वाः । नमन्त । कृष्टयः ॥
समुद्रायऽइव । सिन्धवः ॥४॥

**ओजस्तदस्य तित्विष ऽउभे यत्समवर्त्तयत् ।**
**इन्द्रश्चर्मेव रोदसी ॥५॥ ( ९ )**

ओजः । तत् । अस्य । तित्विषे । उभे इति । यत् । सम्०अवर्त्तयत् ॥
इन्द्रः । चर्मऽइव । रोदसी इति ॥५॥

**वि चिद्वृत्रस्य दोधतो वज्रेण शतपर्वणा ।**
**शिरो बिभेद वृष्णिना ॥६॥**
वि । चित् । वृत्रस्य । दोधतः । वज्रेण । शत०पर्वणा ।
शिरः । बिभेद । वृष्णिना ॥६॥

**इमा ऽअभि प्र णोनुमो विपामग्रेषु धीतयः ।**
**अग्नेः शोचिर्न दिद्युतः ॥७॥**
इमाः । अभि । प्र । नोनुमः । विपाम् । अग्रेषु । धीतयः ॥
अग्नेः । शोचिः । न । दिद्युतः ॥७॥

**गुहा सतीरुप त्मना प्र यच्छोचन्त धीतयः ।**
**कण्वा ऽऋतस्य धारया ॥८॥**
गुहा । सतीः । उप । त्मना । प्र । यत् । शोचन्त । धीतयः ॥
कण्वाः । ऋतस्य । धारया ॥८॥

**प्र तमिन्द्र नशीमहि रयिं गोमन्तमश्विनम् ।**
**प्र ब्रह्म पूर्वचित्तये ॥९॥**
प्र । तम् । इन्द्र । नशीमहि । रयिम् । गो०मन्तम् । अश्विनम् ॥
प्र । ब्रह्म । पूर्व०चित्तये ॥९॥

**अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ ।**
**अहं सूर्यइवाजनि ॥१०॥ (१०)**

अहम् । इत् । हि । पितुः । परि । मेधाम् । ऋतस्य । जग्रभ ॥
अहम् । सूर्यःऽइव । अजनि ॥१०॥

अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत् ।
येनेन्द्रः शुष्ममिद्दधे ॥११॥
अहम् । प्रत्नेन । मन्मना । गिरः । शुम्भामि । कण्व०वत् ॥
येन । इन्द्रः । शुष्मम् । इत् । दधे ॥११॥

ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः ।
ममेद्वर्द्धस्व सुष्टुतः ॥१२॥
ये । त्वाम् । इन्द्र । न । तुस्तुवुः । ऋषयः । ये । च । तुस्तुवुः ॥
मम । इत् । वर्द्धस्व । सु०स्तुतः ॥१२॥

यदस्य मन्युरध्वनीद्वि वृत्रं पर्वशो रुजन् ।
अपः समुद्रमैरयत् ॥१३॥
यत् । अस्य । मन्युः । अध्वनीत् । वि । वृत्रम् । पर्व०शः । रुजन् ॥
अपः । समुद्रम् । ऐरयत् ॥१३॥

नि शुष्ण ऽइन्द्र धर्णसिं वज्रं जघन्थ दस्यवि ।
वृषा ह्युग्र शृण्विषे ॥१४॥
नि । शुष्णे । इन्द्र । धर्णसिम् । वज्रम् । जघन्थ । दस्यवि ॥
वृषा । हि । उग्र । शृण्विषे ॥१४॥

न द्याव ऽइन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् ।
न विव्यचन्त भूमयः ॥१५॥ (११)

न । द्यावः । इन्द्रम् । ओजसा । न । अन्तरिक्षाणि । वज्रिणम् ॥
न । विव्यचन्त । भूमयः ॥१५॥

**यस्त इन्द्र महीरपः स्तभूयमान आशयत् ।**
**नि तं पद्यासु शिश्नथः ॥१६॥**
यः । ते । इन्द्र । महीः । अपः । स्तभु०यमानः । आ । अशयत् ॥
नि । तम् । पद्यासु । शिश्नथः ॥१६॥

**य इमे रोदसी मही समीची समजग्रभीत् ।**
**तमोभिरिन्द्र तं गुहः ॥१७॥**
यः । इमे इति । रोदसी इति । मही इति । समीची इति सम्०ईची । सम्०अजग्रभीत् ॥
तमः२भिः । इन्द्र । तम् । गुहः ॥१७॥

**य इन्द्र यतयस्त्वा भृगवो ये च तुष्टुवुः ।**
**ममेदुग्र श्रुधी हवम् ॥१८॥**
ये । इन्द्र । यतयः । त्वा । भृगवः । ये । च । तुस्तुवुः ॥
मम । इत् । उग्र । श्रुधि । हवम् ॥१८॥

**इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् ।**
**एनामृतस्य पिप्युषीः ॥१९॥**
इमाः । ते । इन्द्र । पृश्नयः । घृतम् । दुहते । आ०शिरम् ॥
एनाम् । ऋतस्य । पिप्युषीः ॥१९॥

**या इन्द्र प्रस्वस्त्वासा गर्भमचक्रिरन् ।**
**परि धर्मेव सूर्यम् ॥२०॥ ( १२ )**

याः । इन्द्र । प्र॰स्वः । त्वा । आसा । गर्भम् । अचक्रिरन् ॥
परि । धर्मऽइव । सूर्यम् ॥२०॥

**त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः ।**
**त्वां सुतास इन्दवः ॥२१॥**
त्वाम् । इत् । शवसः । पते । कण्वाः । उक्थेन । ववृधुः ॥
त्वाम् । सुतासः । इन्दवः ॥२१॥

**तवेदिन्द्र प्रणीतिषूत प्रशस्तिरद्रिवः ।**
**यज्ञो वितन्तसाय्यः ॥२२॥**
तव । इत् । इन्द्र । प्र॰नीतिषु । उत । प्र॰शस्तिः । अद्रि॰वः ॥
यज्ञः । वितन्तसाय्यः ॥२२॥

**आ न इन्द्र महीमिषं पुरं न दर्षि गोमतीम् ।**
**उत प्रजां सुवीर्यम् ॥२३॥**
आ । नः । इन्द्र । महीम् । इषम् । पुरम् । न । दर्षि । गो॰मतीम् ॥
उत । प्र॰जाम् । सु॰वीर्यम् ॥२३॥

**उत त्यदाश्वश्व्यं यदिन्द्र नाहुषीष्वा ।**
**अग्रे विक्षु प्रदीदयत् ॥२४॥**
उत । त्यत् । आशु॰अश्व्यम् । यत् । इन्द्र । नाहुषीषु । आ ॥
अग्रे । विक्षु । प्र॰दीदयत् ॥२४॥

**अभि व्रजं न तत्निषे सूर उपाकचक्षसम् ।**
**यदिन्द्र मृळयासि नः ॥२५॥ ( १३ )**

अभि । व्रजम् । न । तत्निषे । सूरः । उपाक०चक्षसम् ॥
यत् । इन्द्र । मृळयासि । नः ॥२५॥

**यदङ्ग तविषीयस इन्द्र प्रराजसि क्षितीः ।**
**महाँ अपार ओजसा ॥२६॥**
यत् । अङ्ग । तविषी०यसे । इन्द्र । प्र०राजसि । क्षितीः ॥
महान् । अपारः । ओजसा ॥२६॥

**तं त्वा हविष्मतीर्विश उप ब्रुवत ऊतये ।**
**उरुज्रयसमिन्दुभिः ॥२७॥**
तम् । त्वा । हविष्मतीः । विशः । उप । ब्रुवते । ऊतये ॥
उरु०ज्रयसम् । इन्दु०भिः ॥२७॥

**उपह्वरे गिरीणां संगथे च नदीनाम् ।**
**धिया विप्रो अजायत ॥२८॥**
उप०ह्वरे । गिरीणाम् । सम्०गथे । च । नदीनाम् ॥
धिया । विप्रः । अजायत ॥२८॥

**अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति ।**
**यतो विपान एजति ॥२९॥**
अतः । समुद्रम् । उत्०वतः । चिकित्वान् । अव । पश्यति ॥
यतः । विपानः । एजति ॥२९॥

**आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।**
**परो यदिध्यते दिवा ॥३०॥ (१४)**

आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यन्ति । वासरम् ॥
परः । यत् । इध्यते । दिवा ॥३०॥

**कण्वास ऽइन्द्र ते मतिं विश्वे वर्द्धन्ति पौंस्यम् ।**
**उतो शविष्ठ वृष्ण्यम् ॥३१॥**
कण्वासः । इन्द्र । ते । मतिम् । विश्वे । वर्द्धन्ति । पौंस्यम् ॥
उतो इति । शविष्ठ । वृष्ण्यम् ॥३१॥

**इमां म ऽइन्द्र सुष्टुतिं जुषस्व प्र सु मामव ।**
**उत प्र वर्द्धया मतिम् ॥३२॥**
इमाम् । मे । इन्द्र । सु०स्तुतिम् । जुषस्व । प्र । सु । माम् । अव ॥
उत । प्र । वर्द्धय । मतिम् ॥३२॥

**उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः ।**
**विप्रा ऽअतक्ष्म जीवसे ॥३३॥**
उत । ब्रह्मण्या । वयम् । तुभ्यम् । प्र०वृद्ध । वज्रि०वः ॥
विप्राः । अतक्ष्म । जीवसे ॥३३॥

**अभि कण्वा ऽअनूषतापो न प्रवता यतीः ।**
**इन्द्रं वनन्वती मतिः ॥३४॥**
अभि । कण्वाः । अनूषत । आपः । न । प्र०वता । यतीः ॥
इन्द्रम् । वनन्०वती । मतिः ॥३४॥

**इन्द्रमुक्थानि वावृधुः समुद्रमिव सिन्धवः ।**
**अनुत्तमन्युमजरम् ॥३५॥ ( १५ )**

इन्द्रम् । उक्थानि । ववृधुः । समुद्रम्ऽइव । सिन्धवः ॥
अनुत्त०मन्युम् । अजरम् ॥३५॥

**आ नो याहि परावतो हरिभ्यां हर्यताभ्याम् ।**
**इममिन्द्र सुतं पिब ॥३६॥**
आ । नः । याहि । परा०वतः । हरि०भ्याम् । हर्यताभ्याम् ॥
इमम् । इन्द्र । सुतम् । पिब ॥३६॥

**त्वामिद्वृत्रहन्तम जनासो वृक्तबर्हिषः ।**
**हवन्ते वाजसातये ॥३७॥**
त्वाम् । इत् । वृत्रहन्०तम । जनासः । वृक्त०बर्हिषः ॥
हवन्ते । वाज०सातये ॥३७॥

**अनु त्वा रोदसी ऽउभे चक्रं न वर्त्येतशम् ।**
**अनु सुवानास ऽइन्दवः ॥३८॥**
अनु । त्वा । रोदसी इति । उभे इति । चक्रम् । न । वर्ति । एतशम् ॥
अनु । सुवानासः । इन्दवः ॥३८॥

**मन्दस्वा सु स्वर्णर ऽउतेन्द्र शर्यणावति ।**
**मत्स्वा विवस्वतो मती ॥३९॥**
मन्दस्व । सु । स्वः२नरे । उत । इन्द्र । शर्यणा०वति ॥
मत्स्व । विवस्वतः । मती ॥३९॥

**वावृधान ऽउप द्यवि वृषा वज्र्यरोरवीत् ।**
**वृत्रहा सोमपातमः ॥४०॥ (१६)**

ववृधानः । उप । द्यवि । वृषा । वज्री । अरोरवीत् ॥
वृत्र०हा । सोम०पातमः ॥४०॥

ऋषिर्हि पूर्वजा ऽअस्येक ऽईशान ऽओजसा ।
इन्द्र चोष्कूयसे वसु ॥४१॥
ऋषिः । हि । पूर्व०जाः । असि । एकः । ईशानः । ओजसा ॥
इन्द्र । चोष्कूयसे । वसु ॥४१॥

अस्माकं त्वा सुताँ ऽउप वीतपृष्ठा ऽअभि प्रयः ।
शतं वहन्तु हरयः ॥४२॥
अस्माकम् । त्वा । सुतान् । उप । वीत०पृष्ठाः । अभि । प्रयः ॥
शतम् । वहन्तु । हरयः ॥४२॥

इमां सु पूर्व्यां धियं मधोर्घृतस्य पिप्युषीम् ।
कण्वा ऽउक्थेन वावृधुः ॥४३॥
इमाम् । सु । पूर्व्याम् । धियम् । मधोः । घृतस्य । पिप्युषीम् ॥
कण्वाः । उक्थेन । ववृधुः ॥४३॥

इन्द्रमिद्विमहीनां मेधे वृणीत मर्त्यः ।
इन्द्रं सनिष्युरूतये ॥४४॥
इन्द्रम् । इत् । वि०महीनाम् । मेधे । वृणीत । मर्त्यः ।
इन्द्रम् । सनिष्युः । ऊतये ॥४४॥

अर्वाञ्चं त्वा पुरुष्टुत प्रियमेधस्तुता हरी ।
सोमपेयाय वक्षतः ॥४५॥

अर्वाञ्चम् । त्वा । पुरु०स्तुत । प्रियमेध०स्तुता । हरी इति ॥
सोम०पेयाय । वक्षतः ॥४५॥

**शतमहं तिरिन्दिरे सहस्रं पर्शावा ददे ।**
**राधांसि याद्वानाम् ॥४६॥**
शतम् । अहम् । तिरिन्दिरे । सहस्रम् । पर्शौ । आ । ददे ॥
राधांसि । याद्वानाम् ॥४६॥

**त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ।**
**ददुष्पज्राय साम्ने ॥४७॥**
त्रीणि । शतानि । अर्वताम् । सहस्रा । दश । गोनाम् ॥
ददुः । पज्राय । साम्ने ॥४७॥

**उदानट् ककुहो दिवमुष्ट्राञ्चतुर्युजो ददत् ।**
**श्रवसा याद्वं जनम् ॥४८॥ (१७)** [ ११६७ ]
उत् । आनट् । ककुहः । दिवम् । उष्ट्रान् । चतुः२युजः । ददत् ॥
श्रवसा । याद्वम् । जनम् ॥४८॥

# ( ७ )

**३६ पुनर्वसः काण्वः । मरुतः । गायत्री ।**

**प्र यद्वस्त्रिष्टुभमिषं मरुतो विप्रो ऽअक्षरत् ।**
**वि पर्वतेषु राजथ ॥१॥**
प्र । यत् । वः । त्रि०स्तुभम् । इषम् । मरुतः । विप्रः । अक्षरत् ॥
वि । पर्वतेषु । राजथ ॥१॥

**यदङ्ग तविषीयवो यामं शुभ्रा ऽअचिध्वम् ।**
**नि पर्वता ऽअहासत ॥२॥**
यत् । अङ्ग । तविषी०यवः । यामम् । शुभ्राः । अचिध्वम् ॥
नि । पर्वताः । अहासत ॥२॥

**उदीरयन्त वायुभिर्वाश्रासः पृश्निमातरः ।**
**धुक्षन्त पिप्युषीमिषम् ॥३॥**
उत् । ईरयन्त । वायु०भिः । वाश्रासः । पृश्नि०मातरः ॥
धुक्षन्त । पिप्युषीम् । इषम् ॥३॥

**वपन्ति मरुतो मिहं प्र वेपयन्ति पर्वतान् ।**
**यद्यामं यान्ति वायुभिः ॥४॥**
वपन्ति । मरुतः । मिहम् । प्र । वेपयन्ति । पर्वतान् ॥
यत् । यामम् । यान्ति । वायु०भिः ॥४॥

**नि यद्यामाय वो गिरिर्नि सिन्धवो विधर्मणे ।**
**महे शुष्माय येमिरे ॥५॥ (१८)**
नि । यत् । यामाय । वः । गिरिः । नि । सिन्धवः । वि०धर्मणे ।
महे । शुष्माय । येमिरे ॥५॥

**युष्माँ ऽउ नक्तमूतये युष्मान्दिवा हवामहे ।**
**युष्मान्प्रयत्यध्वरे ॥६॥**
युष्मान् । ऊँ इति । नक्तम् । ऊतये । युष्मान् । दिवा । हवामहे ॥
युष्मान् । प्र०यति । अध्वरे ॥६॥

**उदु त्ये ऽअरुणप्स्वश्चित्रा यामेभिरीरते ।**
**वाश्रा ऽअधि ष्णुना दिवः ॥७॥**
उत् । ऊँ इति । त्ये । अरुण०प्स्वः । चित्राः । यामेभिः । ईरते ॥
वाश्राः । अधि । स्नुना । दिवः ॥७॥

**सृजन्ति रश्मिमोजसा पन्थां सूर्याय यातवे ।**
**ते भानुभिर्वि तस्थिरे ॥८॥**
सृजन्ति । रश्मिम् । ओजसा । पन्थाम् । सूर्याय । यातवे ॥
ते । भानु०भिः । वि । तस्थिरे ॥८॥

**इमां मे मरुतो गिरमिमं स्तोममृभुक्षणः ।**
**इमं मे वनता हवम् ॥९॥**
इमाम् । मे । मरुतः । गिरम् । इमम् । स्तोमम् । ऋभुक्षणः ॥
इमम् । मे । वनत । हवम् ॥९॥

**त्रीणि सरांसि पृश्नयो दुदुह्रे वज्रिणे मधु ।**
**उत्सं कवन्धमुद्रिणम् ॥१०॥ ( १९ )**
त्रीणि । सरांसि । पृश्नयः । दुदुह्रे । वज्रिणे । मधु ॥
उत्सम् । कवन्धम् । उद्रिणम् ॥१०॥

**मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे ।**
**आ तू न ऽउप गन्तन ॥११॥**
मरुतः । यत् । ह । वः । दिवः । सुम्न०यन्तः । हवामहे ॥
आ । तु । नः । उप । गन्तन ॥११॥

यूयं हि ष्ठा सुदानवो रुद्रा ऽऋभुक्षणो दमे ।
उत प्रचेतसो मदे ॥१२॥
यूयम् । हि । स्थ । सु०दानवः । रुद्राः । ऋभुक्षणः । दमे ॥
उत । प्र०चेतसः । मदे ॥१२॥

आ नो रयिं मदच्युतं पुरुक्षुं विश्वधायसम् ।
इयर्त्ता मरुतो दिवः ॥१३॥
आ । नः । रयिम् । मद०च्युतम् । पुरु०क्षुम् । विश्व०धायसम् ॥
इयर्त्त । मरुतः । दिवः ॥१३॥

अधीव यद्गिरीणां यामं शुभ्रा ऽअचिध्वम् ।
सुवानैर्मन्दध्व ऽइन्दुभिः ॥१४॥
अधिऽइव । यत् । गिरीणाम् । यामम् । शुभ्राः । अचिध्वम् ॥
सुवानैः । मन्दध्वे । इन्दु०भिः ॥१४॥

एतावतश्चिदेषां सुम्नं भिक्षेत मर्त्यः ।
अदाभ्यस्य मन्मभिः ॥१५॥ ( २० )
एतावतः । चित् । एषाम् । सुम्नम् । भिक्षेत । मर्त्यः ॥
अदाभ्यस्य । मन्म०भिः ॥१५॥

ये द्रप्साइव रोदसी धमन्त्यनु वृष्टिभिः ।
उत्सं दुहन्तो ऽअक्षितम् ॥१६॥
ये । द्रप्साःऽइव । रोदसी इति । धमन्ति । अनु । वृष्टि०भिः ॥
उत्सम् । दुहन्तः । अक्षितम् ॥१६॥

**उदु स्वानेभिरीरत उद्रथैरुदु वायुभिः ।**
**उत्स्तोमैः पृश्निमातरः ॥१७॥**
उत् । ऊँ इति । स्वनेभिः । ईरते । उत् । रथैः । उत् । ऊँ इति । वायु०भिः ॥
उत् । स्तोमैः । पृश्नि०मातरः ॥१७॥

**येनाव तुर्वशं यदुं येन कण्वं धनस्पृतम् ।**
**राये सु तस्य धीमहि ॥१८॥**
येन । आव । तुर्वशम् । यदुम् । येन । कण्वम् । धन०स्पृतम् ॥
राये । सु । तस्य । धीमहि ॥१८॥

**इमा उ वः सुदानवो घृतं न पिप्युषीरिषः ।**
**वर्द्धान्काण्वस्य मन्मभिः ॥१९॥**
इमाः । ऊँ । वः । सु०दानवः । घृतम् । न । पिप्युषीः । इषः ॥
वर्द्धान् । काण्वस्य । मन्म०भिः ॥१९॥

**क्व नूनं सुदानवो मदथा वृक्तबर्हिषः ।**
**ब्रह्मा को वः सपर्यति ॥२०॥ ( २१ )**
क्व । नूनम् । सु०दानवः । मदथ । वृक्त०बर्हिषः ॥
ब्रह्मा । कः । वः । सपर्यति ॥२०॥

**नहि ष्म यद्ध वः पुरा स्तोमेभिर्वृक्तबर्हिषः ।**
**शर्द्धाँ ऋतस्य जिन्वथ ॥२१॥**
नहि । स्म । यत् । ह । वः । पुरा । स्तोमेभिः । वृक्त०बर्हिषः ॥
शर्द्धान् । ऋतस्य । जिन्वथ ॥२१॥

**समु त्ये महतीरपः सं क्षोणी समु सूर्यम् ।**
**सं वज्रं पर्वशो दधुः ॥२२॥**
सम् । ऊँ इति । त्ये । महतीः । अपः । सम् । क्षोणी । सम् । ऊँ इति । सूर्यम् ॥
सम् । वज्रम् । पर्व॰शः । दधुः ॥२२॥

**वि वृत्रं पर्वशो ययुर्वि पर्वताँ ऽअराजिनः ।**
**चक्राणा वृष्णि पौंस्यम् ॥२३॥**
वि । वृत्रम् । पर्व॰शः । ययुः । वि । पर्वतान् । अराजिनः ॥
चक्राणाः । वृष्णि । पौंस्यम् ॥२३॥

**अनु त्रितस्य युध्यतः शुष्ममावन्नुत क्रतुम् ।**
**अन्विन्द्रं वृत्रतूर्ये ॥२४॥**
अनु । त्रितस्य । युध्यतः । शुष्मम् । आवन् । उत । क्रतुम् ॥
अनु । इन्द्रम् । वृत्र॰तूर्ये ॥२४॥

**विद्युद्धस्ता ऽअभिद्यवः शिप्राः शीर्षन्हिरण्ययीः ।**
**शुभ्रा व्यञ्जत श्रिये ॥२५॥ ( २२ )**
विद्युत्॰हस्ताः । अभि॰द्यवः । शिप्राः । शीर्षन् । हिरण्ययीः ॥
शुभ्राः । वि । अञ्जत । श्रिये ॥२५॥

**उशना यत्परावत ऽउक्ष्णो रन्ध्रमयातन ।**
**द्यौर्न चक्रदद्भिया ॥२६॥**
उशना । यत् । परा॰वतः । उक्ष्णः । रन्ध्रम् । अयातन ॥
द्यौः । न । चक्रदत् । भिया ॥२६॥

आ नो मखस्य दावनेऽश्वैर्हिरण्यपाणिभिः ।
देवास ऽउप गन्तन ॥२७॥
आ । नः । मखस्य । दावने । अश्वैः । हिरण्यपाणि०भिः ॥
देवासः । उप । गन्तन ॥२७॥

यदेषां पृषती रथे प्रष्टिर्वहति रोहितः ।
यान्ति शुभ्रा रिणन्नपः ॥२८॥
यत् । एषाम् । पृषतीः । रथे । प्रष्टिः । वहति । रोहितः ॥
यान्ति । शुभ्राः । रिणन् । अपः ॥२८॥

सुषोमे शर्यणावत्यार्जीके पस्त्यावति ।
ययुर्निचक्रया नरः ॥२९॥
सु०सोमे । शर्यणा०वति । आर्जीके । पस्त्य०वति ॥
ययुः । नि०चक्रया । नरः ॥२९॥

कदा गच्छाथ मरुत ऽइत्था विप्रं हवमानम् ।
मार्डीकेभिर्नाधमानम् ॥३०॥ ( २३ )
कदा । गच्छाथ । मरुतः । इत्था । विप्रम् । हवमानम् ॥
मार्डीकेभिः । नाधमानम् ॥३०॥

कद्ध नूनं कधप्रियो यदिन्द्रमजहातन ।
को वः सखित्व ऽओहते ॥३१॥
कत् । ह । नूनम् । कध०प्रियः । यत् । इन्द्रम् । अजहातन ॥
कः । वः । सखि०त्वे । ओहते ॥३१॥

**सहो षु णो वज्रहस्तैः कण्वासो ऽअग्निं मरुद्भिः ।**
**स्तुषे हिरण्यवाशीभिः ॥३२॥**
सहो इति । सु । नः । वज्र०हस्तैः । कण्वासः । अग्निम् । मरुत्०भिः ॥
स्तुषे । हिरण्य०वाशीभिः ॥३२॥

**ओ षु वृष्णः प्रयज्यूना नव्यसे सुविताय ।**
**ववृत्यां चित्रवाजान् ॥३३॥**
ओ इति । सु । वृष्णः । प्र०यज्यून् । आ । नव्यसे । सुविताय ॥
ववृत्याम् । चित्र०वाजान् ॥३३॥

**गिरयश्चिन्नि जिहते पर्शानासो मन्यमानाः ।**
**पर्वताश्चिन्नि येमिरे ॥३४॥**
गिरयः । चित् । नि । जिहते । पर्शानासः । मन्यमानाः ॥
पर्वताः । चित् । नि । येमिरे ॥३४॥

**आक्ष्णयावानो वहन्त्यन्तरिक्षेण पततः ।**
**धातारः स्तुवते वयः ॥३५॥**
आ । अक्ष्ण०यावानः । वहन्ति । अन्तरिक्षेण । पततः ॥
धातारः । स्तुवते । वयः ॥३५॥

**अग्निर्हि जानि पूर्व्यश्छन्दो न सूरो ऽअर्चिषा ।**
**ते भानुभिर्वि तस्थिरे ॥३६॥ (२४)** [ १२०३ ]
अग्निः । हि । जनि । पूर्व्यः । छन्दः । न । सूरः । अर्चिषा ॥
ते । भानु०भिः । वि । तस्थिरे ॥३६॥

# ( ८ )

२३ सध्वंस काण्वः । अश्विनौ । अनुष्टुप् ।

**आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवम् ।**
**दस्रा हिरण्यवर्त्तनी पिबतं सोम्यं मधु ॥१॥**
आ । नः । विश्वाभिः । ऊतिऽभिः । अश्विना । गच्छतम् । युवम् ॥
दस्रा । हिरण्यवर्त्तनी इति हिरण्यऽवर्त्तनी । पिबतम् । सोम्यम् । मधु ॥१॥

**आ नूनं यातमश्विना रथेन सूर्यत्वचा ।**
**भुजी हिरण्यपेशसा कवी गम्भीरचेतसा ॥२॥**
आ । नूनम् । यातम् । अश्विना । रथेन । सूर्यऽत्वचा ॥
भुजी इति । हिरण्यऽपेशसा । कवी इति । गम्भीरऽचेतसा ॥२॥

**आ यातं नहुषस्पर्यान्तरिक्षात्सुवृक्तिभिः ।**
**पिबाथो ऽअश्विना मधु कण्वानां सवने सुतम् ॥३॥**
आ । यातम् । नहुषः । परि । आ । अन्तरिक्षात् । सुवृक्तिऽभिः ॥
पिबाथः । अश्विना । मधु । कण्वानाम् । सवने । सुतम् ॥३॥

**आ नो यातं दिवस्पर्याऽन्तरिक्षादधप्रिया ।**
**पुत्रः कण्वस्य वामिह सुषाव सोम्यं मधु ॥४॥**
आ । नः । यातम् । दिवः । परि । आ । अन्तरिक्षात् । अधऽप्रिया ॥
पुत्रः । कण्वस्य । वाम् । इह । सुसाव । सोम्यम् । मधु ॥४॥

**आ नो यातमुपश्रुत्यश्विना सोमपीतये ।**
**स्वाहा स्तोमस्य वर्द्धना प्र कवी धीतिभिर्नरा ॥५॥ ( २५ )**

आ । नः । यातम् । उप॰श्रुति । अश्विना । सोम॰पीतये ॥
स्वाहा । स्तोमस्य । वर्द्धना । प्र । कवी इति । धीति॰भिः । नरा ॥५॥

यच्चिद्धि वां पुर ऽऋषयो जुहूरेऽवसे नरा ।
आ यातमश्विना गतमुपेमां सुष्टुतिं मम ॥६॥
यत् । चित् । हि । वाम् । पुरा । ऋषयः । जुहूरे । अवसे । नरा ॥
आ । यातम् । अश्विना । आ । गतम् । उप । इमाम् । सु॰स्तुतिम् । मम ॥६॥

दिवश्चिद्रोचनादध्या नो गन्तं स्वर्विदा ।
धीभिर्वत्सप्रचेतसा स्तोमेभिर्हवनश्रुता ॥७॥
दिवः । चित् । रोचनात् । अधि । आ । नः । गन्तम् । स्वः२विदा ॥
धीभिः । वत्स॰प्रचेतसा । स्तोमेभिः । हवन॰श्रुता ॥७॥

किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना ।
पुत्रः कण्वस्य वामृषिर्गीर्भिर्वत्सो ऽअवीवृधत् ॥८॥
किम् । अन्ये । परि । आसते । अस्मत् । स्तोमेभिः । अश्विना ॥
पुत्रः । कण्वस्य । वाम् । ऋषिः । गीः२भिः । वत्सः । अवीवृधत् ॥८॥

आ वां विप्र ऽइहावसेऽह्वत्स्तोमेभिरश्विना ।
अरिप्रा वृत्रहन्तमा ता नो भूतं मयोभुवा ॥९॥
आ । वाम् । विप्रः । इह । अवसे । अह्वत् । स्तोमेभिः । अश्विना ॥
अरिप्रा । वृत्रहन्॰तमा । ता । नः । भूतम् । मयः२भुवा ॥९॥

आ यद्वां योषणा रथमतिष्ठद्वाजिनीवसू ।
विश्वान्यश्विना युवं प्र धीतान्यगच्छतम् ॥१०॥ (२६)

आ । यत् । वाम् । योषणा । रथम् । अतिष्ठत् । वाजिनीवसू इति वाजिनी०वसू ॥
विश्वानि । अश्विना । युवम् । प्र । धीतानि । अगच्छतम् ॥१०॥

**अतः सहस्रनिर्णिजा रथेना यातमश्विना ।**
**वत्सो वां मधुमद्वचोऽशंसीत्काव्यः कविः ॥११॥**
अतः । सहस्र०निर्निजा । रथेन । आ । यातम् । अश्विना ॥
वत्सः । वाम् । मधु०मत् । वचः । अशंसीत् । काव्यः । कविः ॥११॥

**पुरुमन्द्रा पुरूवसू मनोतरा रयीणाम् ।**
**स्तोमं मे ऽअश्विनाविममभि वह्नी ऽअनूषाताम् ॥१२॥**
पुरु०मन्द्रा । पुरुवसू इति पुरु०वसू । मनोतरा । रयीणाम् ॥
स्तोमम् । मे । अश्विनौ । इमम् । अभि । वह्नी इति । अनूषाताम् ॥१२॥

**आ नो विश्वान्यश्विना धत्तं राधांस्यह्रया ।**
**कृतं न ऽऋत्वियावतो मा नो रीरधतं निदे ॥१३॥**
आ । नः । विश्वानि । अश्विना । धत्तम् । राधांसि । अह्रया ॥
कृतम् । नः । ऋत्विय०वतः । मा । नः । रीरधतम् । निदे ॥१३॥

**यन्नासत्या परावति यद्वा स्थो ऽअध्यम्बरे ।**
**अतः सहस्रनिर्णिजा रथेना यातमश्विना ॥१४॥**
यत् । नासत्या । परा०वति । यत् । वा । स्थः । अधि । अम्बरे ॥
अतः । सहस्र०निर्निजा । रथेन । आ । यातम् । अश्विना ॥१४॥

**यो वां नासत्यावृषिर्गीर्भिर्वत्सो ऽअवीवृधत् ।**
**तस्मै सहस्रनिर्णिजमिषं धत्तं घृतश्चुतम् ॥१५॥ (२७)**

यः । वाम् । नासत्यौ । ऋषिः । गीःऽभिः । वत्सः । अवीवृधत् ॥
तस्मै । सहस्रऽनिर्निजम् । इषम् । धत्तम् । घृतऽश्चुतम् ॥१५॥

**प्रास्मा ऽऊर्जं घृतश्चुतमश्विना यच्छतं युवम् ।**
**यो वां सुम्नाय तुष्टवद्वसूयाद्दानुनस्पती ॥१६॥**
प्र । अस्मै । ऊर्जम् । घृतऽश्चुतम् । अश्विना । यच्छतम् । युवम् ॥
यः । वाम् । सुम्नाय । तुस्तवत् । वसुऽयात् । दानुनः । पती इति ॥१६॥

**आ नो गन्तं रिशादसेमं स्तोमं पुरुभुजा ।**
**कृतं नः सुश्रियो नरेमा दातमभिष्टये ॥१७॥**
आ । नः । गन्तम् । रिशादसा । इमम् । स्तोमम् । पुरुऽभुजा ॥
कृतम् । नः । सुऽश्रियः । नरा । इमा । दातम् । अभिष्टये ॥१७॥

**आ वां विश्वाभिरूतिभिः प्रियमेधा ऽअहूषत ।**
**राजन्तावध्वराणामश्विना यामहूतिषु ॥१८॥**
आ । वाम् । विश्वाभिः । ऊतिऽभिः । प्रियऽमेधाः । अहूषत ॥
राजन्तौ । अध्वराणाम् । अश्विना । यामऽहूतिषु ॥१८॥

**आ नो गन्तं मयोभुवाश्विना शंभुवा युवम् ।**
**यो वां विपन्यू धीतिभिर्गीर्भिर्वत्सो ऽअवीवृधत् ॥१९॥**
आ । नः । गन्तम् । मयःऽभुवा । अश्विना । शम्ऽभुवा । युवम् ॥
यः । वाम् । विपन्यू इति । धीतिऽभिः । गीःऽभिः । वत्सः । अवीवृधत् ॥१९॥

**याभिः कण्वं मेधातिथिं याभिर्वशं दशव्रजम् ।**
**याभिर्गोशर्यमावतं ताभि र्नोऽवतं नरा ॥२०॥ (२८)**

याभिः । कण्वम् । मेधऽअतिथिम् । याभिः । वशम् । दशऽव्रजम् ॥
याभिः । गोऽशर्यम् । आवतम् । ताभिः । नः । अवतम् । नरा ॥२०॥

याभिर्नरा त्रसदस्युमावतं कृत्व्ये धने ।
ताभिः ष्वस्माँ ऽअश्विना प्रावतं वाजसातये ॥२१॥
याभिः । नरा । त्रसदस्युम् । आवतम् । कृत्व्ये । धने ॥
ताभिः । सु । अस्मान् । अश्विना । प्र । अवतम् । वाजऽसातये ॥२१॥

प्र वां स्तोमाः सुवृक्तयो गिरो वर्द्धन्त्वश्विना ।
पुरुत्रा वृत्रहन्तमा ता नो भूतं पुरुस्पृहा ॥२२॥
प्र । वाम् । स्तोमाः । सुऽवृक्तयः । गिरः । वर्द्धन्तु । अश्विना ॥
पुरुऽत्रा । वृत्रहन्ऽतमा । ता । नः । भूतम् । पुरुऽस्पृहा ॥२२॥

त्रीणि पदान्यश्विनोराविः सान्ति गुहा परः ।
कवी ऽऋतस्य पत्मभिरर्वाग्जीवेभ्यस्परि ॥२३॥ (२९) [१२२२]
त्रीणि । पदानि । अश्विनोः । आविः । सन्ति । गुहा । परः ॥
कवी इति । ऋतस्य । पत्मऽभिः । अर्वाक् । जीवेभ्यः । परि ॥२३॥

## ( ९ )

२१ शशकर्णः काण्वः । अश्विनौ । अनुष्टुप्, १, ४, ६, १४-१५ बृहती, २, ३, २०, २१ गायत्री, ५ ककुप्, १० त्रिष्टुप्, ११ विराट्, १२ जगती ।

आ नूनमश्विना युवं वत्सस्य गन्तमवसे ।
प्रास्मै यच्छतमवृकं पृथु च्छर्दिर्युयुतं या ऽअरातयः ॥१॥
आ । नूनम् । अश्विना । युवम् । वत्सस्य । गन्तम् । अवसे ॥
प्र । अस्मै । यच्छतम् । अवृकम् । पृथु । छर्दिः । युयुतम् । याः । अरातयः ॥१॥

**यदन्तरिक्षे यद्दिवि यत्पञ्च मानुषाँ ऽअनु ।**
**नृम्णं तद्धत्तमश्विना ॥२॥**

यत् । अन्तरिक्षे । यत् । दिवि । यत् । पञ्च । मानुषान् । अनु ॥
नृम्णम् । तत् । धत्तम् । अश्विना ॥२॥

**ये वां दंसांस्यश्विना विप्रासः परिमामृशुः ।**
**एवेत्काण्वस्य बोधतम् ॥३॥**

ये । वाम् । दंसांसि । अश्विना । विप्रासः । परि॰ममृशुः ॥
एव । इत् । काण्वस्य । बोधतम् ॥३॥

**अयं वां घर्मो ऽअश्विना स्तोमेन परि षिच्यते ।**
**अयं सोमो मधुमान्वाजिनीवसू येन वृत्रं चिकेतथः ॥४॥**

अयम् । वाम् । घर्मः । अश्विना । स्तोमेन । परि । सिच्यते ॥
अयम् । सोमः । मधु॰मान् । वाजिनीवसू इति वाजिनी॰वसू । येन । वृत्रम् । चिकेतथः ॥४॥

**यदप्सु यद्वनस्पतौ यदोषधीषु पुरुदंससा कृतम् ।**
**तेन माविष्टमश्विना ॥५॥ (३०)**

यत् । अप्॰सु । यत् । वनस्पतौ । यत् । ओषधीषु । पुरु॰दंससा । कृतम् ॥
तेन । मा । अविष्टम् । अश्विना ॥५॥

**यन्नासत्या भुरण्यथो यद्वा देव भिषज्यथः ।**
**अयं वां वत्सो मतिभिर्न विन्धते हविष्मन्तं हि गच्छथः ॥६॥**

यत् । नासत्या । भुरण्यथः । यत् । वा । देव । भिषज्यथः ॥
अयम् । वाम् । वत्सः । मति॰भिः । न । विन्धते । हविष्मन्तम् । हि । गच्छथः ॥६॥

आ नूनमश्विनोर्ऋषिः स्तोमं चिकेत वामया ।
आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणि ॥७॥
आ । नूनम् । अश्विनोः । ऋषिः । स्तोमम् । चिकेत । वामया ॥
आ । सोमम् । मधुमत्ऽतमम् । घर्मम् । सिञ्चात् । अथर्वणि ॥७॥

आ नूनं रघुवर्त्तनिं रथं तिष्ठाथो ऽअश्विना ।
आ वां स्तोमा ऽइमे मम नभो न चुच्यवीरत ॥८॥
आ । नूनम् । रघुऽवर्त्तनिम् । रथम् । तिष्ठाथः । अश्विना ॥
आ । वाम् । स्तोमाः । इमे । मम । नभः । न । चुच्यवीरत ॥८॥

यदद्य वां नासत्योक्थैराचुच्युवीमहि ।
यद्वा वाणीभिरश्विनेवेत्काण्वस्य बोधतम् ॥९॥
यत् । अद्य । वाम् । नासत्या । उक्थैः । आऽचुच्युवीमहि ॥
यत् । वा । वाणीभिः । अश्विना । एव । इत् । काण्वस्य । बोधतम् ॥९॥

यद्वां कक्षीवाँ ऽउत यद्व्यश्व ऽऋषिर्यद्वां दीर्घतमा जुहाव ।
पृथी यद्वां वैन्यः सादनेष्वेवेदतो ऽअश्विना चेतयेथाम् ॥१०॥ ( ३१ )
यत् । वाम् । कक्षीवान् । उत । यत् । विऽअश्वः । ऋषिः । यत् ।
वाम् । दीर्घऽतमाः । जुहाव ॥ पृथी । यत् । वाम् । वैन्यः ।
सदनेषु । एव । इत् । अतः । अश्विना । चेतयेथाम् ॥१०॥

यातं छर्दिष्पा ऽउत नः परस्पा भूतं जगत्पा ऽउत नस्तनूपा ।
वर्त्तिस्तोकाय तनयाय यातम् ॥११॥
यातम् । छर्दिःऽपौ । उत । नः । परःऽपाः ।
भूतम् । जगत्ऽपौ । उत । नः । तनूऽपा ॥
वर्त्तिः । तोकाय । तनयाय । यातम् ॥११॥

यदिन्द्रेण सरथं याथो ऽअश्विना यद्वा वायुना भवथः समोकसा ।
यदादित्येभिर्ऋभुभिः सजोषसा यद्वा विष्णोर्विक्रमणेषु तिष्ठथः ॥१२॥
यत् । इन्द्रेण । स०रथम् । याथः । अश्विना । यत् । वा । वायुना ।
भवथः । सम्०ओकसा ॥ यत् । आदित्येभिः । ऋभु०भिः ।
स०जोषसा । यत् । वा । विष्णोः । वि०क्रमणेषु । तिष्ठथः ॥१२॥

यदद्याश्विनावहं हुवेय वाजसातये ।
यत्पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥१३॥
यत् । अद्य । अश्विनौ । अहम् । हुवेय । वाज०सातये ॥
यत् । पृत्०सु । तुर्वणे । सहः । तत् । श्रेष्ठम् । अश्विनोः । अवः ॥१३॥

आ नूनं यातमश्विनेमा हव्यानि वां हिता ।
इमे सोमासो ऽअधि तुर्वशे यदाविमे कण्वेषु वामथ ॥१४॥
आ । नूनम् । यातम् । अश्विना । इमा । हव्यानि । वाम् । हिता ॥
इमे । सोमासः । अधि । तुर्वशे । यदौ । इमे । कण्वेषु । वाम् । अथ ॥१४॥

यन्नासत्या पराके ऽअर्वाके ऽअस्ति भेषजम् ।
तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ॥१५॥ ( ३२ )
यत् । नासत्या । पराके । अर्वाके । अस्ति । भेषजम् ॥
तेन । नूनम् । वि०मदाय । प्र०चेतसा । छर्दिः । वत्साय । यच्छतम् ॥१५॥

अभुत्स्यु प्र देव्या साकं वाचाहमश्विनोः ।
व्यावर्देव्या मतिं वि रातिं मर्त्येभ्यः ॥१६॥
अभुत्सि । ऊँ इति । प्र । देव्या । साकम् । वाचा । अहम् । अश्विनोः ॥
वि । आवः । देवि । आ । मतिम् । वि । रातिम् । मर्त्येभ्यः ॥१६॥

**प्र बोधयोषो ऽअश्विना प्र देवि सूनृते महि ।**

**प्र यज्ञहोतरानुषक्प्र मदाय श्रवो बृहत् ॥१७॥**

प्र । बोधय । उषः । अश्विना । प्र । देवि । सूनृते । महि ॥

प्र । यज्ञ०होतः । आनुषक् । प्र । मदाय । श्रवः । बृहत् ॥१७॥

**यदुषो यासि भानुना सं सूर्येण रोचसे ।**

**आ हायमश्विनो रथो वर्त्तिर्याति नृपाय्यम् ॥१८॥**

यत् । उषः । यासि । भानुना । सम् । सूर्येण । रोचसे ॥

आ । ह । अयम् । अश्विनोः । रथः । वर्त्तिः । याति । नृ०पाय्यम् ॥१८॥

**यदापीतासो ऽअंशवो गावो न दुह्र ऽऊधभिः ।**

**यद्वा वाणीरनूषत प्र देवयन्तो ऽअश्विना ॥१९॥**

यत् । आ०पीतासः । अंशवः । गावः । न । दुह्रे । ऊध०भिः ॥

यत् । वा । वाणीः । अनूषत । प्र । देव०यन्तः । अश्विना ॥१९॥

**प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे ।**

**प्र दक्षाय प्रचेतसा ॥२०॥**

प्र । द्युम्नाय । प्र । शवसे । प्र । नृ०सह्याय । शर्मणे ॥

प्र । दक्षाय । प्र०चेतसा ॥२०॥

**यन्नूनं धीभिरश्विना पितुर्योना निषीदथः ।**

**यद्वा सुम्नेभिरुक्थ्या ॥२१॥ ( ३३ )** [ १२४३ ]

यत् । नूनम् । धीभिः । अश्विना । पितुः । योना । नि०सीदथः ॥

यत् । वा । सुम्नेभिः । उक्थ्या ॥२१॥

# ( १० )

६ प्रगाथो (घौरः) काण्वः । अश्विनौ । १ बृहती, २ मध्ये ज्योतिः, ३ अनुष्टुप् (पिङ्गलमतेन - शङ्कुमती), ४ आस्तारपङ्क्तिः, ५-६ प्रगाथः = (५ बृहती, ६ सतोबृहती)

**यत्स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः ।**
**यद्वा समुद्रे ऽअध्याकृते गृहेऽतऽआ यातमश्विना ॥१॥**

यत् । स्थः । दीर्घ०प्रसद्मनि । यत् । वा । अदः ।
रोचने । दिवः ॥ यत् । वा । समुद्रे । अधि ।
आ०कृते । गृहे । अतः । आ । यातम् । अश्विना ॥१॥

**यद्वां यज्ञं मनवे सम्मिमिक्षथुरेवेत्काण्वस्य बोधतम् ।**
**बृहस्पतिं विश्वान्देवाँ ऽअहं हुव ऽइन्द्राविष्णू ऽअश्विनावाशुहेषसा ॥२॥**

यत् । वा । यज्ञम् । मनवे । सम्०मिमिक्षथुः । एव । इत् ।
काण्वस्य । बोधतम् ॥ बृहस्पतिम् । विश्वान् । देवान् ।
अहम् । हुवे । इन्द्राविष्णू इति । अश्विनौ । आशु०हेषसा ॥२॥

**त्या न्वश्विना हुवे सुदंससा गृभे कृता ।**
**ययोरस्ति प्र णः सख्यं देवेष्वध्याप्यम् ॥३॥**

त्या । नु । अश्विना । हुवे । सु०दंससा । गृभे । कृता ॥
ययोः । अस्ति । प्र । नः । सख्यम् । देवेषु । अधि । आप्यम् ॥३॥

**ययोरधि प्र यज्ञाऽअसूरे सन्ति सूरयः ।**
**ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु ॥४॥**

ययोः । अधि । प्र । यज्ञाः । असूरे । सन्ति ।
सूरयः ॥ ता । यज्ञस्य । अध्वरस्य । प्र०चेतसा ।
स्वधाभिः । या । पिबतः । सोम्यम् । मधु ॥४॥

**यदद्याश्विनावपाग्यत्प्राक्स्थो वाजिनीवसू ।**

**यद् द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतम् ॥५॥**

यत् । अद्य । अश्विनौ । अपाक् । यत् । प्राक् । स्थः ।
वाजिनीवसू इति वाजिनी०वसू ॥ यत् । द्रुह्यवि । अनवि ।
तुर्वशे । यदौ । हुवे । वाम् । अथ । मा । आ । गतम् ॥५॥

**यदन्तरिक्षे पतथः पुरुभुजा यद्वेमे रोदसी ऽअनु ।**

**यद्वा स्वधाभिरधितिष्ठथो रथमत ऽआ यातमश्विना ॥६॥ ( ३४ ) [ १२५३ ]**

यत् । अन्तरिक्षे । पतथः । पुरु०भुजा । यत् । वा ।
इमे इति । रोदसी इति । अनु ॥ यत् । वा । स्वधाभिः ।
अधि०तिष्ठथः । रथम् । अतः । आ । यातम् । अश्विना ॥६॥

# ( ११ )

१० वत्सः काण्वः । अग्निः । गायत्री, १ प्रतिष्ठा, २ वर्द्धमाना, १० त्रिष्टुप् ।

**त्वमग्ने व्रतपा ऽअसि देव ऽआ मर्त्येष्वा ।**

**त्वं यज्ञेष्वीड्यः ॥१॥**

त्वम् । अग्ने । व्रत०पाः । असि । देवः । आ । मर्त्येषु । आ ॥
त्वम् । यज्ञेषु । ईड्यः ॥१॥

**त्वमसि प्रशस्यो विदथेषु सहन्त्य ।**

**अग्ने रथीरध्वराणाम् ॥२॥**

त्वम् । असि । प्र०शस्यः । विदथेषु । सहन्त्य ॥
अग्ने । रथीः । अध्वराणाम् ॥२॥

**स त्वमस्मदप द्विषो युयोधि जातवेदः ।**

**अदेवीरग्ने ऽअरातीः ॥३॥**

सः । त्वम् । अस्मत् । अप । द्विषः । युयोधि । जात॰वेदः ॥
अदेवीः । अग्ने । अरातीः ॥३॥

**अन्ति चित्सन्तमह यज्ञं मर्त्तस्य रिपोः ।**
**नोप वेषि जातवेदः ॥४॥**
अन्ति । चित् । सन्तम् । अह । यज्ञम् । मर्त्तस्य । रिपोः ॥
न । उप । वेषि । जात॰वेदः ॥४॥

**मर्त्ता ऽअमर्त्त्यस्य ते भूरि नाम मनामहे ।**
**विप्रासो जातवेदसः ॥५॥ ( ३५ )**
मर्त्ताः । अमर्त्त्यस्य । ते । भूरि । नाम । मनामहे ॥
विप्रासः । जात॰वेदसः ॥५॥

**विप्रं विप्रासोऽवसे देवं मर्त्तास ऽऊतये ।**
**अग्निं गीर्भिर्हवामहे ॥६॥**
विप्रम् । विप्रासः । अवसे । देवम् । मर्त्तासः । ऊतये ॥
अग्निम् । गीःऽभिः । हवामहे ॥६॥

**आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।**
**अग्ने त्वांकामया गिरा ॥७॥**
आ । ते । वत्सः । मनः । यमत् । परमात् । चित् । सध॰स्थात् ॥
अग्ने । त्वाम्॰कामया । गिरा ॥७॥

**पुरुत्रा हि सदृङ्ङसि विशो विश्वा ऽअनु प्रभुः ।**
**समत्सु त्वा हवामहे ॥८॥**

पुरु०त्रा । हि । स०दृङ् । असि । विशः । विश्वाः । अनु । प्र०भुः ॥
समत्०सु । त्वा । हवामहे ॥८॥

**समत्स्वग्निमवसे वाजयन्तो हवामहे ।**
**वाजेषु चित्रराधसम् ॥९॥**
समत्०सु । अग्निम् । अवसे । वाज०यन्तः । हवामहे ॥
वाजेषु । चित्र०राधसम् ॥९॥

**प्रत्नो हि कमीड्यो ऽअध्वरेषु सनाच्च होता नव्यश्च सत्सि ।**
**स्वां चाग्ने तन्वं पिप्रयस्वास्मभ्यं च सौभगमा यजस्व ॥१०॥ ( ३६ ) [ १२६३ ]**
प्रत्नः । हि । कम् । ईड्यः । अध्वरेषु । सनात् । च ।
होता । नव्यः । च । सत्सि ॥ स्वाम् । च । अग्ने । तन्वम् ।
पिप्रयस्व । अस्मभ्यम् । च । सौभगम् । आ । यजस्व ॥१०॥

**॥ इति पञ्चमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥**

# अष्टमाध्यायस्य मन्त्रवर्गानुक्रमणी

दूरादिहेव यत्सत्य ॥१॥
ता सुदेवाय दाशुषे ॥२॥
वावृधाना शुभस्पती ॥३॥
पुरुत्रा चिद्धि वांनरा ॥४॥
उत नो दिव्या इषे ॥ ५॥
यथोत कृत्व्ये धने ॥६॥
आ वंहेथे पराकात् ॥७॥
युवं मृगं जागृवांसं ॥८॥
महाँ इन्द्रो य ओजसा ॥९॥
वि चिद् वृत्रस्य दोधतो ॥१०॥
अहं प्रत्नेन मन्मना ॥११॥
यस्ते इन्द्र महीरपः ॥१२॥
त्वामिच्छवसस्पते ॥१३॥
यदङ्ग तविषीयस ॥१४॥
कण्वास इन्द्र ते ॥१५॥
आ नो याहि परावतो ॥१६॥
ऋषिर्हि पूर्वजा अस्ये ॥१७॥
प्र यद्वस्त्रिष्टुभमिषं ॥१८॥
युज्माँ उ नक्तमूतये ॥१९॥
मरुतो यद्ध वो दिवः ॥२०॥
ये द्रप्सा इव रोदसी ॥२१॥
नहि ष्म यद्ध वः पुरा ॥२२॥
उशना यत्परावत ॥२३॥
कद्ध नूनं कधप्रियो ॥२४॥
आ नो विश्वाभिरुतिभि ॥२५॥
यच्चिद्धि वां पुर ऋषयो ॥२६॥
अतः सहस्रनिर्णिजा ॥२७॥
प्रास्मा ऊर्जं घृतश्चुत ॥२८॥
यामिर्नरा त्रसदस्यु ॥२९॥
आ नूनमश्विना युवं ॥३०॥
यन्नासत्या भुरण्यथो ॥३१॥
यातं छर्दिष्पा उत नः ॥३२॥
अभुत्स्यु प्र देव्या ॥३३॥
यत्स्थो दीर्घप्रसद्मनि ॥३४॥
त्वमग्ने व्रतपा असि ॥३५॥
विप्रं विप्रासोऽवसे ॥३६॥

॥ इति शाङ्खायनसंहितायां पञ्चमाष्टकेऽष्टमोऽध्यायः ॥
(अष्टमाध्याये वर्गाः ३६, सूक्तानि ७, ऋचः १८३)

।पञ्चमाऽष्टकेऽध्यायाः ८, वर्गाः २३८, सूक्तानि १२९, ऋचः १२६३ + १५ खिलानि = १२७८॥

## अथ पञ्चमाष्टकस्य मन्त्राणां वर्णानुक्रमणी

| | अ.अ.व.: | मं.सू.मं. |
|---|---|---|
| अकारि वामन्धसो | ५.१.३; | ६.६३.३ |
| अगन्म महा नमसा यविष्ठं | ५.२.१५; | ७.१२.१ |
| अग्निं नरो दीधितिभिर० | ५.१.२३; | ७.१.१ |
| अग्निं वो देवमग्निभिः | ५.२.३; | ७.३.१ |
| अग्निरीशे बृहतो | ५.२.१४; | ७.११.४ |
| अग्निर्हि जानि पूर्व्यश्छन्दो | ५.८.२४ | ८.७.३६ |
| अग्नी रक्षांसि सेधति | ५.२.१९ | ७.१५.१० |
| अग्ने भव सुषमिधा समिद्ध | ५.२.२३ | ७.१७.१ |
| अग्ने याहि दूत्यं मा | ५.२.१२ | ७.९.५ |
| अग्ने रक्षा णो ऽअंहसः | ५.२.२० | ७.१५.१३ |
| अग्ने वीहि हविषा यक्षि | ५.२.२३ | ७.१७.३ |
| अचेति दिवो दुहिता | ५.५.२५ | ७.७८.४ |
| अच्छा गिरो मतयो | ५.२.१३ | ७.१०.३ |
| अच्छायं वो मरुतः | ५.४.२ | ७.३६.९ |
| अजगरो नाम | ५.४.२२ | ७.५५.८खि |
| अतः समुद्रमुद्वतश्चिकित्वाँ | ५.८.१४ | ८.६.२९ |
| अतः सहस्रनिर्णिजा | ५.८.२७ | ८.८.११ |
| अतारिष्म तमसस्पारमस्य | ५.५.२० | ७.७३.१ |
| अत्यासो न ये मरुतः | ५.४.२५ | ७.५६.१६ |
| अदब्धेभिः सवितः | ५.१.१५ | ६.७१.३ |
| अद्या मुरीय यदि यातुधानो | ५.७.७ | ७.१०४.१५ |
| अध ज्मो ऽअध वा | ५.७.१३ | ८.१.१८ |
| अध प्लायोगिरति | ५.७.१६ | ८.१.३३ |
| अध श्रुतं कवषं | ५.२.२६ | ७.१८.१२ |
| अधा न्वस्य संदृशं | ५.६.१० | ७.८८.२ |
| अधा मही न ऽआयस्य० | ५.२.२० | ७.१५.१४ |
| अधा ह यन्तो ऽअश्विना | ५.५.२१ | ७.७४.५ |
| अधि श्रिये दुहिता | ५.१.३ | ६.६३.५ |
| अधीव यद्गिरीणां | ५.८.२० | ८.७.१४ |
| अध्वर्यवोऽरुणं दुग्धमंशुं | ५.६.२३ | ७.९८.१ |
| अध्वर्यो द्रावया त्वं | ५.७.३२ | ८.४.११ |

| | अ.अ.व.: | मं.सू.मं. |
|---|---|---|
| अनु तदुर्वी रोदसी | ५.३.२७ | ७.३४.२४ |
| अनु तन्नो जास्पतिर्मंसीष्ट | ५.४.५ | ७.३८.६ |
| अनु त्रितस्य युध्यतः | ५.८.२२ | ८.७.२४ |
| अनु त्वा रोदसी ऽउभे | ५.८.१६ | ८.६.३८ |
| अनेनो वो मरुतो | ५.१.८ | ६.६६.७ |
| अन्तरैश्चक्रैस्तनयाय वर्त्ति० | ५.१.२ | ६.६२.१० |
| अन्ति चित्सन्तमह | ५.८.३५ | ८.११.४ |
| अन्तिवामा दूरे | ५.५.२४ | ७.७७.४ |
| अन्यो ऽअन्यमनु | ५.७.३ | ७.१०३.४ |
| अन्वपां खान्यतृन्तमोजसा | ५.६.२ | ७.८२.३ |
| अन्वस्य स्थूरं ददृशे | ५.७.१६ | ८.१.३४ |
| अप स्वसुरुषसो | ५.५.१८ | ७.७१.१ |
| अपां मध्ये तस्थिवांसं | ५.६.११ | ७.८९.४ |
| अपि ष्टुतः सविता देवो | ५.४.५ | ७.३८.३ |
| अबोधि जार ऽउषसामुप० | ५.२.१२ | ७.९.१ |
| अब्जामुक्थैरहिं गृणीषे | ५.३.२६ | ७.३४.१६ |
| अभि कण्वा ऽअनूषतापो | ५.८.१५ | ८.६.३४ |
| अभि क्रत्वेन्द्र भूरध | ५.३.४ | ७.२१.६ |
| अभि त्वा पूर्वपीतय | ५.७.२६ | ८.३.७ |
| अभि त्वा शूर | ५.३.२१ | ७.३२.२२ |
| अभि प्र स्थाताहेव | ५.३.२५ | ७.३४.५ |
| अभि यं देवी निर्ऋति० | ५.४.४ | ७.३७.७ |
| अभि यं देव्यदितिर्गृणाति | ५.४.५ | ७.३८.४ |
| अभि ये मिथो वनुषः | ५.४.५ | ७.३८.५ |
| अभि वां नूनमश्विना | ५.५.१२ | ७.६७.३ |
| अभि वो देवीं धियं | ५.३.२५ | ७.३४.९ |
| अभि व्रजं न तत्निषे | ५.८.१३ | ८.६.२५ |
| अभि स्वपूभिर्मिथो वपन्त | ५.४.२३ | ७.५६.३ |
| अभी षतस्तदा | ५.३.२१ | ७.३२.२४ |
| अभुत्स्यु प्र देव्या | ५.८.३३ | ८.९.१६ |
| अभूदुषा ऽइन्द्रतमा | ५.५.२६ | ७.७९.३ |

**इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च ।**

**स्थिराणि न पराणुदे ॥९॥**

इन्द्रेण । रोचना । दिवः । दृळ्हानि । दृंहितानि । च ॥

स्थिराणि । न । परा०नुदे ॥९॥

**अपामूर्मिर्मदन्निव स्तोम ऽइन्द्राजिरायते ।**

**वि ते मदा ऽअराजिषुः ॥१०॥ ( १५ )**

अपाम् । ऊर्मिः । मदन्०इव । स्तोमः । इन्द्र । अजिर०यते ॥

वि । ते । मदाः । अराजिषुः ॥१०॥

**त्वं हि स्तोमवर्द्धन ऽइन्द्रास्युक्थवर्द्धनः ।**

**स्तोतॄणामुत भद्रकृत् ॥११॥**

त्वम् । हि । स्तोम०वर्द्धनः । इन्द्र । असि । उक्थ०वर्द्धनः ॥

स्तोतॄणाम् । उत । भद्र०कृत् ॥११॥

**इन्द्रमित्केशिना हरी सोमपेयाय वक्षतः ।**

**उप यज्ञं सुराधसम् ॥१२॥**

इन्द्रम् । इत् । केशिना । हरी इति । सोम०पेयाय । वक्षतः ॥

उप । यज्ञम् । सु०राधसम् ॥१२॥

**अपां फेनेन नमुचेः शिर ऽइन्द्रोदवर्त्तयः ।**

**विश्वा यदजयः स्पृधः ॥१३॥**

अपाम् । फेनेन । नमुचेः । शिरः । इन्द्र । उत् । अवर्त्तयः ॥

विश्वाः । यत् । अजयः । स्पृधः ॥१३॥

मायाभिरुत्सिसृप्सत ऽइन्द्र द्यामारुरुक्षतः ।
अव दस्यूँरधूनुथाः ॥१४॥
मायाभिः । उत्ऽसिसृप्सतः । इन्द्र । द्याम् । आऽरुरुक्षतः ॥
अव । दस्यून् । अधूनुथाः ॥१४॥

असुन्वामिन्द्र संसदं विषूचीं व्यनाशयः ।
सोमपा ऽउत्तरो भवन् ॥१५॥ ( १६ ) [ ८१ ]
असुन्वाम् । इन्द्र । सम्ऽसदम् । विषूचीम् । वि । अनाशयः ॥
सोमऽपाः । उत्ऽतरः । भवन् ॥१५॥

# ( १५ )

१३ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ । इन्द्रः । उष्णिक् ।

तम्वभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
इन्द्रं गीर्भिस्तविषमा विवासत ॥१॥
तम् । ऊँ इति । अभि । प्र । गायत । पुरुऽहूतम् । पुरुऽस्तुतम् ॥
इन्द्रम् । गीःऽभिः । तविषम् । आ । विवासत ॥१॥

यस्य द्विबर्हसो बृहत्सहो दाधार रोदसी ।
गिरीँरज्राँ ऽअपः स्वर्वृषत्वना ॥२॥
यस्य । द्विऽबर्हसः । बृहत् । सहः । दाधार । रोदसी इति ॥
गिरीन् । अज्रान् । अपः । स्वः । वृषऽत्वना ॥२॥

स राजसि पुरुष्टुतँ ऽएको वृत्राणि जिघ्नसे ।
इन्द्र जैत्रा श्रवस्या च यन्तवे ॥३॥
सः । राजसि । पुरुऽस्तुत । एकः । वृत्राणि । जिघ्नसे ॥
इन्द्र । जैत्रा । श्रवस्या । च । यन्तवे ॥३॥

**तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम् ।**

**उ लोककृत्नुमद्रिवो हरिश्रियम् ॥४॥**

तम् । ते । मदम् । गृणीमसि । वृषणम् । पृत्ऽसु । ससहिम् ॥

ऊँ इति । लोकऽकृत्नुम् । अद्रिऽवः । हरिऽश्रियम् ॥४॥

**येन ज्योतींष्यायवे मनवे च विवेदिथ ।**

**मन्दानो ऽअस्य बर्हिषो वि राजसि ॥५॥ (१७)**

येन । ज्योतींषि । आयवे । मनवे । च । विवेदिथ ॥

मन्दानः । अस्य । बर्हिषः । वि । राजसि ॥५॥

**तदद्या चित्त ऽउक्थिनोऽनुष्टुवन्ति पूर्वथा ।**

**वृषपत्नीरपो जया दिवेदिवे ॥६॥**

तत् । अद्य । चित् । ते । उक्थिनः । अनु । स्तुवन्ति । पूर्वऽथा ॥

वृषऽपत्नीः । अपः । जय । दिवेऽदिवे ॥६॥

**तव त्यदिन्द्रियं बृहत्तव शुष्ममुत क्रतुम् ।**

**वज्रं शिशाति धिषणा वरेण्यम् ॥७॥**

तव । त्यत् । इन्द्रियम् । बृहत् । तव । शुष्मम् । उत । क्रतुम् ॥

वज्रम् । शिशाति । धिषणा । वरेण्यम् ॥७॥

**तव द्यौरिन्द्र पौंस्यं पृथिवी वर्द्धति श्रवः ।**

**त्वामापः पर्वतासश्च हिन्विरे ॥८॥**

तव । द्यौः । इन्द्र । पौंस्यम् । पृथिवी । वर्द्धति । श्रवः ॥

त्वाम् । आपः । पर्वतासः । च । हिन्विरे ॥८॥

**त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः ।**

**त्वां शर्द्धो मदत्यनु मारुतम् ॥९॥**

त्वाम् । विष्णुः । बृहन् । क्षयः । मित्रः । गृणाति । वरुणः ॥

त्वाम् । शर्द्धः । मदति । अनु । मारुतम् ॥९॥

**त्वं वृषा जनानां मंहिष्ठ ऽइन्द्र जज्ञिषे ।**

**सत्रा विश्वा स्वपत्यानि दधिषे ॥१०॥ (१८)**

त्वम् । वृषा । जनानाम् । मंहिष्ठः । इन्द्र । जज्ञिषे ॥

सत्रा । विश्वा । सु०अपत्यानि । दधिषे ॥१०॥

**सत्रा त्वं पुरुष्टुतँ ऽएको वृत्राणि तोशसे ।**

**नान्य ऽइन्द्रात्करणं भूयं ऽइन्वति ॥११॥**

सत्रा । त्वम् । पुरु०स्तुत । एकः । वृत्राणि । तोशसे ॥

न । अन्यः । इन्द्रात् । करणम् । भूयः । इन्वति ॥११॥

**यदिन्द्र मन्मशस्त्वा नाना हवन्त ऽऊतये ।**

**अस्माकेभिर्नृभिरत्रा स्वर्जय ॥१२॥**

यत् । इन्द्र । मन्म०शः । त्वा । नाना । हवन्ते । ऊतये ॥

अस्माकेभिः । नृ०भिः । अत्र । स्वः । जय ॥१२॥

**अरं क्षयाय नो महे विश्वा रूपाण्याविशन् ।**

**इन्द्रं जैत्राय हर्षया शचीपतिम् ॥१३॥ (१९)** [९४]

अरम् । क्षयाय । नः । महे । विश्वा । रूपाणि । आ०विशन् ॥

इन्द्रम् । जैत्राय । हर्षय । शची०पतिम् ॥१३॥

# ( १६ )

१२ इरिम्बिठिः काण्वः । इन्द्रः । गायत्री ।

प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः ।
नरं नृषाहं मंहिष्ठम् ॥१॥
प्र । सम्०राजम् । चर्षणीनाम् । इन्द्रम् । स्तोत । नव्यम् । गीःऽभिः ॥
नरम् । नृ०सहम् । मंहिष्ठम् ॥१॥

यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या ।
अपामवो न समुद्रे ॥२॥
यस्मिन् । उक्थानि । रण्यन्ति । विश्वानि । च । श्रवस्या ॥
अपाम् । अवः । न । समुद्रे ॥२॥

तं सुष्टुत्या विवासे ज्येष्ठराजं भरे कृत्नुम् ।
महो वाजिनं सनिभ्यः ॥३॥
तम् । सु०स्तुत्या । आ । विवासे । ज्येष्ठ०राजम् । भरे । कृत्नुम् ॥
महः । वाजिनम् । सनि०भ्यः ॥३॥

यस्यानूना गभीरा मदा ऽउरवस्तरुत्राः ।
हर्षुमन्तः शूरसातौ ॥४॥
यस्य । अनूनाः । गभीराः । मदाः । उरवः । तरुत्राः ॥
हर्षु०मन्तः । शूर०सातौ ॥४॥

तमिद्धनेषु हितेष्वधिवाकाय हवन्ते ।
येषामिन्द्रस्ते जयन्ति ॥५॥

तम् । इत् । धनेषु । हितेषु । अधि॰वाकार्य । हवन्ते ॥
येषाम् । इन्द्रः । ते । जयन्ति ॥५॥

**तमिच्च्यौत्नैरार्यन्ति तं कृतेभिश्चर्षणयः ।**
**एष ऽइन्द्रो वरिवस्कृत् ॥६॥ ( २० )**
तम् । इत् । च्यौत्नैः । आर्यन्ति । तम् । कृतेभिः । चर्षणयः ॥
एषः । इन्द्रः । वरिवः२कृत् ॥६॥

**इन्द्रो ब्रह्मेन्द्र ऽऋषिरिन्द्रः पुरू पुरुहूतः ।**
**महान्महीभिः शचीभिः ॥७॥**
इन्द्रः । ब्रह्मा । इन्द्रः । ऋषिः । इन्द्रः । पुरु । पुरु॰हूतः ॥
महान् । महीभिः । शचीभिः ॥७॥

**स स्तोम्यः स हव्यः सत्यः सत्वा तुविकूर्मिः ।**
**एकश्चित्सन्नभिभूतिः ॥८॥**
सः । स्तोम्यः । सः । हव्यः । सत्यः । सत्वा । तुवि॰कूर्मिः ॥
एकः । चित् । सन् । अभि॰भूतिः ॥८॥

**तमर्केभिस्तं सामभिस्तं गायत्रैश्चर्षणयः ।**
**इन्द्रं वर्द्धन्ति क्षितयः ॥९॥**
तम् । अर्केभिः । तम् । साम॰भिः । तम् । गायत्रैः । चर्षणयः ॥
इन्द्रम् । वर्द्धन्ति । क्षितयः ॥९॥

**प्रणेतारं वस्यो ऽअच्छा कर्त्तारं ज्योतिः समत्सु ।**
**सासह्वांसं युधामित्रान् ॥१०॥**

प्र॒ऽने॒तार॑म् । वस्य॑ः । अच्छ॑ । कर्ता॑रम् । ज्योति॑ः । स॒मत्ऽसु ॥
स॒स॒ह्वांस॑म् । यु॒धा । अ॒मित्रा॑न् ॥१०॥

स न॒ः पप्रि॑ः पारयाति स्व॒स्ति ना॒वा पु॑रुहू॒तः ।
इन्द्रो॒ विश्वा॒ ऽअति॒ द्विष॑ः ॥११॥
सः । न॒ः । पप्रि॑ः । पा॒र॒या॒ति॒ । स्व॒स्ति । ना॒वा । पु॒रु॒ऽहू॒तः ॥
इन्द्र॑ः । विश्वा॑ । अति॑ । द्विष॑ः ॥११॥

स त्वं न॑ ऽइन्द्र॒ वाजे॑भिर्दश॒स्या च॑ गातुया च॑ ।
अच्छा॑ च नः सु॒म्नं नै॑षि ॥१२॥ (२१) [ १०६ ]
सः । त्वम् । न॒ः । इ॒न्द्र॒ । वाजे॑भिः । द॒श॒स्य । च॒ । गा॒तु॒ऽय । च॒ ॥
अच्छ॑ । च॒ । न॒ः । सु॒म्नम् । ने॒षि॒ ॥१२॥

# ( १७ )

१५ इरिम्बिठिः काण्वः । इन्द्रः, १४ वास्तोष्पतिर्वा । गायत्री,
प्रगाथः = ( १४ बृहती, १५ सतोबृहती )।

आ या॑हि सुषुमा हि त॒ ऽइन्द्र सोम॒ं पिबा॑ ऽइ॒मम् ।
एदं ब॒र्हिः स॑दो॒ मम॑ ॥१॥
आ । या॒हि॒ । सु॒सु॒म । हि । ते॒ । इन्द्र॑ । सोम॑म् । पिब॑ । इ॒मम् ॥
आ । इ॒दम् । ब॒र्हिः । स॒द॒ः । मम॑ ॥१॥

आ त्वा॑ ब्रह्म॒युजा॒ हरी॒ वह॑तामिन्द्र के॒शिना॑ ।
उप॒ ब्रह्मा॑णि नः शृणु ॥२॥
आ । त्वा॒ । ब्र॒ह्म॒ऽयुजा॑ । हरी इति॑ । वह॑ताम् । इ॒न्द्र॒ । के॒शिना॑ ॥
उप॑ । ब्रह्मा॑णि । न॒ः । शृ॒णु॒ ॥२॥

**ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः ।**

**सुतावन्तो हवामहे ॥३॥**

ब्रह्माणः । त्वा । वयम् । युजा । सोम०पाम् । इन्द्र । सोमिनः ॥
सुत०वन्तः । हवामहे ॥३॥

**आ नो याहि सुतावतोऽस्माकं सुष्टुतीरुप ।**

**पिबा सु शिप्रिन्नन्धसः ॥४॥**

आ । नः । याहि । सुत०वतः । अस्माकम् । सु०स्तुतीः । उप ॥
पिब । सु । शिप्रिन् । अन्धसः ॥४॥

**आ ते सिञ्चामि कुक्ष्योरनु गात्रा वि धावतु ।**

**गृभाय जिह्वया मधु ॥५॥ ( २२ )**

आ । ते । सिञ्चामि । कुक्ष्योः । अनु । गात्रा । वि । धावतु ॥
गृभाय । जिह्वया । मधु ॥५॥

**स्वादुष्टे ऽअस्तु संसुदे मधुमान्तन्वे३ तव ।**

**सोमः शमस्तु ते हृदे ॥६॥**

स्वादुः । ते । अस्तु । सम्०सुदे । मधु०मान् । तन्वे । तव ॥
सोमः । शम् । अस्तु । ते । हृदे ॥६॥

**अयमु त्वा विचर्षणे जनीरिवाभि संवृतः ।**

**प्र सोम ऽइन्द्र सर्पतु ॥७॥**

अयम् । ऊँ इति । त्वा । वि०चर्षणे । जनीःऽइव । अभि । सम्०वृतः ॥
प्र । सोमः । इन्द्र । सर्पतु ॥७॥

तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे ।
इन्द्रो वृत्राणि जिघ्नते ॥८॥
तुविऽग्रीवः । वपाऽउदरः । सुऽबाहुः । अन्धसः । मदे ॥
इन्द्रः । वृत्राणि । जिघ्नते ॥८॥

इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान ऽओजसा ।
वृत्राणि वृत्रहञ्जहि ॥९॥
इन्द्र । प्र । इहि । पुरः । त्वम् । विश्वस्य । ईशानः । ओजसा ॥
वृत्राणि । वृत्रऽहन् । जहि ॥९॥

दीर्घस्ते ऽअस्त्वङ्कुशो येना वसु प्रयच्छसि ।
यजमानाय सुन्वते ॥१०॥ ( २३ )
दीर्घः । ते । अस्तु । अङ्कुशः । येन । वसु । प्रऽयच्छसि ॥
यजमानाय । सुन्वते ॥१०॥

अयं त ऽइन्द्र सोमो निपूतो ऽअधि बर्हिषि ।
एहीमस्य द्रवा पिब ॥११॥
अयम् । ते । इन्द्र । सोमः । निऽपूतः । अधि । बर्हिषि ॥
आ । इहि । ईम् । अस्य । द्रव । पिब ॥११॥

शाचिगो शाचिपूजनायं रणाय ते सुतः ।
आखण्डल प्र हूयसे ॥१२॥
शाचिगो इति शाचिऽगो । शाचिऽपूजन । अयम् । रणाय । ते । सुतः ॥
आखण्डल । प्र । हूयसे ॥१२॥

यस्ते शृङ्गवृषो नपात्प्रणपात्कुण्डपाय्यः ।
न्यस्मिन्दध्र ऽआ मनः ॥१३॥
यः । ते । शृङ्ग०वृषः । नपात् । प्रनपादिति प्र०नपात् । कुण्ड०पाय्यः ॥
नि । अस्मिन् । दध्रे । आ । मनः ॥१३॥

वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम् ।
द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा ॥१४॥
वास्तोः । पते । ध्रुवा । स्थूणा । अंसत्रम् । सोम्यानाम् ॥
द्रप्सः । भेत्ता । पुराम् । शश्वतीनाम् । इन्द्रः । मुनीनाम् । सखा ॥१४॥

पृदाकुसानुर्यजतो गवेषण ऽएकः सन्नभि भूयसः ।
भूर्णिमश्वं नयत्तुजा पुरो गृभेन्द्रं सोमस्य पीतये ॥१५॥ (२४) [१२१]
पृदाकु०सानुः । यजतः । गो०एषणः । एकः । सन् ।
अभि । भूयसः ॥ भूर्णिम् । अश्वम् । नयत् ।
तुजा । पुरः । गृभा । इन्द्रम् । सोमस्य । पीतये ॥१५॥

## ( १८ )

२२ इरिम्बिठिः काण्वः । आदित्याः, ४, ५, ६ अदितिः, ८ अश्विनौ,
९ अग्निसूर्यानिलाः । उष्णिक् ।

इदं ह नूनमेषां सुम्नं भिक्षेत मर्त्यः ।
आदित्यानामपूर्व्यं सवीमनि ॥१॥
इदम् । ह । नूनम् । एषाम् । सुम्नम् । भिक्षेत । मर्त्यः ॥
आदित्यानाम् । अपूर्व्यम् । सवीमनि ॥१॥

अनर्वाणो ह्येषां पन्था ऽआदित्यानाम् ।
अदब्धाः सन्ति पायवः सुगेवृधः ॥२॥

अनर्वाणः । हि । एषाम् । पन्थाः । आदित्यानाम् ॥
अदब्धाः । सन्ति । पायवः । सुगे०वृधः ॥२॥

तत्सु नः सविता भगो वरुणो मित्रो ऽअर्यमा ।
शर्म यच्छन्तु सप्रथो यदीमहे ॥३॥
तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा ॥
शर्म । यच्छन्तु । स०प्रथः । यत् । ईमहे ॥३॥

देवेभिर्देव्यदितेऽरिष्टभर्मन्ना गहि ।
स्मत्सूरिभिः पुरुप्रिये सुशर्मभिः ॥४॥
देवेभिः । देवि । अदिते । अरिष्ट०भर्मन् । आ । गहि ॥
स्मत् । सूरि०भिः । पुरु०प्रिये । सुशर्म०भिः ॥४॥

ते हि पुत्रासो ऽअदितेर्विदुर्द्वेषांसि योतवे ।
अंहोश्चिदुरुचक्रयोऽनेहसः ॥५॥ ( २५ )
ते । हि । पुत्रासः । अदितेः । विदुः । द्वेषांसि । योतवे ॥
अंहोः । चित् । उरु०चक्रयः । अनेहसः ॥५॥

अदितिर्नो दिवा पशुमदितिर्नक्तमद्वयाः ।
अदितिः पात्वंहसः सदावृधा ॥६॥
अदितिः । नः । दिवा । पशुम् । अदितिः । नक्तम् । अद्वयाः ॥
अदितिः । पातु । अंहसः । सदा०वृधा ॥६॥

उत स्या नो दिवा मतिरदितिरूत्या गमत् ।
सा शंताति मयस्करदप स्रिधः ॥७॥

उत । स्या । नः । दिवा । मतिः । अदितिः । ऊत्या । आ । गमत् ॥
सा । शम्ऽताति । मयः । करत् । अप । स्रिधः ॥७॥

**उत त्या दैव्या भिषजा शं नः करतो ऽअश्विना ।**
**युयुयातामितो रपो ऽअप स्रिधः ॥८॥**

उत । त्या । दैव्या । भिषजा । शम् । नः । करतः । अश्विना ॥
युयुयाताम् । इतः । रपः । अप । स्रिधः ॥८॥

**शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः ।**
**शं वातो वात्वरपा ऽअप स्रिधः ॥९॥**

शम् । अग्निः । अग्निऽभिः । करत् । शम् । नः । तपतु । सूर्यः ॥
शम् । वातः । वातु । अरपाः । अप । स्रिधः ॥९॥

**अपामीवामप स्रिधमप सेधत दुर्मतिम् ।**
**आदित्यासो युयोतना नो ऽअंहसः ॥१०॥ ( २६ )**

अप । अमीवाम् । अप । स्रिधम् । अप । सेधत । दुःऽमतिम् ॥
आदित्यासः । युयोतन । नः । अंहसः ॥१०॥

**युयोता शरुमस्मदाँ ऽआदित्यास ऽउतामतिम् ।**
**ऋधग्द्वेषः कृणुत विश्ववेदसः ॥११॥**

युयोत । शरुम् । अस्मत् । आ । आदित्यासः । उत । अमतिम् ॥
ऋधक् । द्वेषः । कृणुत । विश्वऽवेदसः ॥११॥

**तत्सु नः शर्म यच्छतादित्या यन्मुमोचति ।**
**एनस्वन्तं चिदेनसः सुदानवः ॥१२॥**

तत् । सु । न॒ः । शर्म॑ । य॒च्छ॒त॒ । आदि॑त्याः । यत् । मुमो॑चति ॥
एन॑स्वन्तम् । चि॒त् । एन॑सः । सु॒ऽदा॒न॒वः॒ ॥१२॥

यो न॒ः कश्चि॒द्रिरि॑क्षति रक्षस्त्वेन॒ मर्त्य॑ः ।
स्वैः ष ऽएवैं रिरिषीष्ट॒ युर्जन॑ः ॥१३॥
यः । न॒ः । कः । चि॒त् । रिरि॑क्षति । र॒क्ष॒ःऽत्वेन॑ । मर्त्य॑ः ॥
स्वैः । सः । एवैः॑ । रि॒रि॒षी॒ष्ट॒ । युः । जन॑ः ॥१३॥

समित्तम॒घमश्नवद् दु॒ःशंसं॒ मर्त्यं॑ रि॒पुम् ।
यो ऽअ॒स्म॒त्रा दुर्हणावा॒ँ ऽउप॑ द्व॒युः ॥१४॥
सम् । इत् । तम् । अ॒घम् । अ॒श्न॒व॒त् । दु॒ःऽशंस॑म् । मर्त्य॑म् । रि॒पुम् ॥
यः । अ॒स्म॒ऽत्रा । दु॒ःऽहना॑वान् । उप॑ । द्व॒युः ॥१४॥

पा॒क॒त्रा स्थ॑न देवा हृ॒त्सु जानी॑थ॒ मर्त्य॑म् ।
उप॑ द्व॒युं चाद्व॑युं च वसवः ॥१५॥ ( २७ )
पा॒क॒ऽत्रा । स्थ॒न॒ । दे॒वा॒ः । हृ॒त्ऽसु । जा॒नी॒थ॒ । मर्त्य॑म् ॥
उप॑ । द्व॒युम् । च॒ । अद्व॑युम् । च॒ । व॒स॒व॒ः ॥१५॥

आ शर्म॒ पर्व॑ताना॒मोतापां वृणीमहे ।
द्यावा॑क्षामा॒रे ऽअ॒स्मद्रप॑स्कृतम् ॥१६॥
आ । शर्म॑ । पर्व॑तानाम् । आ । उ॒त । अ॒पाम् । वृ॒णी॒म॒हे॒ ॥
द्यावा॑क्षामा । आ॒रे । अ॒स्मत् । रप॑ः । कृ॒तम् ॥१६॥

ते नो॑ भ॒द्रेण॒ शर्म॑णा युष्माकं॑ ना॒वा व॑सवः ।
अति॒ विश्वा॑नि दु॒रिता पि॑पर्तन ॥१७॥

ते । नः । भद्रेण । शर्मणा । युष्माकम् । नावा । वसवः ॥
अति । विश्वानि । दुःऽइता । पिपर्तन ॥१७॥

**तुचे तनाय तत्सु नो द्राघीय ऽआयुर्जीवसे ।**
**आदित्यासः सुमहसः कृणोतन ॥१८॥**
तुचे । तनाय । तत् । सु । नः । द्राघीयः । आयुः । जीवसे ॥
आदित्यासः । सुऽमहसः । कृणोतन ॥१८॥

**यज्ञो हीळो वो ऽअन्तर ऽआदित्या ऽअस्ति मृळत ।**
**युष्मे ऽइद्वो ऽअपि ष्मसि सजात्ये ॥१९॥**
यज्ञः । हीळः । वः । अन्तरः । आदित्याः । अस्ति । मृळत ॥
युष्मे इति । इत् । वः । अपि । स्मसि । सऽजात्ये ॥१९॥

**बृहद्वरूथं मरुतां देवं त्रातारमश्विना ।**
**मित्रमीमहे वरुणं स्वस्तये ॥२०॥**
बृहत् । वरूथम् । मरुताम् । देवम् । त्रातरम् । अश्विना ॥
मित्रम् । ईमहे । वरुणम् । स्वस्तये ॥२०॥

**अनेहो मित्रार्यमन्नृवद्वरुण शंस्यम् ।**
**त्रिवरूथं मरुतो यन्त नश्छर्दिः ॥२१॥**
अनेहः । मित्र । अर्यमन् । नृऽवत् । वरुण । शंस्यम् ॥
त्रिऽवरूथम् । मरुतः । यन्त । नः । छर्दिः ॥२१॥

**ये चिद्धि मृत्युबन्धव ऽआदित्या मनवः स्मसि ।**
**प्र सू न ऽआयुर्जीवसे तिरेतन ॥२२॥ ( २८ )** [ १४३ ]

ये । चित् । हि । मृत्यु०बन्धवः । आदित्याः । मनवः । स्मसि ॥
प्र । सु । नः । आयुः । जीवसे । तिरेतन ॥२२॥

# ( १९ )

३७ सोभरिः काण्वः । अग्निः, ३४-३५ आदित्याः, ३६-३७ त्रसदस्युः पौरुकुत्स्यः ।
१-२६ प्रगाथः = (विषमा ककुप्, समा सतोबृहती), २७ द्विपदा विराट्,
२८-३३ प्रगाथः = (समा ककुप्, विषमा सतोबृहती), ३४ उष्णिक्,
३५ सतोबृहती, ३६ ककुप्, ३७ पङ्क्तिः ।

तं गूर्द्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
देवत्रा हव्यमोहिरे ॥१॥
तम् । गूर्धय । स्वः॰नरम् । देवासः । देवम् । अरतिम् । दधन्विरे ॥
देव०त्रा । हव्यम् । आ । ऊहिरे ॥१॥

विभूतरातिं विप्र चित्रशोचिषमग्निमीळिष्व यन्तुरम् ।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥२॥
विभूत०रातिम् । विप्र । चित्र०शोचिषम् । अग्निम् ।
ईळिष्व । यन्तुरम् ॥ अस्य । मेधस्य । सोम्यस्य ।
सोभरे । प्र । ईम् । अध्वराय । पूर्व्यम् ॥२॥

यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
अस्य यज्ञस्य सुक्रतुम् ॥३॥
यजिष्ठम् । त्वा । ववृमहे । देवम् । देव०त्रा । होतारम् । अमर्त्यम् ॥
अस्य । यज्ञस्य । सु०क्रतुम् ॥३॥

ऊर्जो नपातं सुभगं सुदीदितिमग्निं श्रेष्ठशोचिषम् ।
स नो मित्रस्य वरुणस्य सो ऽअपामा सुम्नं यक्षते दिवि ॥४॥

ऊर्जः । नपातम् । सु०भगम् । सु०दीदितिम् । अग्निम् ।
श्रेष्ठ०शोचिषम् ॥ सः । नः । मित्रस्य । वरुणस्य ।
सः । अपाम् । आ । सुम्नम् । यक्षते । दिवि ॥४॥

**यः समिधा य ऽआहुती यो वेदेन ददाश मर्त्तो ऽअग्नये ।**
**यो नमसा स्वध्वरः ॥५॥ ( २९ )**
यः । सम्०इधा । यः । आ०हुती । यः । वेदेन । ददाश । मर्त्तः । अग्नये ॥
यः । नमसा । सु०अध्वरः ॥५॥

**तस्येदर्वन्तो रंहयन्त ऽआशवस्तस्य द्युम्नितमं यशः ।**
**न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥६॥**
तस्य । इत् । अर्वन्तः । रंहयन्ते । आशवः । तस्य ।
द्युम्नि०तमम् । यशः ॥ न । तम् । अंहः । देव०कृतम् ।
कुतः । चन । न । मर्त्य०कृतम् । नशत् ॥६॥

**स्वग्नयो वो ऽअग्निभिः स्याम सूनो सहस ऽऊर्जां पते ।**
**सुवीरस्त्वमस्मयुः ॥७॥**
सु०अग्नयः । वः । अग्नि०भिः । स्याम । सूनो इति । सहसः । ऊर्जाम् । पते ॥
सु०वीरः । त्वम् । अस्म०युः ॥७॥

**प्रशंसमानो ऽअतिथिर्न मित्रियोऽग्नी रथो न वेद्यः ।**
**त्वे क्षेमासो ऽअपि सन्ति साधवस्त्वं राजा रयीणाम् ॥८॥**
प्र०शंसमानः । अतिथिः । न । मित्रियः । अग्निः ।
रथः । न । वेद्यः ॥ त्वे इति । क्षेमासः । अपि ।
सन्ति । साधवः । त्वम् । राजा । रयीणाम् ॥८॥

सो ऽअद्धा दाश्वध्वरोऽग्ने मर्त्तः सुभग स प्रशंस्यः ।
स धीभिरस्तु सनिता ॥९॥
सः । अद्धा । दाशु॰अध्वरः । अग्ने । मर्त्तः । सु॰भग । सः । प्र॰शंस्यः ॥
सः । धीभिः । अस्तु । सनिता ॥९॥

यस्य त्वमूर्ध्वो ऽअध्वराय तिष्ठसि क्षयद्वीरः स साधते ।
सो ऽअर्वद्भिः सनिता स विपन्युभिः स शूरैः सनिता कृतम् ॥१०॥ ( ३० )
यस्य । त्वम् । ऊर्ध्वः । अध्वराय । तिष्ठसि ।
क्षयत्॰वीरः । सः । साधते ॥ सः । अर्वत्॰भिः । सनिता ।
सः । विपन्यु॰भिः । सः । शूरैः । सनिता । कृतम् ॥१०॥

यस्याग्निर्वपुर्गृहे स्तोमं चनो दधीत विश्ववार्यः ।
हव्या वा वेविषद्विषः ॥११॥
यस्य । अग्निः । वपुः । गृहे । स्तोमम् ।
चनः । दधीत । विश्व॰वार्यः ॥
हव्या । वा । वेविषत् । विषः ॥११॥

विप्रस्य वा स्तुवतः सहसो यहो मक्षूतमस्य रातिषु ।
अवोदेवमुपरिमर्त्यं कृधि वसो विविदुषो वचः ॥१२॥
विप्रस्य । वा । स्तुवतः । सहसः । यहो इति ।
मक्षु॰तमस्य । रातिषु ॥ अवः॰देवम् । उपरि॰मर्त्यम् ।
कृधि । वसो इति । विविदुषः । वचः ॥१२॥

यो ऽअग्निं हव्यदातिभिर्नमोभिर्वा सुदक्षमाविवासति ।
गिरा वाजिरशोचिषम् ॥१३॥

यः । अग्निम् । हव्यदांति०भिः । नमः२भिः ।
वा । सु०दक्षम् । आ०विवासति ॥
गिरा । वा । अजिर०शोचिषम् ॥१३॥

**समिधा यो निशिती दाशददितिं धार्मभिरस्य मर्त्यः ।**
**विश्वेत्स धीभिः सुभगो जनाँ ऽअति द्युम्नैरुद्गइव तारिषत् ॥१४॥**
सम्०इधा । यः । नि०शिती । दाशत् । अदितिम् । धाम०भिः ।
अस्य । मर्त्यः ॥ विश्वा । इत् । सः । धी०भिः । सु०भगः ।
जनान् । अति । द्युम्नैः । उद्गःऽइव । तारिषत् ॥१४॥

**तदग्ने द्युम्नमा भर यत्सासहत्सदने कं चिदत्रिणम् ।**
**मन्युं जनस्य दूढ्यः ॥१५॥ ( ३१ )**
तत् । अग्ने । द्युम्नम् । आ । भर । यत् ।
ससहत् । सदने । कम् । चित् । अत्रिणम् ॥
मन्युम् । जनस्य । दुः२ध्यः ॥१५॥

**येन चष्टे वरुणो मित्रो ऽअर्यमा येन नासत्या भगः ।**
**वयं तत्ते शवसा गातुवित्तमा ऽइन्द्रत्वोता विधेमहि ॥१६॥**
येन । चष्टे । वरुणः । मित्रः । अर्यमा । येन ।
नासत्या । भगः ॥ वयम् । तत् । ते । शवसा ।
गातुवित्०तमाः । इन्द्रत्वा०ऊताः । विधेमहि ॥१६॥

**ते घेदग्ने स्वाध्योई ये त्वा विप्र निदधिरे नृचक्षसम् ।**
**विप्रासो देव सुक्रतुम् ॥१७॥**
ते । घ । इत् । अग्ने । सु०आध्यः । ये । त्वा । विप्र । नि०दधिरे । नृ०चक्षसम् ॥
विप्रासः । देव । सु०क्रतुम् ॥१७॥

त ऽइद्वेदिं सुभग त ऽआहुतिं ते सोतुं चक्रिरे दिवि ।
त ऽइद्वाजेभिर्जिग्युर्महद्धनं ये त्वे कामं न्येरिरे ॥१८॥
ते । इत् । वेदिम् । सु०भग । ते । आ०हुतिम् । ते ।
सोतुम् । चक्रिरे । दिवि ॥ ते । इत् । वाजेभिः । जिग्युः ।
महत् । धनम् । ये । त्वे इति । कामम् । नि०एरिरे ॥१८॥

भद्रो नो ऽअग्निराहुतो भद्रा रातिः सुभग भद्रो ऽअध्वरः ।
भद्रा ऽउत प्रशस्तयः ॥१९॥
भद्रः । नः । अग्निः । आ०हुतः । भद्रा ।
रातिः । सु०भग । भद्रः । अध्वरः ॥
भद्राः । उत । प्र०शस्तयः ॥१९॥

भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहः ।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते ऽअभिष्टिभिः ॥२०॥ (३२)
भद्रम् । मनः । कृणुष्व । वृत्र०तूर्ये । येन ।
समत्०सु । ससहः ॥ अव । स्थिरा । तनुहि ।
भूरि । शर्धताम् । वनेम । ते । अभिष्टि०भिः ॥२०॥

ईळे गिरा मनुर्हितं यं देवा दूतमरतिं न्येरिरे ।
यजिष्ठं हव्यवाहनम् ॥२१॥
इळे । गिरा । मनुःऽहितम् । यम् । देवाः । दूतम् । अरतिम् । नि०एरिरे ॥
यजिष्ठम् । हव्य०वाहनम् ॥२१॥

तिग्मजम्भाय तरुणाय राजते प्रयो गायस्यग्नये ।
यः पिंशते सूनृताभिः सुवीर्यमग्निर्घृतेभिराहुतः ॥२२॥

तिग्म०जम्भाय । तरुणाय । राजते । प्रयः ।
गायसि । अग्नये ॥ यः । पिंशते । सूनृताभिः ।
सु०वीर्यम् । अग्निः । घृतेभिः । आ०हुतः ॥२२॥

**यदीं घृतेभिराहुतो वाशीमग्निर्भरत ऽउच्चावं च ।**
**असुरइव निर्णिजम् ॥२३॥**
यदि । घृतेभिः । आ०हुतः । वाशीम् । अग्निः । भरते । उत् । च । अव । च ॥
असुरःऽइव । निःऽनिर्जम् ॥२३॥

**यो हव्यान्यैरयता मनुर्हितो देव ऽआसा सुगन्धिना ।**
**विवासते वार्याणि स्वध्वरो होता देवो ऽअमर्त्त्यः ॥२४॥**
यः । हव्यानि । ऐरयत । मनुःऽहितः । देवः ।
आसा । सु०गन्धिना ॥ विवासते । वार्याणि ।
सु०अध्वरः । होता । देवः । अमर्त्त्यः ॥२४॥

**यदग्ने मर्त्त्यस्त्वं स्यामहं मित्रमहो ऽअमर्त्त्यः ।**
**सहसः सूनवाहुत ॥२५॥ ( ३३ )**
यत् । अग्ने । मर्त्त्यः । त्वम् । स्याम् । अहम् । मित्र०महः । अमर्त्त्यः ॥
सहसः । सूनो इति । आ०हुत ॥२५॥

**न त्वा रासीयाभिशस्तये वसो न पापत्वाय सन्त्य ।**
**न मे स्तोतामतीवा न दुर्हितः स्यादग्ने न पापया ॥२६॥**
न । त्वा । रासीय । अभि०शस्तये । वसो इति । न ।
पाप०त्वाय । सन्त्य ॥ न । मे । स्तोता । अमति०वा ।
न । दुःऽहितः । स्यात् । अग्ने । न । पापया ॥२६॥

**पितुर्न पुत्रः सुभृतो दुरोण ऽआ देवाँ ऽएतु प्र णो हविः ॥२७॥**

पितुः । न । पुत्रः । सुऽभृतः । दुरोणे । आ ।
देवान् । एतु । प्र । नः । हविः ॥२७॥

**तवाहमग्न ऽऊतिभिर्नेदिष्ठाभिः सचेय जोषमा वसो ।**
**सदा देवस्य मर्त्यः ॥२८॥**

तव । अहम् । अग्ने । ऊतिऽभिः । नेदिष्ठाभिः ।
सचेय । जोषम् । आ । वसो इति ॥
सदा । देवस्य । मर्त्यः ॥२८॥

**तव क्रत्वा सनेयं तव रातिभिरग्ने तव प्रशस्तिभिः ।**
**त्वामिदाहुः प्रमतिं वसो ममाग्ने हर्षस्व दातवे ॥२९॥**

तव । क्रत्वा । सनेयम् । तव । रातिऽभिः । अग्ने ।
तव । प्रशस्तिऽभिः ॥ त्वाम् । इत् । आहुः । प्रऽमतिम् ।
वसो इति । मम । अग्ने । हर्षस्व । दातवे ॥२९॥

**प्र सो ऽअग्ने तवोतिभिः सुवीराभिस्तिरते वाजभर्मभिः ।**
**यस्य त्वं सख्यमावरः ॥३०॥ (३४)**

प्र । सः । अग्ने । तव । ऊतिऽभिः । सुऽवीराभिः । तिरते । वाजभर्मऽभिः ॥
यस्य । त्वम् । सख्यम् । आऽवरः ॥३०॥

**तव द्रप्सो नीलवान्वाश ऽऋत्विय ऽइन्धानः सिष्णवा ददे ।**
**त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥३१॥**

तव । द्रप्सः । नीलऽवान् । वाशः । ऋत्वियः । इन्धानः ।
सिष्णो इति । आ । ददे ॥ त्वम् । महीनाम् । उषसाम् ।
असि । प्रियः । क्षपः । वस्तुषु । राजसि ॥३१॥

**तमागन्म सोभरयः सहस्रमुष्कं स्वभिष्टिमवसे ।**

**सम्राजं त्रासदस्यवम् ॥३२॥**

तम् । आ । अगन्म । सोभरयः । सहस्र०मुष्कम् । सु०अभिष्टिम् । अवसे ॥

सम्०राजन् । त्रासदस्यवम् ॥३२॥

**यस्य ते ऽअग्ने ऽअन्ये ऽअग्नय ऽउपक्षितो वयाइव ।**

**विपो न द्युम्ना नि युवे जनानां तव क्षत्राणि वर्द्धयन् ॥३३॥**

यस्य । ते । अग्ने । अन्ये । अग्नयः । उप०क्षितः ।

वयाःऽइव ॥ विपः । न । द्युम्ना । नि । युवे ।

जनानाम् । तव । क्षत्राणि । वर्द्धयन् ॥३३॥

**यमादित्यासो ऽअद्रुहः पारं नयथ मर्त्त्यम् ।**

**मघोनां विश्वेषां सुदानवः ॥३४॥**

यम् । आदित्यासः । अद्रुहः । पारम् । नयथ । मर्त्त्यम् ॥

मघोनाम् । विश्वेषाम् । सु०दानवः ॥३४॥

**यूयं राजानः कं चिच्चर्षणीसहः क्षयन्तं मानुषाँ ऽअनु ।**

**वयं ते वो वरुण मित्रार्यमन्त्स्यामेदृतस्य रथ्यः ॥३५॥**

यूयम् । राजानः । कम् । चित् । चर्षणि०सहः । क्षयन्तम् ।

मानुषान् । अनु ॥ वयम् । ते । वः । वरुण । मित्र ।

अर्यमन् । स्याम । इत् । ऋतस्य । रथ्यः ॥३५॥

**अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम् ।**

**मंहिष्ठो ऽअर्यः सत्पतिः ॥३६॥**

अदात् । मे । पौरु०कुत्स्यः । पञ्चाशतम् । त्रसदस्युः । वधूनाम् ॥

मंहिष्ठः । अर्यः । सत्०पतिः ॥३६॥

उत मे प्रयियोर्वयियोः सुवास्त्वा ऽअधि तुग्वनि ।
तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः ॥३७॥ ( ३५ ) [ १८० ]
उत । मे । प्रयियोः । वयियोः । सु०वास्त्वाः । अधि ।
तुग्वनि ॥ तिसृणाम् । सप्ततीनाम् । श्यावः ।
प्र०नेता । भुवत् । वसुः । दियानाम् । पतिः ॥३७॥

## ( २० )

२६ सोमरिः काण्वः। मरुतः। प्रगाथः = ( विषमा ककुप्, समा सतोबृहती ), १४ सतो विराट्।

आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थाता समन्यवः ।
स्थिरा चिन्नमयिष्णवः ॥१॥
आ । गन्ता । मा । रिषण्यत । प्र०स्थावानः । मा । अप । स्थात । स०मन्यवः ॥
स्थिरा । चित् । नमयिष्णवः ॥१॥

वीळुपविभिर्मरुत ऽऋभुक्षण ऽआ रुद्रासः सुदीतिभिः ।
इषा नो ऽअद्या गता पुरुस्पृहो यज्ञमा सोभरीयवः ॥२॥
वीळुपवि०भिः । मरुतः । ऋभुक्षणः । आ । रुद्रासः । सुदीति०भिः ॥
इषा । नः । अद्य । आ । गत । पुरु०स्पृहः । यज्ञम् । आ । सोभरी०यवः ॥२॥

विद्मा हि रुद्रियाणां शुष्ममुग्रं मरुतां शिमीवताम् ।
विष्णोरेषस्य मीळ्हुषाम् ॥३॥
विद्म । हि । रुद्रियाणाम् । शुष्मम् । उग्रम् । मरुताम् । शमी०वताम् ॥
विष्णोः । एषस्य । मीळ्हुषाम् ॥३॥

वि द्वीपानि पापतन्तिष्ठद्दुच्छुनोभे युजन्त रोदसी ।
प्र धन्वान्यैरत शुभ्रखादयो यदेजथ स्वभानवः ॥४॥

वि । द्वीपानि । पापतन् । तिष्ठत् । दुच्छुना । उभे इति ।
युजन्त । रोदसी इति ॥ प्र । धन्वानि । ऐरत ।
शुभ्र०खादयः । यत् । एजथ । स्व०भानवः ॥४॥

**अच्युता चिद्वो ऽअज्मन्ना नानदति पर्वतासो वनस्पतिः ।**
**भूमिर्यामेषु रेजते ॥५॥ ( ३६ )**
अच्युता । चित् । वः । अज्मन् । आ । नानदति । पर्वतासः । वनस्पतिः ॥
भूमिः । यामेषु । रेजते ॥५॥

**अमाय वो मरुतो यातवे द्यौर्जिहीत ऽउत्तरा बृहत् ।**
**यत्रा नरो देदिशते तनूष्वा त्वक्षांसि बाह्वोजसः ॥६॥**
अमाय । वः । मरुतः । यातवे । द्यौः । जिहीते ।
उत्०तरा । बृहत् ॥ यत्र । नरः । देदिशते ।
तनूषु । आ । त्वक्षांसि । बहु०ओजसः ॥६॥

**स्वधामनु श्रियं नरो महि त्वेषा ऽअमवन्तो वृषप्सवः ।**
**वहन्ते ऽअह्रुतप्सवः ॥७॥**
स्वधाम् । अनु । श्रियम् । नरः । महि । त्वेषाः । अम०वन्तः । वृष०प्सवः ॥
वहन्ते । अह्रुत०प्सवः ॥७॥

**गोभिर्वाणो ऽअज्यते सोभरीणां रथे कोशे हिरण्यये ।**
**गोबन्धवः सुजातास ऽइषे भुजे महान्तो नः स्परसे नु ॥८॥**
गोभिः । वाणः । अज्यते । सोभरीणाम् । रथे ।
कोशे । हिरण्यये ॥ गो०बन्धवः । सु०जातासः ।
इषे । भुजे । महान्तः । नः । स्परसे । नु ॥८॥

प्रति वो वृषदञ्जयो वृष्णे शर्धाय मारुताय भरध्वम् ।
हव्या वृषप्रयाव्णे ॥९॥
प्रति । वः । वृषत्०अञ्जयः । वृष्णे । शर्धाय । मारुताय । भरध्वम् ॥
हव्या । वृष०प्रयाव्णे ॥९॥

वृषणश्वेन मरुतो वृषप्सुना रथेन वृषनाभिना ।
आ श्येनासो न पक्षिणो वृथा नरो हव्या नो वीतये गत ॥१०॥ (३७)
वृषणश्वेन । मरुतः । वृष०प्सुना । रथेन ।
वृष०नाभिना ॥ आ । श्येनासः । न । पक्षिणः ।
वृथा । नरः । हव्या । नः । वीतये । गत ॥१०॥

समानमञ्ज्येषां वि भ्राजन्ते रुक्मासोऽअधि बाहुषु ।
दविद्युतत्यृष्टयः ॥११॥
समानम् । अञ्जि । एषाम् । वि । भ्राजन्ते । रुक्मासः । अधि । बाहुषु ॥
दविद्युतति । ऋष्टयः ॥११॥

त ऽउग्रासो वृषण ऽउग्रबाहवो नकिष्टनूषु येतिरे ।
स्थिरा धन्वान्यायुधा रथेषु वोऽनीकेष्वधि श्रियः ॥१२॥
ते । उग्रासः । वृषणः । उग्र०बाहवः । नकिः ।
तनूषु । येतिरे ॥ स्थिरा । धन्वानि । आ०युधा ।
रथेषु । वः । अनीकेषु । अधि । श्रियः ॥१२॥

येषामर्णो न सप्रथो नाम त्वेषं शश्वतामेकमिद्भुजे ।
वयो न पित्र्यं सहः ॥१३॥
येषाम् । अर्णः । न । स०प्रथः । नाम । त्वेषम् । शश्वताम् । एकम् । इत् । भुजे ॥
वयः । न । पित्र्यम् । सहः ॥१३॥

तान्व॑न्दस्व म॒रु॒त॒स्ताँ ऽउप॑ स्तुहि॒ तेषां॒ हि धुनी॑नाम् ।
अ॒राणां॒ न च॑र॒मस्तदे॑षां दा॒ना म॒ह्ना तदे॑षाम् ॥१४॥
ता॒न् । व॒न्द॒स्व॒ । म॒रुत॑ः । तान् । उप॑ । स्तु॒हि॒ । तेषा॑म् । हि । धुनी॑नाम् ॥
अ॒राणा॑म् । न । च॒र॒मः । तत् । ए॒षा॒म् । दा॒ना । म॒ह्ना । तत् । ए॒षा॒म् ॥१४॥

सु॒भ॒गः॒ स व॑ ऽऊ॒तिष्वास॒ पूर्वा॑सु मरुतो॒ व्यु॑ष्टिषु ।
यो वा॑ नू॒नमु॒तास॑ति ॥१५॥ ( ३८ )
सु॒ऽभग॑ः । सः । व॒ः । ऊ॒तिषु॑ । आस॑ । पूर्वा॑सु । म॒रु॒त॒ः । वि॒ऽउ॑ष्टिषु ॥
यः । वा॒ । नू॒नम् । उ॒त । अस॑ति ॥१५॥

यस्य॑ वा यू॒यं प्रति॑ वा॒जिनो॑ नर॒ ऽआ ह॒व्या वी॒तये॑ ग॒थ ।
अ॒भि षु द्यु॒म्नैरु॒त वाज॑सातिभिः सु॒म्ना वो॑ धूतयो नशत् ॥१६॥
यस्य॑ । वा॒ । यू॒यम् । प्रति॑ । वा॒जिन॑ः । न॒र॒ः । आ ।
ह॒व्या । वी॒तये॑ । ग॒थ ॥ अ॒भि । सः । द्यु॒म्नैः । उ॒त ।
वाज॑साति॒ऽभिः । सु॒म्ना । व॒ः । धू॒त॒य॒ः । न॒श॒त् ॥१६॥

यथा॑ रु॒द्रस्य॑ सू॒नवो॑ दि॒वो वश॒न्त्यसु॑रस्य वे॒धस॑ः ।
युवा॑न॒स्तथेद॑सत् ॥१७॥
यथा॑ । रु॒द्रस्य॑ । सू॒नव॑ः । दि॒वः । वश॑न्ति । असु॑रस्य । वे॒धस॑ः ॥
युवा॑नः । तथा॑ । इत् । अ॒स॒त् ॥१७॥

ये चार्ह॑न्ति म॒रुत॑ः सु॒दान॑वः स्मन्मी॒ळ्हुष॒श्चर॑न्ति॒ ये ।
अत॑श्चि॒दा न॒ ऽउप॒ वस्य॑सा हृ॒दा युवा॑न॒ ऽआ व॑वृध्वम् ॥१८॥
ये । च॒ । अर्ह॑न्ति । म॒रुत॑ः । सु॒ऽदान॑वः । स्मत् ।
मी॒ळ्हुष॑ः । चर॑न्ति । ये ॥ अत॑ः । चि॒त् । आ । न॒ः ।
उप॑ । वस्य॑सा । हृ॒दा । युवा॑नः । आ । व॒वृ॒ध्व॒म् ॥१८॥

**यूने ऽऊ षु नविष्ठया वृष्णः पावकाँ ऽअभि सोभरे गिरा ।**

**गाय गाइव चर्कृषत् ॥१९॥**

यूने । ऊँ इति । सु । नविष्ठया । वृष्णः । पावकान् । अभि । सोभरे । गिरा ॥

गाय । गाःऽइव । चर्कृषत् ॥१९॥

**साहा ये सन्ति मुष्टिहेव हव्यो विश्वासु पृत्सु होतृषु ।**

**वृष्णश्चन्द्रान्न सुश्रवस्तमान्गिरा वन्दस्व मरुतो ऽअह ॥२०॥ (३९)**

सहाः । ये । सन्ति । मुष्टिहाऽइव । हव्यः । विश्वासु ।

पृत्०सु । होतृषु ॥ वृष्णः । चन्द्रान् । न । सुश्रवः२तमान् ।

गिरा । वन्दस्व । मरुतः । अह ॥२०॥

**गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः ।**

**रिहते ककुभो मिथः ॥२१॥**

गावः । चित् । घ । स०मन्यवः । स०जात्येन । मरुतः । स०बन्धवः ॥

रिहते । ककुभः । मिथः ॥२१॥

**मर्त्तश्चिद्वो नृतवो रुक्मवक्षस ऽउप भ्रातृत्वमायति ।**

**अधि नो गात मरुतः सदा हि व ऽआपित्वमस्ति निध्रुवि ॥२२॥**

मर्त्तः । चित् । वः । नृतवः । रुक्म०वक्षसः । उप ।

भ्रातृ०त्वम् । आ । अयति ॥ अधि । नः । गात । मरुतः ।

सदा । हि । वः । आपि०त्वम् । अस्ति । नि०ध्रुवि ॥२२॥

**मरुतो मारुतस्य न ऽआ भेषजस्य वहता सुदानवः ।**

**यूयं सखायः सप्तयः ॥२३॥**

मरुतः । मारुतस्य । नः । आ । भेषजस्य । वहत । सु०दानवः ॥

यूयम् । सखायः । सप्तयः ॥२३॥

**याभिः सिन्धुमवथ याभिस्तूर्वथ याभिर्दशस्यथा क्रिविम् ।**
**मयो नो भूतोतिभिर्मयोभुवः शिवाभिरसचद्विषः ॥२४॥**

याभिः । सिन्धुम् । अवथ । याभिः । तूर्वथ ।
याभिः । दशस्यथ । क्रिविम् ॥ मयः । नः । भूत ।
ऊतिऽभिः । मयःऽभुवः । शिवाभिः । असचऽद्विषः ॥२४॥

**यत्सिन्धौ यदसिक्न्यां यत्समुद्रेषु मरुतः सुबर्हिषः ।**
**यत्पर्वतेषु भेषजम् ॥२५॥**

यत् । सिन्धौ । यत् । असिक्न्याम् । यत् । समुद्रेषु । मरुतः । सुऽबर्हिषः ॥
यत् । पर्वतेषु । भेषजम् ॥२५॥

**विश्वं पश्यन्तो बिभृथा तनूष्वा तेना नो ऽअधि वोचत ।**
**क्षमा रपो मरुत ऽआतुरस्य न ऽइष्कर्त्ता विह्रुतं पुनः ॥२६॥ (४०) [ २०६ ]**

विश्वम् । पश्यन्तः । बिभृथ । तनूषु । आ । तेन । नः । अधि । वोचत ॥
क्षमा । रपः । मरुतः । आतुरस्य । नः । इष्कर्त्त । विऽह्रुतम् । पुनरिति ॥२६॥

**॥ इति षष्ठाष्टके प्रथमोऽध्यायः ॥ १ ॥**

# प्रथमाध्यायस्य मन्त्रवर्गानुक्रमणी

य ऽइन्द्र सोमपातमो ॥१॥

यो नो देवः परावतः ॥२॥

गर्भो यज्ञस्य देवयुः ॥३॥

यत्सोममिन्द्र विष्णवि ॥४॥

महीरस्य प्रणीतयः ॥ ५॥

यदा वृत्रं नदीवृतं ॥६॥

इन्द्रः सुतेषु सोमेषु ॥७॥

स्तोता यत्ते विचर्षणि ॥८॥

तूतुजानो महेमते ॥९॥

इन्द्रं वर्द्धन्तु नो गिर ॥१०॥

यदि मे सख्यमावर ॥११॥

इन्द्र त्वमवितेदसी ॥१२॥

वृषायमिन्द्र ते रथ ॥१३॥

यदिन्द्राहं यथा त्वमी ॥१४॥

वावृधानस्य ते वयं ॥१५॥

त्वं हि स्तोमवर्द्धन ॥१६॥

तम्वभि प्र गायत ॥१७॥

तदद्या चित्त ऽउक्थिनो ॥१८॥

सत्रा त्वं पुरुष्टुतँ ॥१९॥

प्र सम्राजं चर्षणीना ॥२०॥

इन्द्रो ब्रह्मेन्द्र ऋषि ॥२१॥

आ याहि सुषुमा ॥२२॥

स्वादुष्टे ऽअस्तु संसुदे ॥२३॥

अयं त ऽइन्द्र सोमो ॥२४॥

इदं ह नूनमेषां ॥२५॥

अदितिर्नो दिवा पशुम ॥२६॥

युयोता शरुमस्मदाँ ॥२७॥

आ शर्म पर्वताना ॥२८॥

तं गूर्द्धया स्वर्णरं देवासो ॥२९॥

तस्येदर्वन्तो रंहयन्त ॥३०॥

यस्याग्निर्वपुर्गृहे ॥३१॥

येन चष्टे वरुणो ॥३२॥

ईळे गिरा मनुर्हितं ॥३३॥

न त्वा रासीयाभिशस्तये ॥३४॥

तव द्रप्सो नीलवान्वाश ॥३५॥

आ गन्ता मा रिषण्यत ॥३६॥

अमाय वो मरुतो यातवे ॥३७॥

समानमज्ज्येषां ॥३८॥

यस्य वा यूयं प्रति वाजिनो ॥३९॥

गावश्चिद्धा समन्यवः ॥४०॥

**॥ इति शाङ्खायनसंहितायां षष्ठाष्टके प्रथमोऽध्यायः ॥**

**( प्रथमाध्याये वर्गाः ४०, सूक्तानि ९, ऋचः २०६ )**

# ॥ षष्ठाष्टके द्वितीयोऽध्यायः॥

**अथ द्वितीयोऽध्यायः॥२॥ वर्गाः १-४० ]** [ अष्टममण्डले सूक्तानि २१-३१ ]

## ( २१ ) [ अथ चतुर्थोऽनुवाकः ॥४॥ सूक्तानि २१-३०

१८ सोमरिः काण्वः । इन्द्रः, १७-१८ चित्रः । प्रगाथः = ( विषमा ककुप्, समा सतोबृहती )

**वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।**
**वाजे चित्रं हवामहे ॥१॥**

वयम् । ऊँ इति । त्वाम् । अपूर्व्य । स्थूरम् । न । कत् । चित् ।
भरन्तः । अवस्यवः ॥ वाजे । चित्रम् । हवामहे ॥१॥

**उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।**
**त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥२॥**

उप । त्वा । कर्मन् । ऊतये । सः । नः । युवा ।
उग्रः । चकाम । यः । धृषत् ॥ त्वाम् । इत् । हि ।
अवितारम् । ववृमहे । सखायः । इन्द्र । सानसिम् ॥२॥

**आ याहीम इन्दवोऽश्वपते गोपत उर्वरापते ।**
**सोमं सोमपते पिब ॥३॥**

आ । याहि । इमे । इन्दवः । अश्व०पते । गो०पते । उर्वरा०पते ॥
सोमम् । सोम०पते । पिब ॥३॥

**वयं हि त्वा बन्धुमन्तमबन्धवो विप्रास इन्द्र येमिम ।**
**या ते धामानि वृषभ तेभिरा गहि विश्वेभिः सोमपीतये ॥४॥**

वयम् । हि । त्वा । बन्धु०मन्तम् । अबन्धवः ।
विप्रासः । इन्द्र । येमिम ॥ या । ते । धामानि । वृषभ ।
तेभिः । आ । गहि । विश्वेभिः । सोम०पीतये ॥४॥

सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे ।
अभि त्वामिन्द्र नोनुमः ॥५॥ (१)
सीदन्तः । ते । वयः । यथा । गो॰श्रीते । मधौ । मदिरे । विवक्षणे ॥
अभि । त्वाम् । इन्द्र । नोनुमः ॥५॥

अच्छा च त्वैना नमसा वदामसि किं मुहुश्चिद्वि दीधयः ।
सन्ति कामासो हरिवो ददिष्ट्वं स्मो वयं सन्ति नो धियः ॥६॥
अच्छ । च । त्वा । एना । नमसा । वदामसि । किम् ।
मुहुः । चित् । वि । दीधयः ॥ सन्ति । कामासः । हरि॰वः ।
ददिः । त्वम् । स्मः । वयम् । सन्ति । नः । धियः ॥६॥

नूत्ना ऽइदिन्द्र ते वयमूती ऽअभूम नहि नू ते ऽअद्रिवः ।
विद्मा पुरा परीणसः ॥७॥
नूत्नाः । इत् । इन्द्र । ते । वयम् । ऊती । अभूम । नहि ।
नु । ते । अद्रि॰वः ॥ विद्म । पुरा । परीणसः ॥७॥

विद्मा सखित्वमुत शूर भोज्य१मा ते ता वज्रिन्नीमहे ।
उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति ॥८॥
विद्म । सखि॰त्वम् । उत । शूर । भोज्यम् । आ । ते ।
ता । वज्रिन् । ईमहे ॥ उतो इति । समस्मिन् । आ ।
शिशीहि । नः । वसो इति । वाजे । सु॰शिप्र । गो॰मति ॥८॥

यो न ऽइदमिदं पुरा प्र वस्य ऽआनिनाय तमु वः स्तुषे ।
सखाय ऽइन्द्रमूतये ॥९॥
यः । नः । इदम्॰इदम् । पुरा । प्र । वस्यः । आ॰निनाय । तम् ।
ऊँ इति । वः । स्तुषे ॥ सखायः । इन्द्रम् । ऊतये॥९॥

**हर्यश्वं सत्पतिं चर्षणीसहं स हि ष्मा यो ऽअमन्दत ।**

**आ तु नः स वयति गव्यमश्व्यं स्तोतृभ्यो मघवा शतम् ॥१०॥ ( २ )**

हरिं०अश्वम् । सत्०पतिम् । चर्षणि०सहम् । सः । हि ।
स्म । यः । अमन्दत ॥ आ । तु । नः । सः । वयति ।
गव्यम् । अश्व्यम् । स्तोतृ०भ्यः । मघ०वा । शतम् ॥१०॥

**त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि ।**

**संस्थे जनस्य गोमतः ॥११॥**

त्वया । ह । स्वित् । युजा । वयम् । प्रति । श्वसन्तम् ।
वृषभ । ब्रुवीमहि ॥ सम्०स्थे । जनस्य । गो०मतः ॥११॥

**जयेम कारे पुरुहूत कारिणोऽभि तिष्ठेम दूढ्यः ।**

**नृभिर्वृत्रं हन्याम शूशुयाम चावेरिन्द्र प्र णो धियः ॥१२॥**

जयेम । कारे । पुरु०हूत । कारिणः । अभि ।
तिष्ठेम । दुः२ध्यः ॥ नृ०भिः । वृत्रम् । हन्याम ।
शूशुयाम । च । अवेः । इन्द्र । प्र । नः । धियः ॥१२॥

**अभ्रातृव्यो ऽअना त्वमनापिरिन्द्र जनुषा सनादसि ।**

**युधेदापित्वमिच्छसे ॥१३॥**

अभ्रातृव्यः । अना । त्वम् । अनापिः । इन्द्र । जनुषा ।
सनात् । असि ॥ युधा । इत् । आपि०त्वम् । इच्छसे ॥१३॥

**नकी रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः ।**

**यदा कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥१४॥**

नकिः । रेवन्तम् । सख्याय । विन्दसे । पीयन्ति । ते । सुराश्वः ॥
यदा । कृणोषि । नदनुम् । सम् । ऊहसि । आत् । इत् । पिताऽइव । हूयसे॥१४॥

मा ते॑ ऽअमा॒जुरो॑ यथा मू॒रास॑ ऽइन्द्र स॒ख्ये त्वाव॑तः ।

नि ष॑दाम॒ सचा॑ सु॒ते ॥१५॥ (३)

मा । ते॒ । अ॒मा॒ऽजुरः॑ । य॒था । मू॒रासः॑ । इ॒न्द्र॒ ।

स॒ख्ये । त्वाऽव॑तः ॥ नि । स॒दा॒म॒ । सचा॑ । सु॒ते ॥१५॥

मा ते॑ गोदत्र॒ निर॑राम॒ राध॑स॒ ऽइन्द्र॒ मा ते॑ गृहामहि ।

दृ॒ळ्हा चि॑द॒र्यः प्र मृ॑शा॒भ्या भ॒र न ते॑ दा॒मान॑ ऽआ॒दभे॑ ॥१६॥

मा । ते॒ । गो॒ऽद॒त्र॒ । निः । अ॒रा॒म॒ । राध॑सः । इन्द्र॑ । मा ।

ते॒ । गृ॒हा॒म॒हि॒ ॥ दृ॒ळ्हा । चि॒त् । अ॒र्यः । प्र । मृ॒श॒ ।

अ॒भि । आ । भ॒र॒ । न । ते॒ । दा॒मानः॑ । आ॒ऽदभे॑ ॥१६॥

इन्द्रो॑ वा॒ घेदिय॑न्म॒घं सर॑स्वती वा सु॒भगा॑ द॒दिर्वसु॑ ।

त्वं वा॑ चित्र दा॒शुषे॑ ॥१७॥

इन्द्रः॑ । वा॒ । घ॒ । इत् । इय॑त् । म॒घम् । सर॑स्वती । वा॒ । सु॒ऽभगा॑ ।

द॒दिः । वसु॑ ॥ त्वम् । वा॒ । चि॒त्र॒ । दा॒शुषे॑ ॥१७॥

चित्र॒ ऽइद्राजा॑ राज॒का ऽइद॑न्य॒के य॒के सर॑स्वती॒मनु॑ ।

प॒र्जन्य॑इव त॒त॒नद्धि वृ॒ष्ट्या स॒हस्र॑म॒यु॒ता दद॑त् ॥१८॥ (४) [ २२४ ]

चित्रः॑ । इत् । राजा॑ । रा॒ज॒काः । इत् । अ॒न्य॒के । य॒के । सर॑स्वतीम् । अनु॑ ॥

प॒र्जन्यः॑ऽइव । त॒त॒न॑त् । हि । वृ॒ष्ट्या । स॒हस्र॑म् । अ॒युता॑ । दद॑त् ॥१८॥

# ( २२ )

१८ सोमरिः काण्वः । अश्विनौ । १-६ प्रगाथः = ( विषमा बृहती, समा सतोबृहती ), ७ बृहती, ८ अनुष्टुप्, ११ ककुप्, १२ मध्ये ज्योतिः, प्रगाथः = ( ९, १३, १५, १७ ककुप्, १०, १४, १६, १८ सतोबृहती )।

ओ त्यम॑ह्व॒ ऽआ रथ॑म॒द्या दंसि॑ष्ठमू॒तये॑ ।

यम॑श्विना सुहवा रुद्रवर्त्तनी॒ ऽआ सू॒र्या॑यै त॒स्थथुः॑ ॥१॥

ओ इति । त्यम् । अह्वे । आ । रथम् । अद्य ।
दंसिष्ठम् । ऊतये ॥ यम् । अश्विना । सु॰हवा ।
रुद्र॰वर्त्तनी इति रुद्र॰वर्त्तनी । आ । सूर्यायै । तस्थथुः ॥१॥

**पूर्वापुषं सुहवं पुरुस्पृहं भुज्युं वाजेषु पूर्व्यम् ।**
**सचनावन्तं सुमतिभिः सोभरे विद्वेषसमनेहसम् ॥२॥**
पूर्व॰आपुषम् । सु॰हवम् । पुरु॰स्पृहम् । भुज्युम् ।
वाजेषु । पूर्व्यम् ॥ सचना॰वन्तम् । सुमति॰भिः ।
सोभरे । वि॰द्वेषसम् । अनेहसम् ॥२॥

**इह त्या पुरुभूतमा देवा नमोभिरश्विना ।**
**अर्वाचीना स्ववसे करामहे गन्तारा दाशुषो गृहम् ॥३॥**
इह । त्या । पुरु॰भूतमा । देवा । नमः॰भिः ।
अश्विना ॥ अर्वाचीना । सु । अवसे ।
करामहे । गन्तारा । दाशुषः । गृहम् ॥३॥

**युवो रथस्य परि चक्रमीयत ऽईर्मान्यद्वामिषण्यति ।**
**अस्माँ ऽअच्छा सुमतिर्वां शुभस्पती ऽआ धेनुरिव धावतु ॥४॥**
युवः । रथस्य । परि । चक्रम् । ईयते । ईर्मा । अन्यत् ।
वाम् । इषण्यति ॥ अस्मान् । अच्छ । सु॰मतिः । वाम् ।
शुभः । पती इति । आ । धेनुःऽइव । धावतु ॥४॥

**रथो यो वां त्रिवन्धुरो हिरण्याभीशुरश्विना ।**
**परि द्यावापृथिवी भूषति श्रुतस्तेन नासत्या गतम् ॥५॥ (५)**
रथः । यः । वाम् । त्रि॰वन्धुरः । हिरण्य॰अभीशुः ।
अश्विना ॥ परि । द्यावापृथिवी इति । भूषति ।
श्रुतः । तेन । नासत्या । आ । गतम् ॥५॥

दशस्यन्ता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः ।
ता वामद्य सुमतिभिः शुभस्पती ऽअश्विना प्र स्तुवीमहि ॥६॥
दशस्यन्ता । मनवे । पूर्व्यम् । दिवि । यवम् ।
वृकेण । कर्षथः ॥ ता । वाम् । अद्य । सुमतिऽभिः ।
शुभः । पती इति । अश्विना । प्र । स्तुवीमहि ॥६॥

उप नो वाजिनीवसू यातमृतस्य पथिभिः ।
येभिस्तृक्षिं वृषणा त्रासदस्यवं महे क्षत्राय जिन्वथः ॥७॥
उप । नः । वाजिनीवसू इति वाजिनीऽवसू । यातम् ।
ऋतस्य । पथिऽभिः ॥ येभिः । तृक्षिम् । वृषणा ।
त्रासदस्यवम् । महे । क्षत्राय । जिन्वथः ॥७॥

अयं वामद्रिभिः सुतः सोमो नरा वृषण्वसू ।
आ यातं सोमपीतये पिबतं दाशुषो गृहे ॥८॥
अयम् । वाम् । अद्रिऽभिः । सुतः । सोमः । नरा ।
वृषण्वसू इति वृषण्ऽवसू ॥ आ । यातम् ।
सोमऽपीतये । पिबतम् । दाशुषः । गृहे ॥८॥

आ हि रुहतमश्विना रथे कोशे हिरण्यये वृषण्वसू ।
युञ्जाथां पीवरीरिषः ॥९॥
आ । हि । रुहतम् । अश्विना । रथे । कोशे । हिरण्यये ।
वृषण्वसू इति वृषण्ऽवसू ॥ युञ्जाथाम् । पीवरीः । इषः ॥९॥

याभिः पक्थमवथो याभिरध्रिगुं याभिर्बभ्रुं विजोषसम् ।
ताभिर्नो मक्षू तूयमश्विना गतं भिषज्यतं यदातुरम् ॥१०॥ ( ६ )

याभिः । पक्थम् । अवथः । याभिः । अध्रि॰गुम् । याभिः ।
बभ्रुम् । वि॰जोषसम् ॥ ताभिः । नः । मक्षु । तूयम् ।
अश्विना । आ । गतम् । भिषज्यतम् । यत् । आतुरम् ॥१०॥

**यदध्रिगावो ऽअध्रिगू ऽइदा चिदह्नो ऽअश्विना हवामहे ।**
**वयं गीर्भिर्विपन्यवः ॥११॥**

यत् । अध्रि॰गावः । अध्रिगू इत्यध्रि॰गू । इदा । चित् । अह्नः ।
अश्विना । हवामहे ॥ वयम् । गीःऽभिः । विपन्यवः ॥११॥

**ताभिरा यातं वृषणोप मे हवं विश्वप्सुं विश्ववार्यम् ।**
**इषा मंहिष्ठा पुरुभूतमा नरा याभिः क्रिविं वावृधुस्ताभिरा गतम् ॥१२॥**

ताभिः । आ । यातम् । वृषणा । उप । मे । हवम् । विश्व॰प्सुम् ।
विश्व॰वार्यम् ॥ इषा । मंहिष्ठा । पुरु॰भूतमा । नरा । याभिः ।
क्रिविम् । ववृधुः । ताभिः । आ । गतम्॥१२॥

**ताविदा चिदहानां तावश्विना वन्दमान ऽउप ब्रुवे ।**
**ता ऽऊ नमोभिरीमहे ॥१३॥**

तौ । इदा । चित् । अहानाम् । तौ । अश्विना । वन्दमानः ।
उप । ब्रुवे ॥ तौ । ऊँ इति । नमःऽभिः । ईमहे ॥१३॥

**ताविद्दोषा ता ऽउषसि शुभस्पती ता यामन्रुद्रवर्त्तनी ।**
**मा नो मर्त्ताय रिपवे वाजिनीवसू परो रुद्रावति ख्यतम् ॥१४॥**

तौ । इत् । दोषा । तौ । उषसि । शुभः । पती इति । ता ।
यामन् । रुद्रवर्त्तनी इति रुद्र॰वर्त्तनी ॥ मा । नः । मर्त्ताय । रिपवे ।
वाजिनीवसू इति वाजिनी॰वसू । परः । रुद्रौ । अति । ख्यतम् ॥१४॥

**आ सुग्म्याय सुग्म्यं प्राता रथेनाश्विना वा सक्षणी ।**

**हुवे पितेव सोभरी ॥१५॥ (७)**

आ । सुग्म्याय । सुग्म्यम् । प्रातरिति । रथेन । अश्विना ।
वा । सक्षणी इति ॥ हुवे । पिताऽइव । सोभरी ॥१५॥

**मनोजवसा वृषणा मदच्युता मक्षुंगमाभिरूतिभिः ।**

**आरात्ताच्चिद्भूतमस्मे ऽअवसे पूर्वीभिः पुरुभोजसा ॥१६॥**

मनःऽजवसा । वृषणा । मदऽच्युता । मक्षुम्ऽगमाभिः ।
ऊतिऽभिः ॥ आरात्तात् । चित् । भूतम् । अस्मे इति ।
अवसे । पूर्वीऽभिः । पुरुऽभोजसा ॥१६॥

**आ नो ऽअश्वावदश्विना वर्त्तिर्यासिष्टं मधुपातमा नरा ।**

**गोमद्दस्रा हिरण्यवत् ॥१७॥**

आ । नः । अश्वऽवत् । अश्विना । वर्त्तिः । यासिष्टम् ।
मधुऽपातमा । नरा ॥ गोऽमत् । दस्रा । हिरण्यऽवत् ॥१७॥

**सुप्रावर्गं सुवीर्यं सुष्ठु वार्यमनाधृष्टं रक्षस्विना ।**

**अस्मिन्ना वामायाने वाजिनीवसू विश्वा वामानि धीमहि ॥१८॥ (८) [ २४२ ]**

सुऽप्रावर्गम् । सुऽवीर्यम् । सुष्ठु । वार्यम् । अनाधृष्टम् ।
रक्षस्विना ॥ अस्मिन् । आ । वाम् । आऽयाने ।
वाजिनीवसू इति वाजिनीऽवसू । विश्वा । वामानि । धीमहि ॥१८॥

# ( २३ )

३० विश्वमना वैयश्वः । अग्निः । उष्णिक् ।

**ईळिष्वा हि प्रतीव्यं यजस्व जातवेदसम् ।**

**चरिष्णुधूममगृभीतशोचिषम् ॥१॥**

ईळिष्व । हि । प्रतीव्यम् । यजस्व । जात॰वेदसम् ॥
चरिष्णु॰धूमम् । अगृभीत॰शोचिषम् ॥१॥

**दामानं विश्वचर्षणेऽग्निं विश्वमनो गिरा ।**
**उत स्तुषे विष्पर्धसो रथानाम् ॥२॥**
दामानम् । विश्व॰चर्षणे । अग्निम् । विश्व॰मनः । गिरा ॥
उत । स्तुषे । वि॰स्पर्धसः । रथानाम् ॥२॥

**येषामाबाध ऽऋग्मियं ऽइषः पृक्षश्च निग्रभे ।**
**उपविदा वह्निर्विन्दते वसु ॥३॥**
येषाम् । आ॰बाधः । ऋग्मियः । इषः । पृक्षः । च । नि॰ग्रभे ॥
उप॰विदा । वह्निः । विन्दते । वसु ॥३॥

**उदस्य शोचिरस्थाद्दीदियुषो व्यजरम् ।**
**तपुर्जम्भस्य सुद्युतो गणश्रियः ॥४॥**
उत् । अस्य । शोचिः । अस्थात् । दीदियुषः । वि । अजरम् ॥
तपुः२जम्भस्य । सु॰द्युतः । गण॰श्रियः ॥४॥

**उदु तिष्ठ स्वध्वर स्तवानो देव्या कृपा ।**
**अभिख्या भासा बृहता शुशुक्वनिः ॥५॥ (९)**
उत् । ऊँ इति । तिष्ठ । सु॰अध्वर । स्तवानः । देव्या । कृपा ॥
अभि॰ख्या । भासा । बृहता । शुशुक्वनिः ॥५॥

**अग्ने याहि सुशस्तिभिर्हव्या जुह्वान ऽआनुषक् ।**
**यथा दूतो बभूथ हव्यवाहनः ॥६॥**
अग्ने । याहि । सुशस्ति॰भिः । हव्या । जुह्वानः । आनुषक् ॥
यथा । दूतः । बभूथ । हव्य॰वाहनः ॥६॥

अग्निं वः पूर्व्यं हुवे होतारं चर्षणीनाम् ।
तमया वाचा गृणे तमु वः स्तुषे ॥७॥
अग्निम् । वः । पूर्व्यम् । हुवे । होतारम् । चर्षणीनाम् ॥
तम् । अया । वाचा । गृणे । तम् । ऊँ इति । वः । स्तुषे ॥७॥

यज्ञेभिरद्भुतक्रतुं यं कृपा सूदयन्त ऽइत् ।
मित्रं न जने सुधितमृतावनि ॥८॥
यज्ञेभिः । अद्भुत०क्रतुम् । यम् । कृपा । सूदयन्ते । इत् ॥
मित्रम् । न । जने । सु०धितम् । ऋत०वनि ॥८॥

ऋतावानमृतायवो यज्ञस्य साधनं गिरा ।
उपो ऽएनं जुजुषुर्नमसस्पदे ॥९॥
ऋत०वानम् । ऋत०यवः । यज्ञस्य । साधनम् । गिरा ॥
उपो इति । एनम् । जुजुषुः । नमसः । पदे ॥९॥

अच्छा नो ऽअङ्गिरस्तमं यज्ञासो यन्तु संयतः ।
होता यो ऽअस्ति विक्ष्वा यशस्तमः ॥१०॥ (१०)
अच्छ । नः । अङ्गिरःऽतमम् । यज्ञासः । यन्तु । सम्०यतः ॥
होता । यः । अस्ति । विक्षु । आ । यशःऽतमः ॥१०॥

अग्ने तव त्ये ऽअजरेन्धानासो बृहद्भाः ।
अश्वाइव वृषणस्तविषीयवः ॥११॥
अग्ने । तव । त्ये । अजर । इन्धानासः । बृहत् । भाः ॥
अश्वाःऽइव । वृषणः । तविषी०यवः ॥११॥

**स त्वं न ऊर्जां पते रयिं रास्व सुवीर्यम् ।**
**प्राव नस्तोके तनये समत्स्वा ॥१२॥**
सः । त्वम् । नः । ऊर्जाम् । पते । रयिम् । रास्व । सुऽवीर्यम् ॥
प्र । अव । नः । तोके । तनये । समत्ऽसु । आ ॥१२॥

**यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशि ।**
**विश्वेदग्निः प्रति रक्षांसि सेधति ॥१३॥**
यत् । वै । ऊँ इति । विश्पतिः । शितः । सुऽप्रीतः । मनुषः । विशि ॥
विश्वा । इत् । अग्निः । प्रति । रक्षांसि । सेधति ॥१३॥

**श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते ।**
**नि मायिनस्तपुषा रक्षसो दह ॥१४॥**
श्रुष्टी । अग्ने । नवस्य । मे । स्तोमस्य । वीर । विश्पते ॥
नि । मायिनः । तपुषा । रक्षसः । दह ॥१४॥

**न तस्य मायया चन रिपुरीशीत मर्त्यः ।**
**यो अग्नये ददाश हव्यदातिभिः ॥१५॥ (११)**
न । तस्य । मायया । चन । रिपुः । ईशीत । मर्त्यः ॥
यः । अग्नये । ददाश । हव्यदातिऽभिः ॥१५॥

**व्यश्वस्त्वा वसुविदमुक्षण्युरप्रीणादृषिः ।**
**महो राये तमु त्वा समिधीमहि ॥१६॥**
विऽअश्वः । त्वा । वसुऽविदम् । उक्षण्युः । अप्रीणात् । ऋषिः ॥
महः । राये । तम् । ऊँ इति । त्वा । सम् । इधीमहि ॥१६॥

उशना काव्यस्त्वा नि होतारमसादयत् ।
आयजिं त्वा मनवे जातवेदसम् ॥१७॥
उशना । काव्यः । त्वा । नि । होतारम् । असादयत् ॥
आ०यजिम् । त्वा । मनवे । जात०वेदसम् ॥१७॥

विश्वे हि त्वा सजोषसो देवासो दूतमक्रत ।
श्रुष्टी देव प्रथमो यज्ञियो भुवः ॥१८॥
विश्वे । हि । त्वा । स०जोषसः । देवासः । दूतम् । अक्रत ॥
श्रुष्टी । देव । प्रथमः । यज्ञियः । भुवः ॥१८॥

इमं घा वीरो ऽअमृतं दूतं कृण्वीत मर्त्यः ।
पावकं कृष्णवर्त्तनिं विहायसम् ॥१९॥
इमम् । घ । वीरः । अमृतम् । दूतम् । कृण्वीत । मर्त्यः ॥
पावकम् । कृष्ण०वर्त्तनिम् । वि०हायसम् ॥१९॥

तं हुवेम यतस्रुचः सुभासं शुक्रशोचिषम् ।
विशामग्निमजरं प्रत्नमीड्यम् ॥२०॥ (१२)
तम् । हुवेम । यत०स्रुचः । सु०भासम् । शुक्र०शोचिषम् ॥
विशाम् । अग्निम् । अजरम् । प्रत्नम् । ईड्यम् ॥२०॥

यो ऽअस्मै हव्यदातिभिराहुतिं मर्त्तोऽविधत् ।
भूरि पोषं स धत्ते वीरवद्यशः ॥२१॥
यः । अस्मै । हव्यदाति०भिः । आ०हुतिम् । मर्त्तः । अविधत् ॥
भूरि । पोषम् । सः । धत्ते । वीर०वत् । यशः ॥२१॥

**प्रथमं जातवेदसमग्निं यज्ञेषु पूर्व्यम् ।**
**प्रति स्रुगेति नमसा हविष्मती ॥२२॥**
प्रथमम् । जात०वेदसम् । अग्निम् । यज्ञेषु । पूर्व्यम् ॥
प्रति । स्रुक् । एति । नमसा । हविष्मती ॥२२॥

**आभिर्विधेमाग्नये ज्येष्ठाभिर्व्यश्ववत् ।**
**मंहिष्ठाभिर्मतिभिः शुक्रशोचिषे ॥२३॥**
आभिः । विधेम । अग्नये । ज्येष्ठाभिः । व्यश्व०वत् ॥
मंहिष्ठाभिः । मति०भिः । शुक्र०शोचिषे ॥२३॥

**नूनमर्च विहायसे स्तोमेभिः स्थूरयूपवत् ।**
**ऋषे वैयश्व दम्यायाग्नये ॥२४॥**
नूनम् । अर्च । वि०हायसे । स्तोमेभिः । स्थूरयूप०वत् ॥
ऋषे । वैयश्व । दम्याय । अग्नये ॥२४॥

**अतिथिं मानुषाणां सूनुं वनस्पतीनाम् ।**
**विप्रा ऽअग्निमवसे प्रत्नमीळते ॥२५॥ (१३)**
अतिथिम् । मानुषाणाम् । सूनुम् । वनस्पतीनाम् ॥
विप्राः । अग्निम् । अवसे । प्रत्नम् । ईळते ॥२५॥

**महो विश्वाँ ऽअभि षतो३ ऽभि हव्यानि मानुषा ।**
**अग्ने नि षत्सि नमसाधि बर्हिषि ॥२६॥**
महः । विश्वान् । अभि । सतः । अभि । हव्यानि । मानुषा ॥
अग्ने । नि । सत्सि । नमसा । अधि । बर्हिषि ॥२६॥

वस्वा नो वार्या पुरु वस्व रायः पुरुस्पृहः ।
सुवीर्यस्य प्रजावतो यशस्वतः ॥२७॥
वस्व । नः । वार्या । पुरु । वस्व । रायः । पुरु०स्पृहः ॥
सु०वीर्यस्य । प्रजा०वतः । यशस्वतः ॥२७॥

त्वं वरो सुषाम्णेऽग्ने जनाय चोदय ।
सदा वसो रातिं यविष्ठ शश्वते ॥२८॥
त्वम् । वरो इति । सु०षाम्णे । अग्ने । जनाय । चोदय ॥
सदा । वसो इति । रातिम् । यविष्ठ । शश्वते ॥२८॥

त्वं हि सुप्रतूरसि त्वं नो गोमतीरिषः ।
महो रायः सातिमग्ने ऽअपा वृधि ॥२९॥
त्वम् । हि । सु०प्रतूः । असि । त्वम् । नः । गो०मतीः । इषः ॥
महः । रायः । सातिम् । अग्ने । अप । वृधि ॥२९॥

अग्ने त्वं यशा ऽअस्या मित्रावरुणा वह ।
ऋतावाना सम्राजा पूतदक्षसा ॥३०॥ (१४) [ २७२ ]
अग्ने । त्वम् । यशाः । असि । आ । मित्रावरुणा । वह ॥
ऋत०वाना । सम्०राजा । पूत०दक्षसा॥३०॥

# ( २४ )

३० विश्वमना वैयश्वः । इन्द्रः, २८-३० वरुः सौषाम्णिः । उष्णिक्, ३० अनुष्टुप् ।

सखाय ऽआ शिषामहि ब्रह्मेन्द्राय वज्रिणे ।
स्तुष ऽऊ षु वो नृतमाय धृष्णवे ॥१॥
सखायः । आ । शिषामहि । ब्रह्म । इन्द्राय । वज्रिणे ॥
स्तुषे । ऊँ इति । सु । वः । नृ०तमाय । धृष्णवे॥१॥

शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा ।
मघैर्मघोनो ऽअति शूर दाशसि ॥२॥
शवसा । हि । असि । श्रुतः । वृत्र॰हत्येन । वृत्र॰हा ॥
मघैः । मघोनः । अति । शूर । दाशसि ॥२॥

स नः स्तवान ऽआ भर रयिं चित्रश्रवस्तमम् ।
निरेके चिद्यो हरिवो वसुर्ददिः ॥३॥
सः । नः । स्तवानः । आ । भर । रयिम् । चित्रश्रवः२तमम् ॥
निरेके । चित् । यः । हरि॰वः । वसुः । ददिः ॥३॥

आ निरेकमुत प्रियमिन्द्र दर्षि जनानाम् ।
धृषता धृष्णो स्तवमान ऽआ भर ॥४॥
आ । निरेकम् । उत । प्रियम् । इन्द्र । दर्षि । जनानाम् ॥
धृषता । धृष्णो इति । स्तवमानः । आ । भर ॥४॥

न ते सव्यं न दक्षिणं हस्तं वरन्त ऽआमुरः ।
न परिबाधो हरिवो गविष्टिषु ॥५॥ ( १५ )
न । ते । सव्यम् । न । दक्षिणम् । हस्तम् । वरन्ते । आ॰मुरः ॥
न । परि॰बाधः । हरि॰वः । गो॰इष्टिषु ॥५॥

आ त्वा गोभिरिव व्रजं गीर्भिर्ऋणोम्यद्रिवः ।
आ स्मा कामं जरितुरा मनः पृण ॥६॥
आ । त्वा । गोभिःऽइव । व्रजम् । गीः२भिः । ऋणोमि । अद्रि॰वः ॥
आ । स्म । कामम् । जरितुः । आ । मनः । पृण ॥६॥

विश्वा॑नि वि॒श्वम॑नसो धि॒या नो॑ वृत्रहन्तम ।
उग्र॑ प्रणेत॒र॒धि॒ षू व॑सो गहि ॥७॥
विश्वा॑नि । वि॒श्व॰म॑नसः । धि॒या । न॒ः । वृ॒त्र॒ह॒न्॰त॒म॒ ॥
उग्र॑ । प्र॒ने॒त॒रिति॑ प्र॰नेतः । अधि॑ । सु । व॒सो॒ इति॑ । ग॒हि॒ ॥७॥

व॒यं ते॑ ऽअस्य वृ॑त्रहन्वि॒द्याम॑ शू॒र॒ नव्य॑सः ।
वसो॑ः स्पा॒र्हस्य॑ पुरुहू॒त॒ राध॑सः ॥८॥
व॒यम् । ते॒ । अ॒स्य । वृ॒त्र॒॰ह॒न् । वि॒द्याम॑ । शू॒र॒ । नव्य॑सः ॥
वसो॑ः । स्पा॒र्हस्य॑ । पु॒रु॒॰हू॒त॒ । राध॑सः ॥८॥

इन्द्र॒ यथा॒ ह्यस्ति॒ तेऽप॑रीतं नृतो॒ शव॑ः ।
अम॑क्ता रा॒तिः पु॑रुहूत दा॒शुषे॑ ॥९॥
इन्द्र॑ । यथा॑ । हि । अस्ति॑ । ते॒ । अप॑रि॰इतम् । नृ॒तो॒ इति॑ । शव॑ः ॥
अम॑क्ता । रा॒तिः । पु॒रु॒॰हू॒त॒ । दा॒शुषे॑ ॥९॥

आ वृ॑षस्व महामह म॒हे नृ॑तम॒ राध॑से ।
दृ॒ळ्हश्चि॑द्दृह्य मघवन्म॒घत्त॑ये ॥१०॥ ( १६ )
आ । वृ॒ष॒स्व॒ । म॒हा॒॰म॒ह॒ । म॒हे । नृ॒॰त॒म॒ । राध॑से ॥
दृ॒ळ्हः । चि॒त् । दृ॒ह्य॒ । म॒घ॒॰व॒न् । म॒घत्त॑ये ॥१०॥

नू ऽअ॒न्यत्रा॑ चिदद्रिव॒स्त्वन्नो॑ जग्मु॒राश॑सः ।
मघ॑वञ्छ॒ग्धि तव॒ तन्न॑ ऽऊ॒तिभि॑ः ॥११॥
नु । अ॒न्यत्र॑ । चि॒त् । अ॒द्रि॒॰व॒ः । त्वत् । न॑ः । ज॒ग्मुः । आ॒॰शस॑ः ॥
मघ॑॰वन् । श॒ग्धि । तव॑ । तत् । न॒ः । ऊ॒ति॰भि॑ः ॥११॥

नह्य॑ङ्ग नृतो त्वदन्यं विन्दामि राधसे ।
राये द्युम्नाय शवसे च गिर्वणः ॥१२॥
नहि । अङ्ग । नृतो इति । त्वत् । अन्यम् । विन्दामि । राधसे ॥
राये । द्युम्नाय । शवसे । च । गिर्वणः ॥१२॥

एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
प्र राधसा चोदयाते महित्वना ॥१३॥
आ । इन्दुम् । इन्द्राय । सिञ्चत । पिबाति । सोम्यम् । मधु ॥
प्र । राधसा । चोदयाते । महि॰त्वना ॥१३॥

उपो हरीणां पतिं दक्षं पृञ्चन्तमब्रवम् ।
नूनं श्रुधि स्तुवतो ऽअश्व्यस्य ॥१४॥
उपो इति । हरीणाम् । पतिम् । दक्षम् । पृञ्चन्तम् । अब्रवम् ॥
नूनम् । श्रुधि । स्तुवतः । अश्व्यस्य ॥१४॥

नह्य॑ङ्ग पुरा चन जज्ञे वीरतरस्त्वत् ।
नकी राया नैवथा न भन्दना ॥१५॥ (१७)
नहि । अङ्ग । पुरा । चन । जज्ञे । वीर॰तरः । त्वत् ॥
नकिः । राया । न । एव॰था । न । भन्दना ॥१५॥

एदु मध्वो मदिन्तरं सिञ्च वाध्वर्यो ऽअन्धसः ।
एवा हि वीरः स्तवते सदावृधः ॥१६॥
आ । इत् । ऊँ इति । मध्वः । मदिन्॰तरम् ।
सिञ्च । वा । अध्वर्यो इति । अन्धसः ॥
एव । हि । वीरः । स्तवते । सदा॰वृधः ॥१६॥

**इन्द्र स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिम् ।**

**उदानंश शवसा न भन्दना ॥१७॥**

इन्द्र । स्थातः । हरीणाम् । नकिः । ते । पूर्व्य०स्तुतिम् ॥

उत् । आनंश । शवसा । न । भन्दना ॥१७॥

**तं वो वाजानां पतिमहूमहि श्रवस्यवः ।**

**अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥१८॥**

तम् । वः । वाजानाम् । पतिम् । अहूमहि । श्रवस्यवः ॥

अप्रायु०भिः । यज्ञेभिः । ववृधेन्यम् ॥१८॥

**एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरम् ।**

**कृष्टीर्यो विश्वा ऽअभ्यस्त्येक ऽइत् ॥१९॥**

एतो इति । नु । इन्द्रम् । स्तवाम । सखायः । स्तोम्यम् । नरम् ॥

कृष्टीः । यः । विश्वाः । अभि । अस्ति । एकः । इत् ॥१९॥

**अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः ।**

**घृतात्स्वादीयो मधुनश्च वोचत ॥२०॥ (१८)**

अगो०रुधाय । गो०इषे । द्युक्षाय । दस्म्यम् । वचः ॥

घृतात् । स्वादीयः । मधुनः । च । वोचत ॥२०॥

**यस्यामितानि वीर्याइ न राधः पर्येतवे ।**

**ज्योतिर्न विश्वमभ्यस्ति दक्षिणा ॥२१॥**

यस्य । अमितानि । वीर्या । न । राधः । परि०एतवे ॥

ज्योतिः । न । विश्वम् । अभि । अस्ति । दक्षिणा ॥२१॥

स्तुहीन्द्रं व्यश्ववदनूर्मिं वाजिनं यमम् ।
अर्यो गयं मंहमानं वि दाशुषे ॥२२॥
स्तुहि । इन्द्रम् । व्यश्व०वत् । अनूर्मिम् । वाजिनम् । यमम् ॥
अर्यः । गयम् । मंहमानम् । वि । दाशुषे ॥२२॥

एवा नूनमुप स्तुहि वैयश्व दशमं नवम् ।
सुविद्वांसं चर्कृत्यं चरणीनाम् ॥२३॥
एव । नूनम् । उप । स्तुहि । वैयश्व । दशमम् । नवम् ॥
सु०विद्वांसम् । चर्कृत्यम् । चरणीनाम् ॥२३॥

वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम् ।
अहरहः शुन्ध्युः परिपदामिव ॥२४॥
वेत्थ । हि । निः२ऋतीनाम् । वज्र०हस्त । परि०वृजम् ॥
अहः२अहः । शुन्ध्युः । परिपदाम्ऽइव ॥२४॥

तदिन्द्राव ऽआ भर येना दंसिष्ठ कृत्वने ।
द्विता कुत्साय शिश्नथो नि चोदय ॥२५॥ (१९)
तत् । इन्द्र । अवः । आ । भर । येन । दंसिष्ठ । कृत्वने ॥
द्विता । कुत्साय । शिश्नथः । नि । चोदय ॥२५॥

तमु त्वा नूनमीमहे नव्यं दंसिष्ठ सन्यसे ।
स त्वं नो विश्वा ऽअभिमातीः सक्षणिः ॥२६॥
तम् । ऊँ इति । त्वा । नूनम् । ईमहे । नव्यम् । दंसिष्ठ । सन्यसे ॥
सः । त्वम् । नः । विश्वाः । अभि०मातीः । सक्षणिः ॥२६॥

य ऽऋक्षादंहसो मुचद्यो वार्यात्सप्त सिन्धुषु ।
वर्धर्दासस्य तुविनृम्ण नीनमः ॥२७॥
यः । ऋक्षात् । अंहसः । मुचत् । यः । वा । आर्यात् । सप्त । सिन्धुषु ॥
वधः । दासस्य । तुवि॰नृम्ण । नीनमः ॥२७॥

यथा वरो सुषाम्णे सनिभ्य ऽआवहो रयिम् ।
व्यश्वेभ्यः सुभगे वाजिनीवति ॥२८॥
यथा । वरो इति । सु॰साम्ने । सनि॰भ्यः । आ । अवहः । रयिम् ॥
वि॰अश्वेभ्यः । सु॰भगे । वाजिनी॰वति ॥२८॥

आ नार्यस्य दक्षिणा व्यश्वाँ ऽएतु सोमिनः ।
स्थूरं च राधः शतवत्सहस्रवत् ॥२९॥
आ । नार्यस्य । दक्षिणा । वि॰अश्वान् । एतु । सोमिनः ॥
स्थूरम् । च । राधः । शत॰वत् । सहस्र॰वत् ॥२९॥

यत्त्वा पृच्छादीजानः कुहया कुहयाकृते ।
एषो ऽअपश्रितो वलो गोमतीमव तिष्ठति ॥३०॥ (२०) [३०२]
यत् । त्वा । पृच्छात् । ईजानः । कुहया । कुहया॰कृते ॥
एषः । अप॰श्रितः । वलः । गो॰मतीम् । अव । तिष्ठति ॥३०॥

# (२५)

२४ विश्वमना वैयश्वः । मित्रावरुणौ, १०-१२ विश्वे देवाः । उष्णिक्, २३ उष्णिग्गर्भा।

ता वां विश्वस्य गोपा देवा देवेषु यज्ञिया ।
ऋतावाना यजसे पूतदक्षसा ॥१॥
ता । वाम् । विश्वस्य । गोपा । देवा । देवेषु । यज्ञिया ॥
ऋत॰वाना । यजसे । पूत॰दक्षसा ॥१॥

अग्ने । मन्मा॑नि । तुभ्य॑म् । कम् । घृतम् । न । जुह्वे । आसनि ॥
सः । देवेषु । प्र । चिकिद्धि । त्वम् । हि । असि । पूर्व्यः ।
शिवः । दूतः । विवस्वतः । नभ॑न्ताम् । अन्यके । समे ॥३॥

तत्त॑दग्निर्वयो॑ दधे यथा॑यथा कृपण्यति॑ ।
ऊर्जाहु॑तिर्वसू॑नां शं च योश्च मयो॑ दधे विश्व॑स्यै देवहू॑त्यै नभ॑न्तामन्यके स॑मे ॥४॥
तत्ऽतत् । अग्निः । वयः । दधे । यथाऽयथा । कृपण्यति॑ ॥
ऊर्जाऽआहुतिः । वसू॑नाम् । शम् । च । योः । च । मयः ।
दधे । विश्व॑स्यै । देवऽहू॑त्यै । नभ॑न्ताम् । अन्यके । समे ॥४॥

स चि॑केत सही॑यसाग्निश्चित्रेण कर्म॑णा ।
स होता शश्व॑तीनां दक्षि॑णाभिरभीवृ॑त इनोति॑ च प्रतीव्यं१ नभ॑न्तामन्यके स॑मे ॥५॥ ( २२ )
सः । चिकेत । सही॑यसा । अग्निः । चित्रेण । कर्म॑णा ॥
सः । होता । शश्व॑तीनाम् । दक्षि॑णाभिः । अभिऽवृ॑तः ।
इनोति॑ । च । प्रतीव्य॑म् । नभ॑न्ताम् । अन्यके । समे ॥५॥

अग्निर्जाता देवाना॑मग्निर्वे॑द मर्त्ता॑नामपीच्य॑म् ।
अग्निः स द्रवि॑णोदा ऽअग्निर्द्वारा व्यू॑र्णुते स्वा॑हुतो नवी॑यसा नभ॑न्तामन्यके स॑मे ॥६॥
अग्निः । जाता । देवाना॑म् । अग्निः । वेद । मर्त्ता॑नाम् । अपीच्य॑म् ॥
अग्निः । सः । द्रविणःऽदाः । अग्निः । द्वारा । वि । ऊर्णुते ।
सुऽआहुतः । नवी॑यसा । नभ॑न्ताम् । अन्यके । समे ॥६॥

अग्निर्देवेषु संव॑सुः स विक्षु यज्ञियास्वा ।
स मुदा काव्या पुरु विश्वं भूमैव पुष्यति देवो देवेषु यज्ञियो नभ॑न्तामन्यके स॑मे ॥७॥
अग्निः । देवेषु । सम्ऽव॑सुः । सः । विक्षु । यज्ञिया॑सु । आ ॥
सः । मुदा । काव्या । पुरु । विश्व॑म् । भूमऽइव । पुष्यति ।
देवः । देवेषु । यज्ञियः । नभ॑न्ताम् । अन्यके । समे ॥७॥

यो ऽअग्निः सप्तमानुषः श्रितो विश्वेषु सिन्धुषु ।
तमागन्म त्रिपस्त्यं मन्धातुर्दस्युहन्तममग्निं यज्ञेषु पूर्व्यं नभन्तामन्यके समे ॥८॥
यः । अग्निः । सप्त॰मानुषः । श्रितः । विश्वेषु । सिन्धुषु ॥
तम् । आ । अगन्म । त्रि॰पस्त्यम् । मन्धातुः । दस्युहन्॰तमम् ।
अग्निम् । यज्ञेषु । पूर्व्यम् । नभन्ताम् । अन्यके । समे ॥८॥

अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः ।
स त्रीँरेकादशाँ ऽइह यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतो नभन्तामन्यके समे ॥९॥
अग्निः । त्रीणि । त्रि॰धातूनि । आ । क्षेति । विदथा । कविः ॥
सः । त्रीन् । एकादशान् । इह । यक्षत् । च । पिप्रयत् । च ।
नः । विप्रः । दूतः । परि॰कृतः । नभन्ताम् । अन्यके । समे ॥९॥

त्वं नो ऽअग्न ऽआयुषु त्वं देवेषु पूर्व्य वस्व ऽएक ऽइरज्यसि ।
त्वामापः परिस्रुतः परि यन्ति स्वसेतवो नभन्तामन्यके समे ॥१०॥ ( २३ ) [ ५३५ ]
त्वम् । नः । अग्ने । आयुषु । त्वम् । देवेषु । पूर्व्य ।
वस्वः । एकः । इरज्यसि ॥ त्वाम् । आपः । परि॰स्रुतः ।
परि । यन्ति । स्व॰सेतवः । नभन्ताम् । अन्यके । समे ॥१०॥

# ( ४० )

१२ नाभाकः काण्वः । इन्द्राग्नी । महापङ्क्तिः, २ शक्वरी, १२ त्रिष्टुप् ।

इन्द्राग्नी युवं सु नः सहन्ता दासथो रयिम् ।
येन दृळ्हा समत्स्वा वीळु चित्साहिषीमह्यग्निर्वनेव वात ऽइन्नभन्तामन्यके समे ॥१॥
इन्द्राग्नी इति । युवम् । सु । नः । सहन्ता । दासथः । रयिम् ॥
येन । दृळ्हा । समत्॰सु । आ । वीळु । चित् । सहिषीमहि ।
अग्निः । वनाऽइव । वाते । इत् । नभन्ताम् । अन्यके । समे ॥१॥

नहि वां वव्रयामहेऽथेन्द्रमिद्यजामहे शविष्ठं नृणां नरम् ।
सः नः कदा चिदर्वता गमदा वाजसातये गमदा मेधसातये नभन्तामन्यके-समे ॥२॥
नहि । वाम् । वव्रयामहे । अथ । इन्द्रम् । इत् । यजामहे । शविष्ठम् ।
नृणाम् । नरम् ॥ सः । नः । कदा । चित् । अर्वता । गमत् । आ ।
वाज०सातये । गमत् । आ । मेध०सातये । नभन्ताम् । अन्यके । समे ॥२॥

ता हि मध्यं भराणामिन्द्राग्नी ऽअधिक्षितः ।
ता ऽउ कवित्वना कवी पृच्छ्यमाना सखीयते सं धीतमश्नुतं नरा नभन्तामन्यके समे ॥३॥
ता । हि । मध्यम् । भराणाम् । इन्द्राग्नी इति । अधि०क्षितः ॥
तौ । ऊँ इति । कवि०त्वना । कवी इति । पृच्छ्यमाना । सखी०यते ।
सम् । धीतम् । अश्नुतम् । नरा । नभन्ताम् । अन्यके । समे ॥३॥

अभ्यर्च नभाकवदिन्द्राग्नी यजसा गिरा ।
ययोर्विश्वमिदं जगदियं द्यौः पृथिवी मह्युपस्थे बिभृतो वसु नभन्तामन्यके समे ॥४॥
अभि । अर्च । नभाक०वत् । इन्द्राग्नी इति । यजसा । गिरा ॥
ययोः । विश्वम् । इदम् । जगत् । इयम् । द्यौः । पृथिवी ।
मही । उप०स्थे । बिभृतः । वसु । नभन्ताम् । अन्यके । समे ॥४॥

प्र ब्रह्माणि नभाकवदिन्द्राग्निभ्यामिरज्यत ।
या सप्तबुध्नमर्णवं जिह्मबारमपोर्णुत ऽइन्द्र ऽईशान ऽओजसा नभन्तामन्यके समे ॥५॥
प्र । ब्रह्माणि । नभाक०वत् । इन्द्राग्नि०भ्याम् । इरज्यत ॥
या । सप्त०बुध्नम् । अर्णवम् । जिह्म०बारम् । अप०ऊर्णुतः ।
इन्द्रः । ईशानः । ओजसा । नभन्ताम् । अन्यके । समे ॥५॥

अपि वृश्च पुराणवद्व्रततेरिव गुष्पितमोजो दासस्य दम्भय ।
वयं तदस्य संभृतं वस्विन्द्रेण वि भजेमहि नभन्तामन्यके समे ॥६॥ (२४)
अपि । वृश्च । पुराण॰वत् । व्रततेःऽइव । गुष्पितम् । ओजः ।
दासस्य । दम्भय ॥ वयम् । तत् । अस्य । सम्॰भृतम् । वसु ।
इन्द्रेण । वि । भजेमहि । नभन्ताम् । अन्यके । समे ॥६॥

यदिन्द्राग्नी जना ऽइमे विह्वयन्ते तना गिरा ।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तामन्यके समे ॥७॥
यत् । इन्द्राग्नी इति । जनाः । इमे । वि॰ह्वयन्ते । तना । गिरा ॥
अस्माकेभिः । नृ॰भिः । वयम् । ससह्याम । पृतन्यतः ।
वनुयाम । वनुष्यतः । नभन्ताम् । अन्यके । समे ॥७॥

या नु श्वेताववो दिव ऽउच्चरात ऽउप द्युभिः ।
इन्द्राग्न्योरनु व्रतमुहाना यन्ति सिन्धवो यान्सीं बन्धादमुञ्चतां नभन्तामन्यके समे ॥८॥
या । नु । श्वेतौ । अवः । दिवः । उत्॰चरातः । उप । द्यु॰भिः ॥
इन्द्राग्न्योः । अनु । व्रतम् । उहानाः । यन्ति । सिन्धवः । यान् ।
सीम् । बन्धात् । अमुञ्चताम् । नभन्ताम् । अन्यके । समे ॥८॥

पूर्वीष्ट ऽइन्द्रोपमातयः पूर्वीरुत प्रशस्तयः सूनो हिन्वस्य हरिवः ।
वस्वो वीरस्यापृचो या नु साधन्त नो धियो नभन्तामन्यके समे ॥९॥
पूर्वीः । ते । इन्द्र । उप॰मातयः । पूर्वीः । उत । प्र॰शस्तयः ।
सूनो इति । हिन्वस्य । हरि॰वः ॥ वस्वः । वीरस्य । आ॰पृचः ।
या । नु । साधन्त । नः । धियः । नभन्ताम् । अन्यके । समे ॥९॥

तं शिशीता सुवृक्तिभिस्त्वेषं सत्वानमृग्मियम् ।
उतो नु चिद्य ऽओजसा शुष्णस्याण्डानि भेदति जेषत्स्वर्वतीरपो नभन्तामन्यके समे ॥१०॥

तम् । शिशीत । सुवृक्ति॰भिः । त्वेषम् । सत्वानम् । ऋग्मियम् ॥
उतो इति । नु । चित् । यः । ओजसा । शुष्णस्य । आण्डानि ।
भेदति । जेषत् । स्वः॰वतीः । अपः । नभन्ताम् । अन्यके । समे ॥१०॥

तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियम् ।
उतो नु चिद्य ऽओहत ऽआण्डा शुष्णस्य भेदत्यजैः स्वर्वतीरपो नभन्तामन्यके समे ॥११॥
तम् । शिशीत । सु॰अध्वरम् । सत्यम् । सत्वानम् । ऋत्वियम् ॥
उतो इति । नु । चित् । यः । ओहते । आण्डा । शुष्णस्य । भेदति ।
अजैः । स्वः॰वतीः । अपः । नभन्ताम् । अन्यके । समे ॥११॥

एवेन्द्राग्निभ्यां पितृवन्नवीयो मन्धातृवदङ्गिरस्वदवाचि ।
त्रिधातुना शर्मणा पातमस्मान्वयं स्याम पतयो रयीणाम् ॥१२॥ ( २५ ) [ ५४७ ]
एव । इन्द्राग्नि॰भ्याम् । पितृ॰वत् । नवीयः । मन्धातृ॰वत् ।
अङ्गिरस्वत् । अवाचि ॥ त्रि॰धातुना । शर्मणा । पातम् ।
अस्मान् । वयम् । स्याम । पतयः । रयीणाम् ॥१२॥

# ( ४१ )

१० नाभाकः काण्वः । वरुणः । महापङ्क्तिः ।

अस्मा ऽऊ षु प्रभूतये वरुणाय मरुद्भ्योऽर्चा विदुष्टरेभ्यः ।
यो धीता मानुषाणां पश्वो गाइव रक्षति नभन्तामन्यके समे ॥१॥
अस्मै । ऊँ इति । सु । प्र॰भूतये । वरुणाय । मरुत्॰भ्यः ।
अर्च । विदुःतरेभ्यः ॥ यः । धीता । मानुषाणाम् । पश्वः ।
गाःऽइव । रक्षति । नभन्ताम् । अन्यके । समे ॥१॥

तमू षु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे ॥२॥

तम् । ऊँ इति । सु । समना । गिरा । पितॄणाम् । च । मन्म॰भिः ॥
नाभाकस्य । प्रशस्ति॰भिः । यः । सिन्धूनाम् । उप । उत्॰अये ।
सप्त॰स्वसा । सः । मध्यमः । नभन्ताम् । अन्यके । समे ॥२॥

स क्षपः परि षस्वजे न्युस्रो मायया दधे स विश्वं परि दर्शतः ।
तस्य वेनीरनु व्रतमुषस्तिस्रो ऽअवर्द्धयन्नभन्तामन्यके समे ॥३॥
सः । क्षपः । परि । सस्वजे । नि । उस्रः । मायया । दधे ।
सः । विश्वम् । परि । दर्शतः ॥ तस्य । वेनीः । अनु । व्रतम् ।
उषः । तिस्रः । अवर्द्धयन् । नभन्ताम् । अन्यके । समे ॥३॥

यः ककुभो निधारयः पृथिव्यामधि दर्शतः ।
स माता पूर्व्यं पदं तद्वरुणस्य सप्त्यं स हि गोपा ऽइवेर्यो नभन्तामन्यके समे ॥४॥
यः । ककुभः । नि॰धारयः । पृथिव्याम् । अधि । दर्शतः ॥
सः । माता । पूर्व्यम् । पदम् । तत् । वरुणस्य । सप्त्यम् ।
सः । हि । गोपाःऽइव । इर्यः । नभन्ताम् । अन्यके । समे ॥४॥

यो धर्त्ता भुवनानां य ऽउस्राणामपीच्याऽ वेद नामानि गुह्या ।
सः कविः काव्या पुरु रूपं द्यौरिव पुष्यति नभन्तामन्यके समे ॥५॥ ( २६ )
यः । धर्त्ता । भुवनानाम् । यः । उस्राणाम् । अपीच्या ।
वेद । नामानि । गुह्या ॥ सः । कविः । काव्या । पुरु ।
रूपम् । द्यौःऽइव । पुष्यति । नभन्ताम् । अन्यके । समे ॥५॥

यस्मिन्विश्वानि काव्या चक्रे नाभिरिव श्रिता ।
त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे ऽअश्वाँ ऽअयुक्षत नभन्तामन्यके समे ॥६॥
यस्मिन् । विश्वानि । काव्या । चक्रे । नाभिःऽइव । श्रिता ॥
त्रितम् । जूती । सपर्यत । व्रजे । गावः । न । सम्॰युजे ।
युजे । अश्वान् । अयुक्षत । नभन्ताम् । अन्यके । समे ॥६॥

**य ऽआस्वत्कं ऽआशये विश्वा जातान्यैषाम् ।**
**परि धामानि मर्मृशद्वरुणस्य पुरो गये विश्वे देवा ऽअनु व्रतं नभन्तामन्यके समे ॥७॥**

यः । आसु । अत्कः । आ०शये । विश्वा । जातानि । एषाम् ॥
परि । धामानि । मर्मृशत् । वरुणस्य । पुरः । गये । विश्वे ।
देवाः । अनु । व्रतम् । नभन्ताम् । अन्यके । समे ॥७॥

**स समुद्रो ऽअपीच्यस्तुरो द्यामिव रोहति नि यदासु यजुर्दधे ।**
**स माया ऽअर्चिना पदास्तृणान्नाकमारुहन्नभन्तामन्यके समे ॥८॥**

सः । समुद्रः । अपीच्यः । तुरः । द्याम्ऽइव । रोहति । नि । यत् ।
आसु । यजुः । दधे ॥ सः । मायाः । अर्चिना । पदा । अस्तृणात् ।
नाकम् । आ । अरुहत् । नभन्ताम् । अन्यके । समे ॥८॥

**यस्य श्वेता विचक्षणा तिस्रो भूमीरधिक्षितः ।**
**त्रिरुत्तराणि पप्रतुर्वरुणस्य ध्रुवं सदः स सप्तानामिरज्यति नभन्तामन्यके समे ॥९॥**

यस्य । श्वेता । वि०चक्षणा । तिस्रः । भूमीः । अधि०क्षितः ॥
त्रिः । उत्०तराणि । पप्रतुः । वरुणस्य । ध्रुवम् । सदः ।
सः । सप्तानाम् । इरज्यति । नभन्ताम् । अन्यके । समे ॥९॥

**यः श्वेताँ ऽअधिनिर्णिजश्चक्रे कृष्णाँ ऽअनु व्रता ।**
**स धाम पूर्व्यं ममे यः स्कम्भेन वि रोदसी ऽअजो न द्यामधारयन्नभन्तामन्यके समे ॥१०॥ ( २७ ) [ ५५७ ]**

यः । श्वेतान् । अधि०निर्निजः । चक्रे । कृष्णान् । अनु । व्रता ॥
सः । धाम । पूर्व्यम् । ममे । यः । स्कम्भेन । वि । रोदसी इति ।
अजः । न । द्याम् । अधारयत् । नभन्ताम् । अन्यके । समे ॥१०॥

# ( ४२ )

६ नाभाकः काण्वः, अर्चनाना आत्रेयो वा । १-३ वरुणः, ४-६ अश्विनौ ।
१-३ त्रिष्टुप्, ४-६ अनुष्टुप् ।

**अस्तभ्नाद् द्यामसुरो विश्ववेदा ऽअमिमीत वरिमाणं पृथिव्याः ।**
**आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ॥१॥**

अस्तभ्नात् । द्याम् । असुरः । विश्व०वेदाः । अमिमीत ।
वरिमाणम् । पृथिव्याः ॥ आ । असीदत् । विश्वा । भुवनानि ।
सम्०राट् । विश्वा । इत् । तानि । वरुणस्य । व्रतानि ॥१॥

**एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।**
**स नः शर्म त्रिवरूथं वि यंसत्पातं नो ऽद्यावापृथिवी ऽउपस्थे ॥२॥**

एव । वन्दस्व । वरुणम् । बृहन्तम् । नमस्य । धीरम् ।
अमृतस्य । गोपाम् ॥ सः । नः । शर्म । त्रि०वरूथम् ।
वि । यंसत् । पातम् । नः । द्यावापृथिवी इति । उप०स्थे ॥२॥

**इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।**
**ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥३॥**

इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् ।
वरुण । सम् । शिशाधि ॥ यया । अति । विश्वा ।
दुःऽइता । तरेम । सु०तर्माणम् । अधि । नावम् । रुहेम ॥३॥

**आ वां ग्रावाणो ऽअश्विना धीभिर्विप्रा ऽअचुच्यवुः ।**
**नासत्या सोमपीतये नभन्तामन्यके समे ॥४॥**

आ । वाम् । ग्रावाणः । अश्विना । धीभिः । विप्राः । अचुच्यवुः ॥
नासत्या । सोम०पीतये । नभन्ताम् । अन्यके । समे ॥४॥

यथा वामत्रिरश्विना गीर्भिर्विप्रो ऽअजोहवीत् ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥५॥
यथा । वाम् । अत्रिः । अश्विना । गीःऽभिः । विप्रः । अजोहवीत् ॥
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥५॥

एवा वामह्व ऽऊतये यथाहुवन्त मेधिराः ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥६॥ (२८) [५६३]
एव । वाम् । अह्वे । ऊतये । यथा । अहुवन्त । मेधिराः ॥
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥६॥

## (४३) [ अथ षष्ठोऽनुवाकः ॥२॥ सूक्तानि ४३-४८

३३ विरूप आङ्गिरसः । अग्निः । गायत्री ।

इमे विप्रस्य वेधसोऽग्नेरस्तृतयज्वनः ।
गिरः स्तोमास ऽईरते ॥१॥
इमे । विप्रस्य । वेधसः । अग्नेः । अस्तृतऽयज्वनः ॥
गिरः । स्तोमासः । ईरते ॥१॥

अस्मै ते प्रतिहर्यते जातवेदो विचर्षणे ।
अग्ने जनामि सुष्टुतिम् ॥२॥
अस्मै । ते । प्रतिऽहर्यते । जातऽवेदः । विऽचर्षणे ॥
अग्ने । जनामि । सुऽस्तुतिम् ॥२॥

आरोकाइव घेदह तिग्मा ऽअग्ने तव त्विषः ।
दद्भिर्वनानि बप्सति ॥३॥
आरोकाःऽइव । घ । इत् । अह । तिग्माः । अग्ने । तव । त्विषः ॥
दत्ऽभिः । वनानि । बप्सति ॥३॥

**हर॑यो धू॒मके॑तवो॒ वात॑जूता॒ ऽउप॒ द्यवि॑ ।**

**यत॑न्ते॒ वृथ॑ग॒ग्नय॑: ॥४॥**

हर॑यः । धू॒म०के॑तवः । वात॑०जूताः । उप॑ । द्यवि॑ ॥

यत॑न्ते । वृथ॑क् । अ॒ग्नय॑: ॥४॥

**ए॒ते त्ये वृथ॑ग॒ग्नय॑ ऽइ॒द्धास॒: सम॑दृक्षत ।**

**उ॒षसा॑मिव के॒तव॑: ॥५॥ ( २९ )**

ए॒ते । त्ये । वृथ॑क् । अ॒ग्नय॑: । इ॒द्धास॑: । सम् । अ॒दृ॒क्ष॒त ॥

उ॒षसा॑म्ऽइव । के॒तव॑: ॥५॥

**कृ॒ष्णा रजां॑सि पत्सु॒तः प्र॒याणे॑ जा॒तवे॑दसः ।**

**अ॒ग्निर्यद्रोध॑ति॒ क्षमि॑ ॥६॥**

कृ॒ष्णा । रजां॑सि । प॒त्सु॒तः । प्र॒०याणे॑ । जा॒त०वे॑दसः ॥

अ॒ग्निः । यत् । रोध॑ति । क्षमि॑ ॥६॥

**धा॒सिं कृ॒ण्वा॒न ऽओष॑धी॒र्बप्स॑द॒ग्निर्न वा॑यति ।**

**पुन॒र्यन्तरु॑णी॒रपि॑ ॥७॥**

धा॒सिम् । कृ॒ण्वा॒नः । ओष॑धीः । बप्स॑त् । अ॒ग्निः । न । वा॒य॒ति ॥

पुन॑ः । यन् । तरु॑णीः । अपि॑ ॥७॥

**जि॒ह्वाभि॒रह॒ नन्न॑मद॒र्चिषा॑ जञ्जणा॒भव॑न् ।**

**अ॒ग्नि र्वने॑षु रोचते ॥८॥**

जि॒ह्वाभि॑ः । अह॑ । नन्न॑मत् । अ॒र्चिषा॑ । ज॒ञ्ज॒णा॒०भव॑न् ॥

अ॒ग्निः । वने॑षु । रो॒च॒ते ॥८॥

अप्स्वग्ने सधिष्टव सौर्षधीरनु रुध्यसे ।
गर्भे सञ्जायसे पुनः ॥९॥
अप्ऽसु । अग्ने । सधिः । तव । सः । ओषधीः । अनु । रुध्यसे ॥
गर्भे । सन् । जायसे । पुनरिति ॥९॥

उदग्ने तव तद् घृतादर्ची रोचत ऽआहुतम् ।
निंसानं जुह्वो३ मुखे ॥१०॥ (३०)
उत् । अग्ने । तव । तत् । घृतात् । अर्चिः । रोचते । आऽहुतम् ॥
निंसानम् । जुह्वः । मुखे ॥१०॥

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे ।
स्तोमैर्विधेमाग्नये ॥११॥
उक्षऽअन्नाय । वशाऽअन्नाय । सोमऽपृष्ठाय । वेधसे ॥
स्तोमैः । विधेम । अग्नये ॥११॥

उत त्वा नमसा वयं होतर्वरेण्यक्रतो ।
अग्ने समिद्भिरीमहे ॥१२॥
उत । त्वा । नमसा । वयम् । होतः । वरेण्यक्रतो इति वरेण्यऽक्रतो ॥
अग्ने । समित्ऽभिः । ईमहे ॥१२॥

उत त्वा भृगुवच्छुचे मनुष्वदग्न आहुत ।
अङ्गिरस्वद्धवामहे ॥१३॥
उत । त्वा । भृगुऽवत् । शुचे । मनुष्वत् । अग्ने । आऽहुत ॥
अङ्गिरस्वत् । हवामहे ॥१३॥

**त्वं ह्यग्ने ऽअग्निना विप्रो विप्रेण सन्त्सता ।**
**सखा सख्या समिध्यसे ॥१४॥**

त्वम् । हि । अग्ने । अग्निना । विप्रः । विप्रेण । सन् । सता ॥
सखा । सख्या । सम्०इध्यसे ॥१४॥

**स त्वं विप्राय दाशुषे रयिं देहि सहस्रिणम् ।**
**अग्ने वीरवतीमिषम् ॥१५॥ ( ३१ )**

सः । त्वम् । विप्राय । दाशुषे । रयिम् । देहि । सहस्रिणम् ॥
अग्ने । वीर०वतीम् । इषम् ॥१५॥

**अग्ने भ्रातः सहस्कृत रोहिदश्व शुचिव्रत ।**
**इमं स्तोमं जुषस्व मे ॥१६॥**

अग्ने । भ्रातरिति । सहः२कृत । रोहित्०अश्व । शुचि०व्रत ॥
इमम् । स्तोमम् । जुषस्व । मे ॥१६॥

**उत त्वाग्ने मम स्तुतो वाश्राय प्रतिहर्यते ।**
**गोष्ठं गावइवाशत ॥१७॥**

उत । त्वा । अग्ने । मम । स्तुतः । वाश्राय । प्रति०हर्यते ॥
गो०स्थम् । गावःऽइव । आशत ॥१७॥

**तुभ्यं ता ऽअङ्गिरस्तम विश्वाः सुक्षितयः पृथक् ।**
**अग्ने कामाय येमिरे ॥१८॥**

तुभ्यम् । ताः । अङ्गिरः२तम । विश्वाः । सु०क्षितयः । पृथक् ॥
अग्ने । कामाय । येमिरे ॥१८॥

**अग्निं धीभिर्मनीषिणो मेधिरासो विपश्चितः ।**

**अद्मसद्याय हिन्विरे ॥१९॥**

अग्निम् । धीभिः । मनीषिणः । मेधिरासः । विपःश्चितः ॥

अद्म०सद्याय । हिन्विरे ॥१९॥

**तं त्वामज्मेषु वाजिनं तन्वाना ऽअग्ने ऽअध्वरम् ।**

**वह्निं होतारमीळते ॥२०॥ ( ३२ )**

तम् । त्वाम् । अज्मेषु । वाजिनम् । तन्वानाः । अग्ने । अध्वरम् ॥

वह्निम् । होतारम् । ईळते ॥२०॥

**पुरुत्रा हि सदृङ्ङसि विशो विश्वा ऽअनु प्रभुः ।**

**समत्सु त्वा हवामहे ॥२१॥**

पुरु०त्रा । हि । स०दृङ् । असि । विशः । विश्वाः । अनु । प्र०भुः ॥

समत्०सु । त्वा । हवामहे ॥२१॥

**तमीळिष्व य ऽआहुतोऽग्निर्विभ्राजते घृतैः ।**

**इमं नः शृणवद्धवम् ॥२२॥**

तम् । ईळिष्व । यः । आ०हुतः । अग्निः । वि०भ्राजते । घृतैः ॥

इमम् । नः । शृणवत् । हवम् ॥२२॥

**तं त्वा वयं हवामहे शृण्वन्तं जातवेदसम् ।**

**अग्ने घ्नन्तमप द्विषः ॥२३॥**

तम् । त्वा । वयम् । हवामहे । शृण्वन्तम् । जात०वेदसम् ॥

अग्ने । घ्नन्तम् । अप । द्विषः ॥२३॥

**विशां राजानमद्भुतमध्यक्षं धर्मणामिमम् ।**

**अग्निमीळे स ऽउ श्रवत् ॥२४॥**

विशाम् । राजानम् । अद्भुतम् । अधि०अक्षम् । धर्मणाम् । इमम् ॥

अग्निम् । ईळे । सः । ऊँ इति । श्रवत् ॥२४॥

**अग्निं विश्वायुवेपसं मर्यं न वाजिनं हितम् ।**

**सप्तिं न वाजयामसि ॥२५॥ ( ३३ )**

अग्निम् । विश्वायु०वेपसम् । मर्यम् । न । वाजिनम् । हितम् ॥

सप्तिम् । न । वाजयामसि ॥२५॥

**घ्नन्मृध्राण्यप द्विषो दहन्रक्षांसि विश्वहा ।**

**अग्ने तिग्मेन दीदिहि ॥२६॥**

घ्नन् । मृध्राणि । अप । द्विषः । दहन् । रक्षांसि । विश्वहा ॥

अग्ने । तिग्मेन । दीदिहि ॥२६॥

**यं त्वा जनास ऽइन्धते मनुष्वदङ्गिरस्तम ।**

**अग्ने स बोधि मे वचः ॥२७॥**

यम् । त्वा । जनासः । इन्धते । मनुष्वत् । अङ्गिरःऽतम ॥

अग्ने । सः । बोधि । मे । वचः ॥२७॥

**यदग्ने दिविजा ऽअस्यप्सुजा वा सहस्कृत ।**

**तं त्वा गीर्भिर्हवामहे ॥२८॥**

यत् । अग्ने । दिवि०जाः । असि । अप्सु०जाः । वा । सहःऽकृत ॥

तम् । त्वा । गीःऽभिः । हवामहे ॥२८॥

**तुभ्यं घेत्ते जना॑ ऽइ॒मे विश्वा॑ः सुक्षि॒तय॒ः पृथ॑क् ।**

**धासिं हि॑न्वन्त्यत्त॑वे ॥२९॥**

तुभ्य॑म् । घ । इत् । ते । जना॑ः । इ॒मे । विश्वा॑ः । सु॒ऽक्षि॒तय॑ः । पृथ॑क् ॥

धासिम् । हि॒न्व॒न्ति । अत्त॑वे ॥२९॥

**ते घेद॑ग्ने स्वा॒ध्योऽह्रा॒ विश्वा॑ नृ॒चक्ष॑सः ।**

**तर॑न्तः स्याम दु॒र्गहा॑ ॥३०॥ (३४)**

ते । घ । इत् । अ॒ग्ने । सु॒ऽआ॒ध्य॑ः । अहा॑ । विश्वा॑ । नृ॒ऽचक्ष॑सः ॥

तर॑न्तः । स्या॒म॒ । दु॒ःऽगहा॑ ॥३०॥

**अ॒ग्निं म॒न्द्रं पु॑रुप्रि॒यं शी॒रं पा॑व॒कशो॑चिषम् ।**

**हृ॒द्भिर्म॒न्द्रेभि॑रीमहे ॥३१॥**

अ॒ग्निम् । म॒न्द्रम् । पु॒रु॒ऽप्रि॒यम् । शी॒रम् । पा॒व॒कऽशो॑चिषम् ॥

हृ॒त्ऽभिः । म॒न्द्रेभिः । ई॒म॒हे ॥३१॥

**स त्वम॑ग्ने वि॒भाव॑सुः सृ॒जन्त्सूर्यो॒ न र॒श्मिभि॑ः ।**

**शर्ध॒न्तमां॑सि जिघ्नसे ॥३२॥**

सः । त्वम् । अ॒ग्ने । वि॒भा॒ऽव॑सुः । सृ॒जन् । सूर्य॑ः । न । र॒श्मि॒ऽभिः ॥

शर्ध॑न् । तमां॑सि । जि॒घ्न॒से ॥३२॥

**तत्ते॑ सहस्व ऽईमहे दा॒त्रं यन्नोप॒दस्य॑ति ।**

**त्वद॑ग्ने॒ वार्य॒ं वसु ॥३३॥ (३५)** [५९६]

तत् । ते॒ । स॒ह॒स्व॒ः । ई॒म॒हे॒ । दा॒त्रम् । यत् । न । उ॒प॒ऽदस्य॑ति ॥

त्वत् । अ॒ग्ने॒ । वार्य॑म् । वसु ॥३३॥

# ( ४४ )

३० विरूप आङ्गिरसः । अग्निः । गायत्री ।

**समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।**

**आस्मिन्हव्या जुहोतन ॥१॥**

सम्०इधा । अग्निम् । दुवस्यत । घृतैः । बोधयत । अतिथिम् ॥

आ । अस्मिन् । हव्या । जुहोतन ॥१॥

**अग्ने स्तोमं जुषस्व मे वर्द्धस्वानेन मन्मना ।**

**प्रति सूक्तानि हर्य नः ॥२॥**

अग्ने । स्तोमम् । जुषस्व । मे । वर्द्धस्व । अनेन । मन्मना ॥

प्रति । सु०उक्तानि । हर्य । नः ॥२॥

**अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे ।**

**देवाँ ऽआ सादयादिह ॥३॥**

अग्निम् । दूतम् । पुरः । दधे । हव्य०वाहम् । उप । ब्रुवे ॥

देवान् । आ । सादयात् । इह ॥३॥

**उत्ते बृहन्तो ऽअर्चयः समिधानस्य दीदिवः ।**

**अग्ने शुक्रास ऽईरते ॥४॥**

उत् । ते । बृहन्तः । अर्चयः । सम्०इधानस्य । दीदि०वः ॥

अग्ने । शुक्रासः । ईरते ॥४॥

**उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्यत ।**

**अग्ने हव्या जुषस्व नः ॥५॥ ( ३६ )**

उप॑ । त्वा॒ । जु॒ह्वः॑ । मम॑ । घृ॒ताचीः॑ । य॒न्तु॒ । ह॒र्य॒त॒ ॥
अग्ने॑ । ह॒व्या । जु॒ष॒स्व॒ । नः॒ ॥५॥

म॒न्द्रं होता॑रमृ॒त्विजं॑ चि॒त्रभा॑नुं वि॒भाव॑सुम् ।
अ॒ग्निमी॑ळे॒ स ऽउ॑ श्रवत् ॥६॥
म॒न्द्रम् । होता॑रम् । ऋ॒त्विज॑म् । चि॒त्र॰भा॑नुम् । वि॒भा॰व॑सुम् ॥
अ॒ग्निम् । ई॒ळे॒ । सः । ऊँ इति॑ । श्र॒व॒त् ॥६॥

प्र॒त्नं होता॑र॒मीड्यं॒ जुष्ट॑म॒ग्निं क॒विक्र॑तुम् ।
अ॒ध्व॒राणा॑मभि॒श्रिय॑म् ॥७॥
प्र॒त्नम् । होता॑रम् । ईड्य॑म् । जुष्ट॑म् । अ॒ग्निम् । क॒वि॰क्र॑तुम् ॥
अ॒ध्व॒राणा॑म् । अ॒भि॒॰श्रिय॑म् ॥७॥

जु॒षा॒णो ऽअ॑ङ्गिरस्तमे॒मा ह॒व्यान्या॑नु॒षक् ।
अग्ने॑ य॒ज्ञं न॑य ऽऋतु॒था ॥८॥
जु॒षा॒णः । अ॒ङ्गि॒रः॒ऽत॒म॒ । इ॒मा । ह॒व्यानि॑ । आ॒नु॒षक् ॥
अग्ने॑ । य॒ज्ञम् । न॒य॒ । ऋ॒तु॒॰था ॥८॥

स॒मि॒धा॒न ऽउ॑ सन्त्य॒ शुक्र॑शोच ऽइ॒हा व॑ह ।
चि॒कि॒त्वान्दैव्यं॒ जन॑म् ॥९॥
स॒म्॰इ॒धा॒नः । ऊँ इति॑ । स॒न्त्य॒ । शुक्र॑॰शोचे । इ॒ह । आ । व॒ह॒ ॥
चि॒कि॒त्वान् । दैव्य॑म् । जन॑म् ॥९॥

वि॒प्रं होता॑रम॒द्रुहं॑ धू॒मके॑तुं वि॒भाव॑सुम् ।
य॒ज्ञानां॑ के॒तुमी॑महे ॥१०॥ ( ३७ )

विप्रम् । होतारम् । अद्रुहम् । धूम०केतुम् । विभा०वसुम् ॥
यज्ञानाम् । केतुम् । ईमहे ॥१०॥

अग्ने नि पाहि नस्त्वं प्रति ष्म देव रीषतः ।
भिन्धि द्वेषः सहस्कृत ॥११॥
अग्ने । नि । पाहि । नः । त्वम् । प्रति । स्म । देव । रिषतः ॥
भिन्धि । द्वेषः । सहः२कृत ॥११॥

अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं१ स्वाम् ।
कविर्विप्रेण वावृधे ॥१२॥
अग्निः । प्रत्नेन । मन्मना । शुम्भानः । तन्वम् । स्वाम् ॥
कविः । विप्रेण । ववृधे ॥१२॥

ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम् ।
अस्मिन्यज्ञे स्वध्वरे ॥१३॥
ऊर्जः । नपातम् । आ । हुवे । अग्निम् । पावक०शोचिषम् ॥
अस्मिन् । यज्ञे । सु०अध्वरे ॥१३॥

स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा ।
देवैरा सत्सि बर्हिषि ॥१४॥
सः । नः । मित्र०महः । त्वम् । अग्ने । शुक्रेण । शोचिषा ॥
देवैः । आ । सत्सि । बर्हिषि ॥१४॥

यो ऽअग्निं तन्वो३ दमे देवं मर्त्तः सपर्यति ।
तस्मा ऽइद्दीदयद्वसु ॥१५॥ ( ३८ )

यः । अग्निम् । तन्वः । दमे । देवम् । मर्तः । सपर्यति ॥
तस्मै । इत् । दीदयत् । वसु ॥१५॥

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या ऽअयम् ।
अपां रेतांसि जिन्वति ॥१६॥
अग्निः । मूर्धा । दिवः । ककुत् । पतिः । पृथिव्याः । अयम् ॥
अपाम् । रेतांसि । जिन्वति ॥१६॥

उदग्ने शुचयस्तव शुक्रा भ्राजन्त ऽईरते ।
तव ज्योतींष्यर्चयः ॥१७॥
उत् । अग्ने । शुचयः । तव । शुक्राः । भ्राजन्तः । ईरते ॥
तव । ज्योतींषि । अर्चयः ॥१७॥

ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः ।
स्तोता स्यां तव शर्मणि ॥१८॥
ईशिषे । वार्यस्य । हि । दात्रस्य । अग्ने । स्वः२पतिः ॥
स्तोता । स्याम् । तव । शर्मणि ॥१८॥

त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः ।
त्वां वर्द्धन्तु नो गिरः ॥१९॥
त्वाम् । अग्ने । मनीषिणः । त्वाम् । हिन्वन्ति । चित्ति०भिः ॥
त्वाम् । वर्द्धन्तु । नः । गिरः ॥१९॥

अदब्धस्य स्वधावतो दूतस्य रेभतः सदा ।
अग्नेः सख्यं वृणीमहे ॥२०॥ ( ३९ )

अदब्धस्य । स्वधा०वतः । दूतस्य । रेभतः । सदा ॥
अग्नेः । सख्यम् । वृणीमहे ॥२०॥

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः ।
शुची रोचत ऽआहुतः ॥२१॥
अग्निः । शुचिव्रत०तमः । शुचिः । विप्रः । शुचिः । कविः ॥
शुचिः । रोचते । आ०हुतः ॥२१॥

उत त्वा धीतयो मम गिरो वर्द्धन्तु विश्वहा ।
अग्ने सख्यस्य बोधि नः ॥२२॥
उत । त्वा । धीतयः । मम । गिरः । वर्द्धन्तु । विस्वहा ॥
अग्ने । सख्यस्य । बोधि । नः ॥२२॥

यदग्ने स्यामहं त्वं त्वं वा घा स्या ऽअहम् ।
स्युष्टे सत्या ऽइहाशिषः ॥२३॥
यत् । अग्ने । स्याम् । अहम् । त्वम् । त्वम् । वा । घ । स्याः । अहम् ॥
स्युः । ते । सत्याः । इह । आ०शिषः ॥२३॥

वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः ।
स्याम ते सुमतावपि ॥२४॥
वसुः । वसु०पतिः । हि । कम् । असि । अग्ने । विभा०वसुः ॥
स्याम । ते । सु०मतौ । अपि ॥२४॥

अग्ने धृतव्रताय ते समुद्रायेव सिन्धवः ।
गिरो वाश्रास ऽईरते ॥२५॥ (४०)

अग्ने । धृत॰व्रताय । ते । समुद्राय॑ऽइव । सिन्धवः ॥
गिरः । वाश्रासः । ईरते ॥२५॥

**युवानं विश्पतिं कविं विश्वादं पुरुवेपसम् ।**
**अग्निं शुम्भामि मन्मभिः ॥२६॥**
युवानम् । विश्पतिम् । कविम् । विश्व॰अदम् । पुरु॰वेपसम् ॥
अग्निम् । शुम्भामि । मन्म॰भिः ॥२६॥

**यज्ञानां रथ्ये वयं तिग्मजम्भाय वीळवे ।**
**स्तोमैरिषेमाग्नये ॥२७॥**
यज्ञानाम् । रथ्ये । वयम् । तिग्म॰जम्भाय । वीळवे ॥
स्तोमैः । इषेम । अग्नये ॥२७॥

**अयमग्ने त्वे ऽअपि जरिता भूतु सन्त्य ।**
**तस्मै पावक मृळय ॥२८॥**
अयम् । अग्ने । त्वे इति । अपि । जरिता । भूतु । सन्त्य ॥
तस्मै । पावक । मृळय ॥२८॥

**धीरो ह्यस्यद्मसद्विप्रो न जागृविः सदा ।**
**अग्ने दीदयसि द्यवि ॥२९॥**
धीरः । हि । असि । अद्म॰सत् । विप्रः । न । जागृविः । सदा ॥
अग्ने । दीदयसि । द्यवि ॥२९॥

**पुराग्ने दुरितेभ्यः पुरा मृध्रेभ्यः कवे ।**
**प्र ण ऽआयुर्वसो तिर ॥३०॥ ( ४१ )** [ ६२६ ]

पुरा । अग्ने । दुःऽइतेभ्यः । पुरा । मृध्रेभ्यः । कवे ॥
प्र । नः । आयुः । वसो इति । तिर ॥३०॥

# ( ४५ )

४२ त्रिशोकः काण्वः । इन्द्रः, १ अग्नीन्द्रौ । गायत्री ।

**आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।**
**येषामिन्द्रो युवा सखा ॥१॥**
आ । घ । ये । अग्निम् । इन्धते । स्तृणन्ति । बर्हिः । आनुषक् ॥
येषाम् । इन्द्रः । युवा । सखा ॥१॥

**बृहन्निदिध्म ऽएषां भूरि शस्तं पृथुः स्वरुः ।**
**येषामिन्द्रो युवा सखा ॥२॥**
बृहन् । इत् । इध्मः । एषाम् । भूरि । शस्तम् । पृथु । स्वरुः ॥
येषाम् । इन्द्रः । युवा । सखा ॥२॥

**अयुद्ध ऽइद्युधा वृतं शूर ऽआजति सत्वभिः ।**
**येषामिन्द्रो युवा सखा ॥३॥**
अयुद्धः । इत् । युधा । वृतम् । शूरः । आ । अजति । सत्वऽभिः ॥
येषाम् । इन्द्रः । युवा । सखा ॥३॥

**आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् ।**
**क ऽउग्राः के ह शृण्विरे ॥४॥**
आ । बुन्दम् । वृत्रऽहा । ददे । जातः । पृच्छत् । वि । मातरम् ॥
के । उग्राः । के । ह । शृण्विरे ॥४॥

**प्रति त्वा शवसी वदद्गिरावप्सो न योधिषत् ।**
**यस्ते शत्रुत्वमाचके ॥५॥ (४२)**
प्रति । त्वा । शवसी । वदत् । गिरौ । अप्सः । न । योधिषत् ॥
यः । ते । शत्रुऽत्वम् । आऽचके ॥५॥

**उत त्वं मघवञ्छृणु यस्ते वष्टि ववक्षि तत् ।**
**यद्वीळयासि वीळु तत् ॥६॥**
उत । त्वम् । मघऽवन् । शृणु । यः । ते । वष्टि । ववक्षि । तत् ॥
यत् । वीळयासि । वीळु । तत् ॥६॥

**यदाजिं यात्याजिकृदिन्द्रः स्वश्वयुरुप ।**
**रथीतमो रथीनाम् ॥७॥**
यत् । आजिम् । याति । आजिऽकृत् । इन्द्रः । स्वश्वऽयुः । उप ॥
रथिऽतमः । रथीनाम् ॥७॥

**वि षु विश्वा अभियुजो वज्रिन्विष्वग्यथा वृह ।**
**भवा नः सुश्रवस्तमः ॥८॥**
वि । सु । विश्वाः । अभिऽयुजः । वज्रिन् । विष्वक् । यथा । वृह ॥
भव । नः । सुश्रवःऽतमः ॥८॥

**अस्माकं सु रथं पुर इन्द्रः कृणोतु सातये ।**
**न यं धूर्वन्ति धूर्तयः ॥९॥**
अस्माकम् । सु । रथम् । पुरः । इन्द्रः । कृणोतु । सातये ॥
न । यम् । धूर्वन्ति । धूर्तयः ॥९॥

**वृज्याम॑ ते॒ परि॒ द्विषोऽरं॑ ते शक्र दा॒वने॑ ।**

**ग॒मेमेदि॑न्द्र॒ गोम॑तः ॥१०॥ (४३)**

वृ॒ज्याम॑ । ते॒ । परि॑ । द्विषः॑ । अर॑म् । ते॒ । श॒क्र॒ । दा॒वने॑ ॥

ग॒मेम॑ । इत् । इ॒न्द्र॒ । गोऽम॑तः ॥१०॥

**शनै॑श्चि॒द्यन्तो॑ ऽअद्रि॒वोऽश्वा॑वन्तः शत॒ग्विनः॑ ।**

**वि॒वक्ष॑णा ऽअ॒नेह॒सः॑ ॥११॥**

शनैः॑ । चि॒त् । यन्तः॑ । अ॒द्रि॒ऽव॒ः । अश्व॑ऽवन्तः । श॒त॒ऽग्विनः॑ ॥

वि॒वक्ष॑णाः । अ॒ने॒ह॒सः॑ ॥११॥

**ऊ॒र्ध्वा हि ते॑ दि॒वेदि॑वे स॒हस्रा॑ सू॒नृता॑ श॒ता ।**

**ज॒रि॒तृभ्यो॑ वि॒मंह॑ते ॥१२॥**

ऊ॒र्ध्वा । हि । ते॒ । दि॒वेऽदि॑वे । स॒हस्रा॑ । सू॒नृता॑ । श॒ता ॥

ज॒रि॒तृऽभ्यः॑ । वि॒ऽमंह॑ते ॥१२॥

**वि॒द्मा हि त्वा॑ धनंज॒यमिन्द्र॑ दृ॒ळ्हा चि॑दारु॒जम् ।**

**आ॒दा॒रि॒णं॒ यथा॒ गय॑म् ॥१३॥**

वि॒द्म । हि । त्वा॒ । ध॒न॒म्ऽज॒यम् । इन्द्र॑ । दृ॒ळ्हा । चि॒त् । आ॒ऽरु॒जम् ॥

आ॒ऽदा॒रिण॑म् । यथा॑ । गय॑म् ॥१३॥

**क॒कु॒हं चि॑त्त्वा कवे॒ मन्द॑न्तु धृष्ण॒विन्द॑वः ।**

**आ त्वा॑ प॒णिं यदीम॑हे ॥१४॥**

क॒कु॒हम् । चि॒त् । त्वा॒ । क॒वे॒ । मन्द॑न्तु । धृ॒ष्णो॒ इति॑ । इन्द॑वः ॥

आ । त्वा॒ । प॒णिम् । यत् । ईम॑हे ॥१४॥

**यस्ते रेवाँ ऽअदाशुरिः प्रममर्षं मघत्तये ।**

**तस्य नो वेद ऽआ भर ॥१४॥ (४४)**

यः । ते । रेवान् । अदाशुरिः । प्र॰ममर्षं । मघत्तये ॥

तस्य । नः । वेदः । आ । भर ॥१५॥

**इम ऽउ त्वा वि चक्षते सखाय ऽइन्द्र सोमिनः ।**

**पुष्टावन्तो यथा पशुम् ॥१६॥**

इमे । ऊँ इति । त्वा । वि । चक्षते । सखायः । इन्द्र । सोमिनः ॥

पुष्ट॰वन्तः । यथा । पशुम् ॥१६॥

**उत त्वाबधिरं वयं श्रुत्कर्णं सन्तमूतये ।**

**दूरादिह हवामहे ॥१७॥**

उत । त्वा । अबधिरम् । वयम् । श्रुत्॰कर्णम् । सन्तम् । ऊतये ॥

दूरात् । इह । हवामहे ॥१७॥

**यच्छुश्रूया ऽइमं हवं दुर्मर्षं चक्रिया ऽउत ।**

**भवेरापिर्नो ऽअन्तमः ॥१८॥**

यत् । शुश्रूयाः । इमम् । हवम् । दुः॰मर्षम् । चक्रियाः । उत ॥

भवेः । आपिः । नः । अन्तमः ॥१८॥

**यच्चिद्धि ते ऽअपि व्यथिर्जगन्वांसो ऽअमन्महि ।**

**गोदा ऽइदिन्द्र बोधि नः ॥१९॥**

यत् । चित् । हि । ते । अपि । व्यथिः । जगन्वांसः । अमन्महि ॥

गो॰दाः । इत् । इन्द्र । बोधि । नः ॥१९॥

आ त्वा र॒म्भं न जिव्र॑यो रर॒म्भा श॑वसस्पते ।
उ॒श्मसि॑ त्वा स॒धस्थ॒ ऽआ ॥२०॥ (४५)
आ । त्वा॒ । र॒म्भम् । न । जिव्र॑यः । र॒र॒म्भ । श॒व॒सः॒ । प॒ते॒ ॥
उ॒श्मसि॑ । त्वा॒ । स॒ध॒ऽस्थे॑ । आ ॥२०॥

स्तो॒त्रमिन्द्रा॑य गायत पुरुनृ॒म्णाय॒ सत्व॑ने ।
नकि॒र्यं वृ॒ण्व॒ते यु॒धि ॥२१॥
स्तो॒त्रम् । इन्द्रा॑य । गा॒य॒त॒ । पु॒रु॒ऽनृ॒म्णाय॑ । सत्व॑ने ॥
नकिः॑ । यम् । वृ॒ण्व॒ते । यु॒धि ॥२१॥

अ॒भि त्वा॑ वृषभा सु॒ते सु॒तं सृ॑जामि पी॒तये॑ ।
तृ॒म्पा व्य॑श्नुही॒ मद॑म् ॥२२॥
अ॒भि । त्वा॒ । वृ॒ष॒भ॒ । सु॒ते । सु॒तम् । सृ॒जा॒मि॒ । पी॒तये॑ ॥
तृ॒म्प । वि । अ॒श्नु॒हि॒ । मद॑म् ॥२२॥

मा त्वा॑ मू॒रा ऽअ॑वि॒ष्यवो॒ मोप॒हस्वा॑न॒ ऽआ द॑भन् ।
माकीं॑ ब्रह्म॒द्विषो॑ वनः ॥२३॥
मा । त्वा॒ । मू॒राः । अ॒वि॒ष्यवः॑ । मा । उ॒प॒ऽह॒स्वानः॑ । आ । द॒भ॒न् ॥
माकी॑म् । ब्र॒ह्म॒ऽद्विषः॑ । व॒नः॒ ॥२३॥

इ॒ह त्वा॒ गोप॑रीणसा म॒हे म॑न्दन्तु राध॑से ।
सरो॑ गौ॒रो यथा॑ पिब ॥२४॥
इ॒ह । त्वा॒ । गोऽप॑रीणसा । म॒हे । म॒न्द॒न्तु॒ । राध॑से ॥
सरः॑ । गौ॒रः । यथा॑ । पि॒ब॒ ॥२४॥

या वृत्रहा परावति सना नवा च चुच्युवे ।
ता संसत्सु प्र वोचत ॥२५॥ (४६)
या । वृत्र०हा । परा०वति । सना । नवा । च । चुच्युवे ॥
ता । संसत्०सु । प्र । वोचत ॥२५॥

अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे ।
अत्रादेदिष्ट पौंस्यम् ॥२६॥
अपिबत् । कद्रुवः । सुतम् । इन्द्रः । सहस्र०बाह्वे ॥
अत्र । अदेदिष्ट । पौंस्यम् ॥२६॥

सत्यं तत्तुर्वशे यदौ विदानो ऽअह्नवाय्यम् ।
व्यानट् तुर्वणे शमि ॥२७॥
सत्यम् । तत् । तुर्वशे । यदौ । विदानः । अह्नवाय्यम् ॥
वि । आनट् । तुर्वणे । शमि ॥२७॥

तरणिं वो जनानां त्रदं वाजस्य गोमतः ।
समानमु प्र शंसिषम् ॥२८॥
तरणिम् । वः । जनानाम् । त्रदम् । वाजस्य । गो०मतः ॥
समानम् । ऊँ इति । प्र । शंसिषम् ॥२८॥

ऋभुक्षणं न वर्तव ऽउक्थेषु तुग्र्यावृधम् ।
इन्द्रं सोमे सचा सुते ॥२९॥
ऋभुक्षणम् । न । वर्तवे । उक्थेषु । तुग्र्य०वृधम् ॥
इन्द्रम् । सोमे । सचा । सुते ॥२९॥

**यः कृन्तदिद्वि योन्यं त्रिशोकाय गिरिं पृथुम् ।**
**गोभ्यो गातुं निरेतवे ॥३०॥ (४७)**
यः । कृन्तत् । इत् । वि । योन्यम् । त्रिऽशोकाय । गिरिम् । पृथुम् ॥
गोऽभ्यः । गातुम् । निःऽएतवे ॥३०॥

**यद्दधिषे मनस्यसि मन्दानः प्रेदियक्षसि ।**
**मा तत्करिन्द्र मृळय ॥३१॥**
यत् । दधिषे । मनस्यसि । मन्दानः । प्र । इत् । इयक्षसि ॥
मा । तत् । कः । इन्द्र । मृळय ॥३१॥

**दभ्रं चिद्धि त्वावतः कृतं शृण्वे ऽअधि क्षमि ।**
**जिगात्विन्द्र ते मनः ॥३२॥**
दभ्रम् । चित् । हि । त्वाऽवतः । कृतम् । शृण्वे । अधि । क्षमि ॥
जिगातु । इन्द्र । ते । मनः ॥३२॥

**तवेदु ताः सुकीर्तयोऽसन्नुत प्रशस्तयः ।**
**यदिन्द्र मृळयासि नः ॥३३॥**
तव । इत् । ऊँ इति । ताः । सुऽकीर्तयः । असन् । उत । प्रऽशस्तयः ॥
यत् । इन्द्र । मृळयासि । नः ॥३३॥

**मा न ऽएकस्मिन्नागसि मा द्वयोरुत त्रिषु ।**
**वधीर्मा शूर भूरिषु ॥३४॥**
मा । नः । एकस्मिन् । आगसि । मा । द्वयोः । उत । त्रिषु ॥
वधीः । मा । शूर । भूरिषु ॥३४॥

बिभया हि त्वावत ऽउग्रादभिप्रभङ्गिणः ।
दस्मादहमृतीषहः ॥३५॥ (४८)
बिभय । हि । त्वाऽवतः । उग्रात् । अभिऽप्रभङ्गिनः ॥
दस्मात् । अहम् । ऋतिऽसहः ॥३५॥

मा सख्युः शूनमा विदे मा पुत्रस्य प्रभूवसो ।
आवृत्वद्भूतु ते मनः ॥३६॥
मा । सख्युः । शूनम् । आ । विदे । मा । पुत्रस्य । प्रभुवसो इति प्रभुऽवसो ॥
आऽवृत्वत् । भूतु । ते । मनः ॥३६॥

को नु मर्या ऽअमिथितः सखा सखायमब्रवीत् ।
जहा को ऽअस्मदीषते ॥३७॥
कः । नु । मर्याः । अमिथितः । सखा । सखायम् । अब्रवीत् ॥
जहा । कः । अस्मत् । ईषते ॥३७॥

एवारे वृषभा सुतेऽसिन्वन्भूर्यावयः ।
श्वघ्नीव निवता चरन् ॥३८॥
एवारे । वृषभ । सुते । असिन्वन् । भूरि । आवयः ॥
श्वघ्नीऽइव । निऽवता । चरन् ॥३८॥

आ त ऽएता वचोयुजा हरी गृभ्णे सुमद्रथा ।
यदीं ब्रह्मभ्य ऽइद्ददः ॥३९॥
आ । ते । एता । वचःऽयुजा । हरी इति । गृभ्णे । सुमत्ऽरथा ॥
यत् । ईम् । ब्रह्मऽभ्यः । इत् । ददः ॥३९॥

**भिन्धि विश्वा ऽअप द्विषः परि बाधो जही मृधः ।**

**वसु स्पार्हं तदा भर ॥४०॥**

भिन्धि । विश्वाः । अप । द्विषः । परि । बाधः । जहि । मृधः ॥

वसु । स्पार्हम् । तत् । आ । भर ॥४०॥

**यद्वीळाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।**

**वसु स्पार्हं तदा भर ॥४१॥**

यत् । वीळौ । इन्द्र । यत् । स्थिरे । यत् । पर्शाने । परा०भृतम् ॥

वसु । स्पार्हम् । तत् । आ । भर ॥४१॥

**यस्य ते विश्वमानुषो भूरेर्दत्तस्य वेदति ।**

**वसु स्पार्हं तदा भर ॥४२॥ (४९)** [ ६६८ ]

यस्य । ते । विश्व०मानुषः । भूरेः । दत्तस्य । वेदति ॥

वसु । स्पार्हम् । तत् । आ । भर ॥४२॥

॥ इति षष्ठाष्टके तृतीयोऽध्यायः ॥ ३ ॥

# तृतीयाध्यायस्य मन्त्रवर्गानुक्रमणी

प्र कृतान्यृजीषिणः ॥१॥
यदि मे रारणः सुत ॥२॥
यः संस्थे चिच्छतक्रतु ॥३॥
न नूनं ब्रह्मणामृणं ॥४॥
अतीहि मन्युषाविणं ॥५॥
अहन्वृत्रमृचीषम ॥६॥
वयं घ त्वा सुतावन्त ॥७॥
यो धृषितो योऽवृतो ॥८॥
वृषणस्ते ऽअभीशवो ॥९॥
नहि पास्तव नो मम ॥१०॥
एन्द्र याहि हरिभि ॥११॥
स्मत्पुरंधिर्न ऽआ गहि ॥१२॥
आ नो याह्युपश्रु ॥१३॥
अग्निनेन्द्रेण वरुणेन ॥१४॥
हारिद्रवेव पतथो ॥१५॥
मित्रावरुणवन्ता ऽउत ॥१६॥
अत्रेरिव शृणुतं ॥१७॥
अवितासि सुन्वतो ॥१८॥
प्रेदं ब्रह्म वृत्रतूर्ये ॥१९॥
यज्ञस्य हि स्थ ऽऋत्विजा ॥२०॥
प्रातर्यावभिरा गतं ॥२१॥
अग्निर्मस्तोष्यृग ॥२२॥
अग्निर्जाता देवानाम ॥२३॥
इन्द्राग्नी युवं सु नः ॥२४॥
यदिन्द्राग्नी जना ऽइमे ॥२५॥
अस्मा ऽऊषु प्रभूतये ॥२६॥
यस्मिन्विश्वानि काव्या ॥२७॥
अस्तभ्नाद् द्यामसुरो ॥२८॥
इमे विप्रस्य वेधसो ॥२९॥
कृष्णा रजांसि पत्सुतः ॥३०॥
उक्षान्नाय वशान्नाय ॥३१॥
अग्ने भ्रातः सहस्कृत ॥३२॥
पुरुत्रा हि सदृङ्ङसि ॥३३॥
घ्नन्मृध्राण्यप द्विषो ॥३४॥
अग्निं मन्द्रं पुरुप्रियं ॥३५॥
समिधाग्निं दुवस्यत ॥३६॥
मन्द्रं होतारमृत्विजं ॥३७॥
अग्ने नि पाहि नस्त्वं ॥३८॥
अग्निर्मूर्धा दिवः ककुत् ॥३९॥
अग्निः शुचिव्रततमः ॥४०॥
युवानं विश्पतिं कविं ॥४१॥
आ घा ये अग्निमिन्धते ॥४२॥
उत त्वं मघवञ्छृणु ॥४३॥
शानैश्चिद्यन्तो ऽअद्रिवो ॥४४॥
इम ऽउ त्वा वि चक्षते ॥४५॥
स्तोत्रमिन्द्राय गायत ॥४६॥
अपिबत्कद्रुवः ॥४७॥
यद्दधिषे मनस्यसि ॥४८॥
मा सख्युः शूनमा विदे ॥४९॥

॥ इति शाङ्खायनसंहितायां षष्ठाष्टके तृतीयोऽध्यायः ॥
(तृतीयाध्याये वर्गाः ४९, सूक्तानि १४, ऋचः २५८)

# ॥ षष्ठाष्टके चतुर्थोऽध्यायः॥

## अथ चतुर्थोऽध्यायः॥४॥ वर्गाः १-५४ ] [ अष्टममण्डले सूक्तानि ४६-६७ ]

### ( ४६ )

३३ वशोऽश्व्यः । इन्द्रः, २१-२४ कानीतः पृथुश्रवाः, २५-२८, ३२ वायुः । गायत्री, १ पादनिचृत्, ५ ककुप्, ७ बृहती, ८ अनुष्टुप्, ९ सतोबृहती, ११ विपरीतोत्तरः प्रगाथः = (बृहती, विपरीता), १३ द्विपदा जगती, १४ बृहती पिपीलिकमध्या, १५ ककुम्न्यंकुशिरा, १६ विराट्, १७ जगती, १८ उपरिष्टाद् बृहती, १९ बृहती, २० विषमपदा बृहती, २१-२४ पङ्क्तिः, २२ संस्तारपङ्क्तिः, २५-२८ प्रगाथः = (बृहती, सतोबृहती), ३० द्विपदा विराट्, ३१ उष्णिक्, ३२ पङ्क्तिः ।

**त्वावतः पुरूवसो वयमिन्द्र प्रणेतः ।**

**स्मसि स्थातर्हरीणाम् ॥१॥**

त्वाऽवतः । पुरुवसो इति पुरुऽवसो । वयम् । इन्द्र । प्रनेतरिति प्रऽनेतः ॥

स्मसि । स्थातः । हरीणाम् ॥१॥

**त्वां हि सत्यमद्रिवो विद्म दातारमिषाम् ।**

**विद्म दातारं रयीणाम् ॥२॥**

त्वाम् । हि । सत्यम् । अद्रिऽवः । विद्म । दातारम् । इषाम् ॥

विद्म । दातारम् । रयीणाम् ॥२॥

**आ यस्य ते महिमानं शतमूते शतक्रतो ।**

**गीर्भिर्गृणन्ति कारवः ॥३॥**

आ । यस्य । ते । महिमानम् । शतम्ऽऊते । शतक्रतो इति शतऽक्रतो ॥

गीःऽभिः । गृणन्ति । कारवः ॥३॥

**सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा ।**

**मित्रः पान्त्यद्रुहः ॥४॥**

सु॰नीथः । घ । सः । मर्त्यः । यम् । मरुतः । यम् । अर्यमा ॥
मित्रः । पान्ति । अद्रुहः ॥४॥

**दधानो गोमदश्ववत्सुवीर्यमादित्यजूत ऽएधते ।**
**सदा राया पुरुस्पृहा ॥५॥ (१)**
दधानः । गो॰मत् । अश्व॰वत् । सु॰वीर्यम् । आदित्य॰जूतः । एधते ॥
सदा । राया । पुरु॰स्पृहा ॥५॥

**तमिन्द्रं दानमीमहे शवसानमभीर्वम् ।**
**ईशानं राय ऽईमहे ॥६॥**
तम् । इन्द्रम् । दानम् । ईमहे । शवसानम् । अभीर्वम् ॥
ईशानम् । रायः । ईमहे ॥६॥

**तस्मिन्हि सन्त्यूतयो विश्वा ऽअभीरवः सचा ।**
**तमा वहन्तु सप्तयः पुरूवसुं मदाय हरयः सुतम् ॥७॥**
तस्मिन् । हि । सन्ति । ऊतयः । विश्वाः । अभीरवः । सचा ॥
तम् । आ । वहन्तु । सप्तयः । पुरु॰वसुम् । मदाय । हरयः । सुतम् ॥७॥

**यस्ते मदो वरेण्यो य ऽइन्द्र वृत्रहन्तमः ।**
**य ऽआददिः स्वर्नृभिर्यः पृतनासु दुष्टरः ॥८॥**
यः । ते । मदः । वरेण्यः । यः । इन्द्र । वृत्रहन्॰तमः ॥
यः । आ॰ददिः । स्वः । नृ॰भिः । यः । पृतनासु । दुस्तरः ॥८॥

**यो दुष्टरो विश्ववार श्रवाय्यो वाजेष्वस्ति तरुता ।**
**स नः शविष्ठ सवना वसो गहि गमेम गोमति व्रजे ॥९॥**

यः । दुस्तरः । विश्व०वार । श्रवाय्यः । वाजेषु ।
अस्ति । तरुता ॥ सः । नः । शविष्ठ । सवना ।
आ । वसो इति । गहि । गमेम । गो०मति । व्रजे ॥९॥

**गव्यो षु णो यथा पुराश्वयोत रथया ।**
**वरिवस्य महामह ॥१०॥ (२)**
गव्य इति । सु । नः । यथा । पुरा । अश्व०या । उत । रथ०या ॥
वरिवस्य । महा०मह ॥१०॥

**नहि ते शूर राधसोऽन्तं विन्दामि सत्रा ।**
**दशस्या नो मघवन्नू चिदद्रिवो धियो वाजेभिराविथ ॥११॥**
नहि । ते । शूर । राधसः । अन्तम् । विन्दामि । सत्रा ॥
दशस्य । नः । मघ०वन् । नु । चित् । अद्रि०वः । धियः । वाजेभिः । आविथ ॥११॥

**य ऋष्वः श्रावयत्सखा विश्वेत्स वेद जनिमा पुरुष्टुतः ।**
**तं विश्वे मानुषा युगेन्द्रं हवन्ते तविषं यतस्रुचः ॥१२॥**
यः । ऋष्वः । श्रवयत्०सखा । विश्वा । इत् । सः ।
वेद । जनिम । पुरु०स्तुतः ॥ तम् । विश्वे । मानुषा ।
युगा । इन्द्रम् । हवन्ते । तविषम् । यत०स्रुचः ॥१२॥

**स नो वाजेष्वविता पुरूवसुः पुरस्थाता मघवा वृत्रहा भुवत् ॥१३॥**
सः । नः । वाजेषु । अविता । पुरु०वसुः ।
पुरः२स्थाता । मघ०वा । वृत्र०हा । भुवत् ॥१३॥

**अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।**
**इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥१४॥**

अभि । वः । वीरम् । अन्धसः । मदेषु । गाय ।
गिरा । महा । वि०चेतसम् ॥ इन्द्रम् । नाम ।
श्रुत्यम् । शाकिनम् । वचः । यथा ॥१४॥

**ददी रेक्णस्तन्वे ददिर्वसु ददिर्वाजेषु पुरुहूत वाजिनम् ।**
**नूनमथ ॥१५॥ (३)**
ददिः । रेक्णः । तन्वे । ददिः । वसु । ददिः । वाजेषु । पुरु०हूत । वाजिनम् ॥
नूनम् । अथ ॥१५॥

**विश्वेषामिरज्यन्तं वसूनां सासह्वांसं चिदस्य वर्पसः ।**
**कृपयतो नूनमत्यथ ॥१६॥**
विश्वेषाम् । इरज्यन्तम् । वसूनाम् । ससह्वांसम् । चित् । अस्य । वर्पसः ॥
कृप०यतः । नूनम् । अति । अथ ॥१६॥

**महः सु वो ऽअरमिषे स्तवामहे मीळ्हुषे ऽअरंगमाय जग्मये ।**
**यज्ञेभिर्गीर्भिर्विश्वमनुषां मरुतामियक्षसि गाये त्वा नमसा गिरा ॥१७॥**
महः । सु । वः । अरम् । इषे । स्तवामहे । मीळ्हुषे ।
अरम्०गमाय । जग्मये ॥ यज्ञेभिः । गीः२भिः । विश्व०मनुषाम् ।
मरुताम् । इयक्षसि । गाये । त्वा । नमसा । गिरा ॥१७॥

**ये पातयन्ते ऽअज्मभिर्गिरीणां स्नुभिरेषाम् ।**
**यज्ञं महिष्वणीनां सुम्नं तुविष्वणीनां प्राध्वरे ॥१८॥**
ये । पातयन्ते । अज्म०भिः । गिरीणाम् ।
स्नु०भिः । एषाम् ॥ यज्ञम् । महि०स्वनीनाम् ।
सुम्नम् । तुवि०स्वनीनाम् । प्र । अध्वरे ॥१८॥

प्रभङ्गं दुर्मतीनामिन्द्र शविष्ठा भर ।
रयिमस्मभ्यं युज्यं चोदयन्मते ज्येष्ठं चोदयन्मते ॥१९॥
प्र०भङ्गम् । दुः२मतीनाम् । इन्द्र । शविष्ठ ।
आ । भर ॥ रयिम् । अस्मभ्यम् । युज्यम् ।
चोदयत्०मते । ज्येष्ठम् । चोदयत्०मते ॥१९॥

सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत ।
प्रासहा सम्राट् सहुरिं सहन्तं भुज्युं वाजेषु पूर्व्यम् ॥२०॥ (४)
सनितरिति । सु०सनितः । उग्र । चित्र ।
चेतिष्ठ । सूनृत ॥ प्र०सहा । सम्०राट् । सहुरिम् ।
सहन्तम् । भुज्युम् । वाजेषु । पूर्व्यम् ॥२०॥

आ स ऽएतु य ऽईवदाँ ऽअदेवः पूर्त्तमाददे ।
यथा चिद्वशो ऽअश्व्यः पृथुश्रवसि कानीतेऽ३ऽस्या व्युष्याददे ॥२१॥
आ । सः । एतु । यः । ईवत् । आ । अदेवः ।
पूर्त्तम् । आ०ददे ॥ यथा । चित् । वशः । अश्व्यः ।
पृथु०श्रवसि । कानीते । अस्याः । वि०उषि । आ०ददे ॥२१॥

षष्टिं सहस्राश्व्यस्यायुतासनमुष्ट्रानां विंशतिं शता ।
दश श्यावीनां शता दश त्र्यरुषीणां दश गवां सहस्रा ॥२२॥
षष्टिम् । सहस्रा । अश्व्यस्य । अयुता । असनम् ।
उष्ट्रानाम् । विंशतिम् । शता ॥ दश । श्यावीनाम् ।
शता । दश । त्रि०अरुषीणाम् । दश । गवाम् । सहस्रा ॥२२॥

दश श्यावा ऽऋधद्रयो वीतवारास ऽआशवः ।
मथ्रा नेमिं नि वावृतुः ॥२३॥

दर्श । श्यावाः । ऋधत्०रयः । वीत०वारासः । आशवः ॥
मथ्राः । नेमिम् । नि । ववृतुः ॥२३॥

**दानासः पृथुश्रवसः कानीतस्य सुराधसः ।**
**रथं हिरण्ययं ददन्मंहिष्ठः सूरिरभूद्वर्षिष्ठमकृत श्रवः ॥२४॥**
दानासः । पृथु०श्रवसः । कानीतस्य । सु०राधसः ॥
रथम् । हिरण्ययम् । ददत् । मंहिष्ठः । सूरिः ।
अभूत् । वर्षिष्ठम् । अकृत । श्रवः ॥२४॥

**आ नो वायो महे तने याहि मखाय पाजसे ।**
**वयं हि ते चकृमा भूरि दावने सद्यश्चिन्महि दावने ॥२५॥ (५)**
आ । नः । वायो इति । महे । तने । याहि । मखाय । पाजसे ॥
वयम् । हि । ते । चकृम । भूरि । दावने । सद्यः । चित् । महि । दावने ॥२५॥

**यो ऽअश्वेभिर्वहते वस्त ऽउस्रास्त्रिः सप्त सप्ततीनाम् ।**
**एभिः सोमेभिः सोमसुद्भिः सोमपा दानाय शुक्रपूतपाः ॥२६॥**
यः । अश्वेभिः । वहते । वस्ते । उस्राः । त्रिः । सप्त ।
सप्ततीनाम् ॥ एभिः । सोमेभिः । सोमसुत्०भिः ।
सोम०पाः । दानाय । शुक्रपूत०पाः ॥२६॥

**यो म ऽइमं चिदु त्मनामन्दच्चित्रं दावने ।**
**अरट्वे ऽअक्षे नहुषे सुकृत्वनि सुकृत्तराय सुक्रतुः ॥२७॥**
यः । मे । इमम् । चित् । ऊँ इति । त्मना ।
अमन्दत् । चित्रम् । दावने ॥ अरट्वे । अक्षे ।
नहुषे । सु०कृत्वनि । सुकृत्०तराय । सु०क्रतुः ॥२७॥

उचथ्येइ॑ वपु॑षि यः स्व॒राळुत वा॑यो घृत॒स्नाः ।
अश्वे॑षितं रजे॑षितं शुने॑षितं प्राज्म॒ तदि॒दं नु तत् ॥२८॥
उ॒च॒थ्ये॑ । वपु॑षि । यः । स्व॒ऽराट् । उ॒त । वा॒यो॒ इति॑ । घृ॒त॒ऽस्नाः ॥
अश्व॑ऽइषितम् । रजः॑ऽइषितम् । शुना॑ऽइषितम् ।
प्र । अज्म॑ । तत् । इ॒दम् । नु । तत् ॥२८॥

अध॑ प्रि॒यमि॑षि॒राय॑ ष॒ष्टिं स॒हस्रा॑सनम् ।
अश्वा॑ना॒मिन्न वृष्णा॑म् ॥२९॥
अध॑ । प्रि॒यम् । इ॒षि॒राय॑ । ष॒ष्टिम् । स॒हस्रा॑ । अ॒स॒न॒म् ॥
अश्वा॑नाम् । इत् । न । वृष्णा॑म् ॥२९॥

गावो॒ न यू॒थमुप॑ यन्ति॒ वध्र॑य॒ ऽउप॒ मा य॑न्ति॒ वध्र॑यः ॥३०॥
गाव॑ः । न । यू॒थम् । उप॑ । य॒न्ति॒ । वध्र॑यः । उप॑ । मा॒ । आ । य॒न्ति॒ । वध्र॑यः ॥३०॥

अध॒ यच्चार॑थे ग॒णे श॒तमुष्ट्राँ॑ ऽअचि॑क्रदत् ।
अध॒ श्वित्ने॑षु विं॒शतिं॑ श॒ता ॥३१॥
अध॑ । यत् । चार॑थे । ग॒णे । श॒तम् । उष्ट्रा॑न् । अचि॑क्रदत् ।
अध॑ । श्वित्ने॑षु । विं॒श॒तिम् । श॒ता ॥३१॥

श॒तं दा॒से ब॑ल्बू॒थे विप्र॒स्तरु॑क्ष॒ ऽआ द॑दे ।
ते तै॑ वायवि॒मे जना॒ मद॒न्तीन्द्र॑गोपा॒ मद॑न्ति दे॒वगो॑पाः ॥३२॥
श॒तम् । दा॒से । ब॒ल्बू॒थे । विप्रः॑ । तरु॑क्षे । आ । द॒दे ॥
ते । ते॒ । वा॒यो॒ इति॑ । इ॒मे । जना॑ः । मद॑न्ति । इन्द्र॑ऽगोपाः । मद॑न्ति । दे॒व॑ऽगोपाः ॥३२॥

अध॒ स्या योष॑णा म॒ही प्र॒तीची॒ वश॑म॒श्व्यम् ।
अधि॑रुक्मा॒ वि नी॑यते ॥३३॥ (६)

[ ७०१ ]

अध॑ । स्या । योष॑णा । म॒ही । प्र॒ती॒ची । वश॑म् । अ॒श्व्यम् ॥
अधि॑ऽरुक्मा । वि । नी॒य॒ते॒ ॥३३॥

# ( ४७ )

१८ मित आप्त्यः । आदित्यः, १४-१८ आदित्योषसः ( दुःस्वप्नघ्नं ) । महापङ्क्तिः ।

महि॑ वो म॒ह॒तामवो॒ वरु॑ण॒ मित्र॒ दा॒शुषे॑ ।
यमा॑दित्या ऽअ॒भि द्रुहो॒ रक्ष॑था॒ नेम॒घं नश॑दने॒हसो॑ व ऽऊ॒तयः॑ सुऊ॒तयो॑ व ऽऊ॒तयः॑ ॥१॥
महि॑ । व॒ः । म॒ह॒ताम् । अवः॑ । वरु॑ण । मित्र॑ । दा॒शुषे॑ ॥
यम् । आ॒दि॒त्याः॒ । अ॒भि । द्रुहः॑ । रक्ष॑थ । न । ई॒म् । अ॒घम् ।
न॒श॒त् । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥१॥

वि॒दा दे॒वा ऽअ॒घाना॒मादि॑त्यासो ऽअ॒पाकृ॑तिम् ।
प॒क्षा व॒यो॒ य॒थो॒प॒रि व्य॑स्मे शर्म॑ यच्छताने॒हसो॑ व ऽऊ॒तयः॑ सुऊ॒तयो॑ व ऽऊ॒तयः॑ ॥२॥
वि॒द । दे॒वाः॒ । अ॒घाना॑म् । आ॒दि॑त्यासः । अ॒प॒ऽआकृ॑तिम् ॥
प॒क्षा । वयः॑ । यथा॑ । उ॒परि॑ । वि । अ॒स्मे इति॑ । शर्म॑ ।
य॒च्छ॒त॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥२॥

व्य॒स्मे ऽअधि॒ शर्म॒ तत्प॒क्षा व॒यो॒ न य॑न्तन ।
विश्वा॑नि विश्ववे॒दसो व॒रू॒थ्या॒ मनामहे॒ऽने॒हसो॑ व ऽऊ॒तयः॑ सुऊ॒तयो॑ व ऽऊ॒तयः॑ ॥३॥
वि । अ॒स्मे इति॑ । अधि॑ । शर्म॑ । तत् । प॒क्षा । वयः॑ । न ।
य॒न्त॒न ॥ विश्वा॑नि । वि॒श्व॒ऽवे॒द॒सः॒ । व॒रू॒थ्या॒ । म॒ना॒म॒हे॒ ।
अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥३॥

यस्मा॒ ऽअरा॑सत॒ क्षयं॑ जी॒वातुं॑ च॒ प्रचे॑तसः ।
म॒नोर्विश्व॑स्य॒ घेदि॒म ऽआदि॒त्या रा॒य ऽईश॑तेऽने॒हसो॑ व ऽऊ॒तयः॑ सुऊ॒तयो॑ व ऽऊ॒तयः॑ ॥४॥

यस्मै । अरासत । क्षयम् । जीवातुम् । च । प्र०चेतसः ॥
मनोः । विश्वस्य । घ । इत् । इमे । आदित्याः । रायः । ईशते ।
अनेहसः । वः । ऊतयः । सु०ऊतयः । वः । ऊतयः ॥४॥

**परि णो वृणजन्नघा दुर्गाणि रथ्यो यथा ।**
**स्यामेदिन्द्रस्य शर्मण्यादित्यानामुतावस्यनेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥५॥ (७)**
परि । नः । वृणजन् । अघा । दुःरगानि । रथ्यः । यथा ॥
स्याम । इत् । इन्द्रस्य । शर्मणि । आदित्यानाम् । उत । अवसि ।
अनेहसः । वः । ऊतयः । सु०ऊतयः । वः । ऊतयः ॥५॥

**परिह्वृतेदना जनो युष्मादत्तस्य वायति ।**
**देवा ऽअदभ्रमाश वो यमादित्या ऽअहेतनानेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥६॥**
परि०ह्वृता । इत् । अना । जनः । युष्मा०दत्तस्य । वायति ॥
देवाः । अदभ्रम् । आश । वः । यम् । आदित्याः । अहेतन ।
अनेहसः । वः । ऊतयः । सु०ऊतयः । वः । ऊतयः ॥६॥

**न तं तिग्मं चन त्यजो न द्रासदभि तं गुरु ।**
**यस्मा ऽउ शर्म सप्रथ ऽआदित्यासो ऽअराध्वमनेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥७॥**
न । तम् । तिग्मम् । चन । त्यजः । न । द्रासत् । अभि ।
तम् । गुरु ॥ यस्मै । ऊँ इति । शर्म । स०प्रथः । आदित्यासः ।
अराध्वम् । अनेहसः । वः । ऊतयः । सु०ऊतयः । वः । ऊतयः॥७॥

**युष्मे देवा ऽअपि ष्मसि युध्यन्तइव वर्मसु ।**
**यूयं महो न ऽएनसो यूयमर्भादुरुष्यतानेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥८॥**
युष्मे इति । देवाः । अपि । स्मसि । युध्यन्तःऽइव । वर्म०सु ॥
यूयम् । महः । नः । एनसः । यूयम् । अर्भात् । उरुष्यत ।
अनेहसः । वः । ऊतयः । सु०ऊतयः । वः । ऊतयः ॥८॥

अदि॑तिर्न ऽउरुष्य॒त्वदि॑ति॒ः शर्म॑ यच्छतु ।
माता मि॒त्रस्य॑ रे॒वतो॑ऽर्य॒म्णो वरु॑णस्य चाने॒हसो॑ व ऽऊ॒तय॑ः सुऊ॒तयो॑ व ऽऊ॒तय॑ः ॥९॥
अदि॑तिः । न॒ः । उ॒रु॒ष्य॒तु॒ । अदि॑तिः । शर्म॑ । य॒च्छ॒तु॒ ॥
माता । मि॒त्रस्य॑ । रे॒वत॑ः । अ॒र्य॒म्णः । वरु॑णस्य । च॒ ।
अ॒ने॒हस॑ः । व॒ः । ऊ॒तय॑ः । सु॒ऽऊ॒तय॑ः । व॒ः । ऊ॒तय॑ः ॥९॥

यद्दे॒वा॒ः शर्म॑ श॒र॒णं यद्भ॒द्रं यद॑ना॒तु॒रम् ।
त्रि॒धातु यद्व॑रू॒थ्यं॑१॒ तद॒स्मासु॒ वि य॑न्तनाने॒हसो॑ व ऽऊ॒तय॑ः सुऊ॒तयो॑ व ऽऊ॒तय॑ः ॥१०॥ (८)
यत् । दे॒वा॒ः । शर्म॑ । श॒र॒णम् । यत् । भ॒द्रम् । यत् । अ॒ना॒तु॒रम् ॥
त्रि॒ऽधा॒तु॒ । यत् । व॒रू॒थ्य॑म् । तत् । अ॒स्मासु॒ । वि । य॒न्त॒न ।
अ॒ने॒हस॑ः । व॒ः । ऊ॒तय॑ः । सु॒ऽऊ॒तय॑ः । व॒ः । ऊ॒तय॑ः ॥१०॥

आदि॑त्या॒ ऽअव॒ हि ख्यताधि॒ कूला॑दिव॒ स्पश॑ः ।
सु॒ती॒र्थमर्व॑तो य॒थानु॒ नो नेषथा सुगम॒ने॒हसो॑ व ऽऊ॒तय॑ः सुऊ॒तयो॑ व ऽऊ॒तय॑ः ॥११॥
आदि॑त्याः । अव॑ । हि । ख्यत॑ । अधि॑ । कूला॑त्ऽइव । स्पश॑ः ॥
सु॒ऽती॒र्थम् । अर्व॑तः । य॒था॒ । अनु॒ । न॒ः । ने॒ष॒थ॒ । सु॒ऽगम् ।
अ॒ने॒हस॑ः । व॒ः । ऊ॒तय॑ः । सु॒ऽऊ॒तय॑ः । व॒ः । ऊ॒तय॑ः ॥११॥

नेह भ॒द्रं र॑क्ष॒स्विने॒ नाव॒यै नोप॒या ऽउ॒त ।
गवे॑ च भ॒द्रं धे॒नवे॑ वी॒राय॑ च श्रवस्य॒ते॑ऽने॒हसो॑ व ऽऊ॒तय॑ः सुऊ॒तयो॑ व ऽऊ॒तय॑ः ॥१२॥
न । इ॒ह । भ॒द्रम् । र॒क्ष॒स्विने॑ । न । अ॒व॒ऽयै । न । उ॒प॒ऽयै । उ॒त ॥
गवे॑ । च॒ । भ॒द्रम् । धे॒नवे॑ । वी॒राय॑ । च॒ । श्र॒व॒स्य॒ते ।
अ॒ने॒हस॑ः । व॒ः । ऊ॒तय॑ः । सु॒ऽऊ॒तय॑ः । व॒ः । ऊ॒तय॑ः॥१२॥

यदा॒विर्यद॑पी॒च्यं॑१॒ देवा॑सो॒ ऽअस्ति॑ दुष्कृ॒तम् ।
त्रि॒ते तद्विश्व॑मा॒प्त्य ऽआ॒रे ऽअ॒स्मद्द॑धातनाने॒हसो॑ व ऽऊ॒तय॑ः सुऊ॒तयो॑ व ऽऊ॒तय॑ः ॥१३॥

यत् । आविः । यत् । अपीच्यम् । देवासः । अस्ति । दुःऽकृतम् ॥
त्रिते । तत् । विश्वम् । आप्त्ये । आरे । अस्मत् । दधातन ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१३॥

**यच्च गोषु दुष्ष्वप्न्यं यच्चास्मे दुहितर्दिवः ।**
**त्रिताय तद्विभावर्याप्त्याय परा वहानेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥१४॥**
यत् । च । गोषु । दुःऽस्वप्न्यम् । यत् । च । अस्मे इति ।
दुहितः । दिवः ॥ त्रिताय । तत् । विभाऽवरि । आप्त्याय । परा ।
वह । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१४॥

**निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः ।**
**त्रिते दुष्ष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥१५॥ [ ९ ]**
निष्कम् । वा । घ । कृणवते । स्रजम् । वा । दुहितः । दिवः ॥
त्रिते । दुःऽस्वप्न्यम् । सर्वम् । आप्त्ये । परि । दद्मसि ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१५॥

**तदन्नाय तदपसे तं भागमुपसेदुषे ।**
**त्रिताय च द्विताय चोषो दुष्ष्वप्न्यं वहानेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥१६॥**
तत्ऽअन्नाय । तत्ऽअपसे । तम् । भागम् । उपऽसेदुषे ॥
त्रिताय । च । द्विताय । च । उषः । दुःऽस्वप्न्यम् । वह ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१६॥

**यथा कलां यथा शफं यथ ऽऋणं संनयामसि ।**
**एवा दुष्ष्वप्न्यं सर्वमाप्त्ये सं नयामस्यनेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥१७॥**
यथा । कलाम् । यथा । शफम् । यथा । ऋणम् । सम्ऽनयामसि ॥
एव । दुःऽस्वप्न्यम् । सर्वम् । आप्त्ये । सम् । नयामसि ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१७॥

अजैष्माद्यासनाम चाभूमानागसो वयम् ।
उषो यस्माद्दुष्वप्न्यादभैष्माप तदुच्छत्वनेहसो व ऽऊतयः सुऊतयो व ऽऊतयः ॥१८॥ (१०) [७१९]
अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् ॥
उषः । यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु ।
अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१८॥

# ( ४८ )

१५ प्रगाथो घौरः काण्वः । सोमः । त्रिष्टुप्, ५ जगती ।

स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य ।
विश्वे यं देवा ऽउत मर्त्यासो मधु ब्रुवन्तो ऽअभि संचरन्ति ॥
स्वादोः । अभक्षि । वयसः । सुऽमेधाः । सुऽआध्यः ।
वरिवोवित्ऽतरस्य ॥ विश्वे । यम् । देवाः । उत ।
मर्त्यासः । मधु । ब्रुवन्तः । अभि । सम्ऽचरन्ति ॥१॥

अन्तश्च प्रागा ऽअदितिर्भवास्यवयाता हरसो दैव्यस्य ।
इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऽऋध्याः ॥२॥
अन्तरिति । च । प्र । अगाः । अदितिः । भवासि । अवऽयाता ।
हरसः । दैव्यस्य ॥ इन्दो इति । इन्द्रस्य । सख्यम् । जुषाणः ।
श्रौष्टीऽइव । धुरम् । अनु । राये । ऋध्याः ॥२॥

अपाम सोमममृता ऽअभूमागन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥३॥
अपाम । सोमम् । अमृताः । अभूम । अगन्म । ज्योतिः ।
अविदाम । देवान् ॥ किम् । नूनम् । अस्मान् । कृणवत् ।
अरातिः । किम् । ऊँ इति । धूर्तिः । अमृत । मर्त्यस्य ॥३॥

शं नौ भव हृद ऽआ पीत ऽइन्दो पितेव सोम सूनवे सुशेवः ।
सखैव सख्य ऽउरुशंस धीरः प्र ण ऽआयुर्जीवसे सोम तारीः ॥४॥
शम् । नः । भव । हृदे । आ । पीतः । इन्दो इति । पिताऽइव ।
सोम । सूनवे । सु॰शेवः ॥ सखाऽइव । सख्ये । उरु॰शंस ।
धीरः । प्र । नः । आयुः । जीवसे । सोम । तारीः ॥४॥

इमे मा पीता यशस ऽउरुष्यवो रथं न गावः समनाह पर्वसु ।
ते मा रक्षन्तु विस्रसश्चरित्रादुत मा स्रामाद्यवयन्त्विन्दवः ॥५॥ (११)
इमे । मा । पीताः । यशसः । उरुष्यवः । रथम् । न । गावः ।
सम् । अनाह । पर्व॰सु ॥ ते । मा । रक्षन्तु । वि॰स्रसः ।
चरित्रात् । उत । मा । स्रामात् । यवयन्तु । इन्दवः ॥५॥

अग्निं न मा मथितं सं दिदीपः प्र चक्षय कृणुहि वस्यसो नः ।
अथा हि ते मद ऽआ सोम मन्ये रेवाँइव प्र चरा पुष्टिमच्छ ॥६॥
अग्निम् । न । मा । मथितम् । सम् । दिदीपः । प्र । चक्षय ।
कृणुहि । वस्यसः । नः ॥ अथ । हि । ते । मदे । आ ।
सोम । मन्ये । रेवान्ऽइव । प्र । चर । पुष्टिम् । अच्छ ॥६॥

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।
सोम राजन्प्र ण ऽआयूंषि तारीरहानीव सूर्यो वासराणि ॥७॥
इषिरेण । ते । मनसा । सुतस्य । भक्षीमहि ।
पित्र्यस्यऽइव । रायः ॥ सोम । राजन् । प्र । नः ।
आयूंषि । तारीः । अहानिऽइव । सूर्यः । वासराणि ॥७॥

सोम राजन्मृळया नः स्वस्ति तव स्मसि व्रत्याइस्तस्य विद्धि ।
अलर्ति दक्ष ऽउत मन्युरिन्दो मा नो ऽअर्यो ऽअनुकामं परा दाः ॥८॥

सोम । राजन् । मृळय । नः । स्वस्ति । तव । स्मसि ।
व्रत्याः । तस्य । विद्धि ॥ अलर्ति । दक्षः । उत । मन्युः ।
इन्दो इति । मा । नः । अर्यः । अनु०कामम् । परा । दाः ॥८॥

त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था नृचक्षाः ।
यत्ते वयं प्रमिनाम व्रतानि स नो मृळ सुषखा देव वस्यः ॥९॥
त्वम् । हि । नः । तन्वः । सोम । गोपाः । गात्रे०गात्रे ।
नि०ससत्थ । नृ०चक्षाः ॥ यत् । ते । वयम् । प्र०मिनाम ।
व्रतानि । सः । नः । मृळ । सु०सखा । देव । वस्यः ॥९॥

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा ऽइन्द्रं प्रतिरमेम्यायुः ॥१०॥ ( १२ )
ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् ।
हरि०अश्व । पीतः ॥ अयम् । यः । सोमः । नि । अधायि ।
अस्मे इति । तस्मै । इन्द्रम् । प्र०तिरम् । एमि । आयुः ॥१०॥

अप त्या ऽअस्थुरनिरा ऽअमीवा निरत्रसन्तमिषीचीरभैषुः ।
आ सोमो ऽअस्माँ ऽअरुहद्विहाया ऽअगन्म यत्र प्रतिरन्त ऽआयुः ॥११॥
अप । त्याः । अस्थुः । अनिराः । अमीवाः । निः । अत्रसन् ।
तमिषीचीः । अभैषुः ॥ आ । सोमः । अस्मान् । अरुहत् ।
वि०हायाः । अगन्म । यत्र । प्र०तिरन्ते । आयुः ॥११॥

यो न ऽइन्दुः पितरो हृत्सु पीतोऽमर्त्यो मर्त्यां ऽआविवेश ।
तस्मै सोमाय हविषा विधेम मृळीके ऽअस्य सुमतौ स्याम ॥१२॥
यः । नः । इन्दुः । पितरः । हृत्०सु । पीतः । अमर्त्यः ।
मर्त्यान् । आ०विवेश ॥ तस्मै । सोमाय । हविषा ।
विधेम । मृळीके । अस्य । सु०मतौ । स्याम ॥१२॥

त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी ऽआ ततन्थ ।
तस्मै त ऽइन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥१३॥
त्वम् । सोम । पितृऽभिः । सम्ऽविदानः । अनु ।
द्यावापृथिवी इति । आ । ततन्थ ॥ तस्मै । ते । इन्दो इति ।
हविषा । विधेम । वयम् । स्याम । पतयः । रयीणाम् ॥१३॥

त्रातारो देवा ऽअधि वोचता नो मा नो निद्रा ऽईशत मोत जल्पिः ।
वयं सोमस्य विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥१४॥
त्रातारः । देवाः । अधि । वोचत । नः । मा । नः । निऽद्रा ।
ईशत । मा । उत । जल्पिः ॥ वयम् । सोमस्य । विश्वह ।
प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥१४॥

त्वं नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः ।
त्वं न ऽइन्द ऽऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात् ॥१५॥ ( १३ ) [ ७३४ ]
त्वम् । नः । सोम । विश्वतः । वयः२धाः । त्वम् । स्वःऽवित् ।
आ । विश । नृऽचक्षाः ॥ त्वम् । नः । इन्दो इति । ऊतिऽभिः ।
सऽजोषाः । पाहि । पश्चातात् । उत । वा । पुरस्तात् ॥१५॥

# ॥ अथ वालखिल्यम् ॥

## ( ४९ ) [ १ ]

१० प्रस्कण्वः काण्वः । इन्द्रः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥१॥

अभि । प्र । वः । सुऽराधसम् । इन्द्रम् । अर्च ।
यथा । विदे ॥ यः । जरितृऽभ्यः । मघऽवा ।
पुरुऽवसुः । सहस्रेणऽइव । शिक्षति ॥१॥

**शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।**
**गिरेरिव प्र रसा ऽअस्य पिन्विरे दत्राणि पुरुभोजसः ॥२॥**
शतानीकाऽइव । प्र । जिगाति । धृष्णुऽया । हन्ति ।
वृत्राणि । दाशुषे ॥ गिरेःऽइव । प्र । रसाः ।
अस्य । पिन्विरे । दत्राणि । पुरुऽभोजसः ॥२॥

**आ त्वा सुतास ऽइन्दवो मदा य ऽइन्द्र गिर्वणः ।**
**आपो न वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसे ॥३॥**
आ । त्वा । सुतासः । इन्दवः । मदाः । ये ।
इन्द्र । गिर्वणः ॥ आपः । न । वज्रिन् । अनु ।
ओक्यम् । सरः । पृणन्ति । शूर । राधसे ॥३॥

**अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।**
**आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषत् ॥४॥**
अनेहसम् । प्रऽतरणम् । विवक्षणम् । मध्वः । स्वादिष्ठम् ।
ईम् । पिब ॥ आ । यथा । मन्दसानः । किरासि ।
नः । प्र । क्षुद्राऽइव । त्मना । धृषत् ॥४॥

**आ नः स्तोममुप द्रवद्धियानो ऽअश्वो न सोतृभिः ।**
**यं ते स्वधावन्त्स्वदयन्ति धेनव ऽइन्द्र कण्वेषु रातयः ॥५॥ (१४)**
आ । नः । स्तोमम् । उप । द्रवत् । हियानः ।
अश्वः । न । सोतृऽभिः ॥ यम् । ते । स्वधाऽवन् ।
स्वदयन्ति । धेनवः । इन्द्र । कण्वेषु । रातयः ॥५॥

उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयः ॥६॥
उग्रम् । न । वीरम् । नमसा । उप । सेदिम ।
वि॰भूतिम् । अक्षित॰वसुम् ॥ उद्रीऽइव । वज्रिन् ।
अवतः । न । सिञ्चते । क्षरन्ति । इन्द्र । धीतयः ॥६॥

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि ।
अतो नो यज्ञमाशुभिर्महेमत ऽउग्र ऽउग्रेभिरा गहि ॥७॥
यत् । ह । नूनम् । यत् । वा । यज्ञे । यत् । वा ।
पृथिव्याम् । अधि ॥ अतः । नः । यज्ञम् । आशु॰भिः ।
महे॰मते । उग्रः । उग्रेभिः । आ । गहि ॥७॥

अजिरासो हरयो ये त ऽआशवो वाताइव प्रसक्षिणः ।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशे ॥८॥
अजिरासः । हरयः । ये । ते । आशवः ।
वाताःऽइव । प्र॰सक्षिणः ॥ येभिः । अपत्यम् ।
मनुषः । परिऽईयसे । येभिः । विश्वम् । स्वः । दृशे ॥८॥

एतावतस्त ऽईमह ऽइन्द्र सुम्नस्य गोमतः ।
यथा प्रावो मघवन्मेध्यातिथिं यथा नीपातिथिं धने ॥९॥
एतावतः । ते । ईमहे । इन्द्र । सुम्नस्य । गो॰मतः ॥
यथा । प्र । आवः । मघ॰वन् । मेध्य॰अतिथिम् । यथा । नीप॰अतिथिम् । धने ॥९॥

यथा कण्वे मघवन्त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा गोशर्ये ऽअसनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवत् ॥१०॥ (१५) [७४४]

यथा । कण्वे । मघ०वन् । त्रसदस्यवि । यथा ।
पक्थे । दश०व्रजे ॥ यथा । गो०शर्ये । असनोः ।
ऋजिश्वनि । इन्द्र । गो०मत् । हिरण्य०वत् ॥१०॥

## (५०) [२]

१० पुष्टिगुः काण्वः । इन्द्रः । प्रगाथः = (विषमा बृहती, समा सतोबृहती) ।

**प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।**
**यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहते ॥१॥**
प्र । सु । श्रुतम् । सु०राधसम् । अर्च । शक्रम् । अभिष्टये ॥
यः । सुन्वते । स्तुवते । काम्यम् । वसु । सहस्रेणऽइव । मंहते ॥१॥

**शतानीका हेतयो ऽअस्य दुष्टरा ऽइन्द्रस्य समिषो महीः ।**
**गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता ऽअमन्दिषुः ॥२॥**
शत०अनीकाः । हेतयः । अस्य । दुस्तराः । इन्द्रस्य ।
सम्ऽइषः । महीः ॥ गिरिः । न । भुज्मा । मघवत्०सु ।
पिन्वते । यत् । ईम् । सुताः । अमन्दिषुः ॥२॥

**यदीं सुतास ऽइन्दवोऽभि प्रियममन्दिषुः ।**
**आपो न धायि सवनं म ऽआ वसो दुघाऽइवोप दाशुषे ॥३॥**
यत् । ईम् । सुतासः । इन्दवः । अभि । प्रियम् ।
अमन्दिषुः ॥ आपः । न । धायि । सवनम् । मे ।
आ । वसो इति । दुघाःऽइव । उप । दाशुषे ॥३॥

**अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।**
**आ त्वा वसो हवमानास ऽइन्दव ऽउप स्तोत्रेषु दधिरे ॥४॥**

अनेहसम् । वः । हवमानम् । ऊतये । मध्वः ।
क्षरन्ति । धीतयः ॥ आ । त्वा । वसो इति ।
हवमानासः । इन्दवः । उप । स्तोत्रेषु । दधिरे ॥४॥

**आ नः सोमे स्वध्वर ऽइयानो ऽअत्यो न तोशते ।**
**यं ते स्वदावन्त्स्वदन्ति गूर्त्तयः पौरे छन्दयसे हवम् ॥५॥ (१६)**
आ । नः । सोमे । सु॰अध्वरे । इयानः ।
अत्यः । न । तोशते ॥ यम् । ते । स्वदा॰वन् ।
स्वदन्ति । गूर्त्तयः । पौरे । छन्दयसे । हवम् ॥५॥

**प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।**
**उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषे ॥६॥**
प्र । वीरम् । उग्रम् । विविचिम् । धन॰स्पृतम् ।
वि॰भूतिम् । राधसः । महः ॥ उद्रीऽइव । वज्रिन् ।
अवतः । वसु॰त्वना । सदा । पीपेथ । दाशुषे ॥६॥

**यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।**
**युजान ऽइन्द्र हरिभिर्महेमत ऽऋष्व ऽऋष्वेभिरा गहि ॥७॥**
यत् । ह । नूनम् । परा॰वति । यत् । वा ।
पृथिव्याम् । दिवि ॥ युजानः । इन्द्र । हरि॰भिः ।
महे॰मते । ऋष्वः । ऋष्वेभिः । आ । गहि ॥७॥

**रथिरासो हरयो ये ते ऽअस्रिध ऽओजो वातस्य पिप्रति ।**
**येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसे ॥८॥**
रथिरासः । हरयः । ये । ते । अस्रिधः । ओजः ।
वातस्य । पिप्रति ॥ येभिः । नि । दस्युम् । मनुषः ।
नि॰घोषयः । येभिः । स्वरिति स्वः । परि॰ईयसे ॥८॥

एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा प्राव ऽएतशं कृत्व्ये धने यथा वशं दशव्रजे ॥९॥
एतावतः । ते । वसो इति । विद्याम । शूर ।
नव्यसः ॥ यथा । प्र । आवः । एतशम् ।
कृत्व्ये । धने । यथा । वशम् । दश०व्रजे ॥९॥

यथा कण्वे मघवन्मेधे ऽअध्वरे दीर्घनीथे दमूनसि ।
यथा गोशर्ये ऽअसिषासो ऽअद्रिवो मयि गोत्रं हरिश्रियम् ॥१०॥ (१७) [७५४]
यथा । कण्वे । मघ०वन् । मेधे । अध्वरे । दीर्घ०नीथे । दमूनसि ॥
यथा । गो०शर्ये । असिसासः । अद्रि०वः । मयि । गोत्रम् । हरि०श्रियम् ॥१०॥

## (५१) [३]

१० श्रुष्टिगुः काण्वः । इन्द्रः । प्रगाथः = (विषमा बृहती, समा सतोबृहती) ।

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचा ॥१॥
यथा । मनौ । साम्०वरणौ । सोमम् । इन्द्र ।
अपिबः । सुतम् ॥ नीप०अतिथौ । मघ०वन् ।
मेध्य०अतिथौ । पुष्टि०गौ । श्रुष्टि०गौ । सचा ॥१॥

पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृकः ॥२॥
पार्षद्वाणः । प्रस्कण्वम् । सम् । असादयत् । शयानम् ।
जिव्रिम् । उद्धितम् ॥ सहस्राणि । असिसासत् ।
गवाम् । ऋषिः । त्वा०ऊतः । दस्यवे । वृकः ॥२॥

य ऽउक्थेभिर्न विन्धते चिकिद्य ऽऋषिचोदनः ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसे ॥३॥
यः । उक्थेभिः । न । विन्धते । चिकित् । यः ।
ऋषि०चोदनः ॥ इन्द्रम् । तम् । अच्छ । वद ।
नव्यस्या । मती । अरिष्यन्तम् । न । भोजसे ॥३॥

यस्मा ऽअर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।
स त्विश्मा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यम् ॥४॥
यस्मै । अर्कम् । सप्त०शीर्षाणम् । आनृचुः । त्रि०धातुम् ।
उत्०तमे । पदे ॥ सः । तु । इमा । विश्वा । भुवनानि ।
चिक्रदत् । आत् । इत् । जनिष्ट । पौंस्यम् ॥४॥

यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् ।
विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजे ॥५॥ (१८)
यः । नः । दाता । वसूनाम् । इन्द्रम् । तम् ।
हूमहे । वयम् ॥ विद्म । हि । अस्य । सु०मतिम् ।
नवीयसीम् । गमेम । गो०मति । व्रजे ॥५॥

यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥६॥
यस्मै । त्वम् । वसो इति । दानाय । शिक्षसि । सः ।
रायः । पोषम् । अश्नुते ॥ तम् । त्वा । वयम् ।
मघ०वन् । इन्द्र । गिर्वणः । सुत०वन्तः । हवामहे ॥६॥

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय ऽइन्नु ते दानं देवस्य पृच्यते ॥७॥

कदा । चन । स्तरीः । असि । न । इन्द्र ।
सश्चसि । दाशुषे ॥ उप॰उप । इत् । नु । मघ॰वन् ।
भूयः । इत् । नु । ते । दानम् । देवस्य । पृच्यते ॥७॥

प्र यो ननक्षे ऽअभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत्प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवः ॥८॥
प्र । यः । ननक्षे । अभि । ओजसा । क्रिविम् । वधैः ।
शुष्णम् । नि॰घोषयन् ॥ यदा । इत् । अस्तम्भीत् । प्रथयन् ।
अमूम् । दिवम् । आत् । इत् । जनिष्ट । पार्थिवः ॥८॥

यस्यायं विश्व ऽआर्यो दासः शेवधिपा ऽअरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो ऽअज्यते रयिः ॥९॥
यस्य । अयम् । विश्वः । आर्यः । दासः ।
शेवधि॰पाः । अरिः ॥ तिरः । चित् । अर्ये । रुशमे ।
पवीरवि । तुभ्य । इत् । सः । अज्यते । रयिः ॥९॥

तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो ऽअर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास ऽइन्दवः ॥१०॥ ( १९ ) [ ७६४ ]
तुरण्यवः । मधु॰मन्तम् । घृत॰श्चुतम् । विप्रासः ।
अर्कम् । आनृचुः ॥ अस्मे इति । रयिः । पप्रथे ।
वृष्ण्यम् । शवः । अस्मे इति । सुवानासः । इन्दवः ॥१०॥

## ( ५२ ) [ ४ ]

१० आयुः काण्वः । इन्द्रः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।
यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते छन्द ऽइन्द्र जुजोषस्यायौ मादयसे सचा ॥१॥

यथा । मनौ । विवस्वति । सोमम् । शक्र ।
अपिबः । सुतम् ॥ यथा । त्रिते । छन्दः । इन्द्र ।
जुजोषसि । आयौ । मादयसे । सचा ॥१॥

**पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने ऽअमन्दथाः ।**
**यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसि ॥२॥**
पृषध्रे । मेध्ये । मातरिश्वनि । इन्द्र । सुवाने ।
अमन्दथाः ॥ यथा । सोमम् । दश०शिप्रे ।
दश०ओण्ये । स्यूम०रश्मौ । ऋजूनसि ॥२॥

**य ऽउक्था केवला दधे यः सोमं धृषितापिबत् ।**
**यस्मै विष्णुस्त्रीणि पदा विचक्रम ऽउप मित्रस्य धर्मभिः ॥३॥**
यः । उक्था । केवला । दधे । यः । सोमम् । धृषिता ।
अपिबत् ॥ यस्मै । विष्णुः । त्रीणि । पदा ।
वि०चक्रमे । उप । मित्रस्य । धर्म०भिः ॥३॥

**यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।**
**तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवः ॥४॥**
यस्य । त्वम् । इन्द्र । स्तोमेषु । चाकनः । वाजे । वाजिन् ।
शतक्रतो इति शत०क्रतो ॥ तम् । त्वा । वयम् ।
सुदुघाम्ऽइव । गो०दुहः । जुहूमसि । श्रवस्यवः ॥४॥

**यो नो दाता स नः पिता महाँ ऽउग्र ऽईशानकृत् ।**
**अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नः ॥५॥ ( २० )**
यः । नः । दाता । सः । नः । पिता । महान् ।
उग्रः । ईशान०कृत् ॥ अयामन् । उग्रः । मघ०वा ।
पुरु०वसुः । गोः । अश्वस्य । प्र । दातु । नः ॥५॥

यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहे ॥६॥
यस्मै । त्वम् । वसो इति । दानाय । मंहसे । सः ।
रायः । पोषम् । इन्वति ॥ वसुऽयवः । वसुऽपतिम् ।
शतऽक्रतुम् । स्तोमैः । इन्द्रम् । हवामहे ॥६॥

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
तुरीयादित्य हवनं त ऽइन्द्रियमा तस्थावमृतं दिवि ॥७॥
कदा । चन । प्र । युच्छसि । उभे इति । नि ।
पासि । जन्मनी इति ॥ तुरीय । आदित्य । हवनम् ।
ते । इन्द्रियम् । आ । तस्थौ । अमृतम् । दिवि ॥७॥

यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।
अस्माकं गिर ऽउत सुष्टुतिं वसो कण्ववच्छृणुधी हवम् ॥८॥
यस्मै । त्वम् । मघऽवन् । इन्द्र । गिर्वणः । शिक्षो इति ।
शिक्षसि । दाशुषे ॥ अस्माकम् । गिरः । उत । सुस्तुतिम् ।
वसो इति । कण्वऽवत् । शृणुधि । हवम् ॥८॥

अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा ऽअसृक्षत ॥९॥
अस्तावि । मन्म । पूर्व्यम् । ब्रह्म । इन्द्राय ।
वोचत ॥ पूर्वीः । ऋतस्य । बृहतीः ।
अनूषत । स्तोतुः । मेधाः । असृक्षत ॥९॥

समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सं गवाशिरः सोमा ऽइन्द्रममन्दिषुः ॥१०॥ ( २१ ) [ ७७४ ]

सम् । इन्द्रः । रायः । बृहतीः । अधूनुत । सम् । क्षोणी इति ।
सम् । ऊँ इति । सूर्यम् ॥ सम् । शुक्रासः । शुचयः ।
सम् । गोऽआशिरः । सोमाः । इन्द्रम् । अमन्दिषुः ॥१०॥

## ( ५३ ) [ ५ ]

**८ मेध्यः काण्वः । इन्द्रः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।**

**उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।**
**पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहे ॥१॥**
उप०मम् । त्वा । मघोनाम् । ज्येष्ठम् ।
च । वृषभाणाम् ॥ पूर्भित्०तमम् । मघ०वन् ।
इन्द्र । गो०विदम् । ईशानम् । रायः । ईमहे ॥१॥

**य ऽआयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।**
**तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहे ॥२॥**
यः । आयुम् । कुत्सम् । अतिथि०ग्वम् । अर्दयः ।
ववृधानः । दिवे०दिवे ॥ तम् । त्वा । वयम् ।
हरि०अश्वम् । शत०क्रतुम् । वाज०यन्तः । हवामहे ॥२॥

**आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।**
**ये परावति सुन्विरे जनेष्वा ये ऽअर्वावतीन्दवः ॥३॥**
आ । नः । विश्वेषाम् । रसम् । मध्वः ।
सिञ्चन्तु । अद्रयः ॥ ये । परा०वति । सुन्विरे ।
जनेषु । आ । ये । अर्वा०वति । इन्दवः ॥३॥

**विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।**
**शीष्टेषु चित्ते मदिरासो ऽअंशवो यत्रा सोमस्य तृम्पसि ॥४॥ ( २२ )**

विश्वा । द्वेषांसि । जहि । च । अव । च । आ । कृधि ।
विश्वे । सन्वन्तु । आ । वसु ॥ शीर्ष्टेषु । चित् । ते ।
मदिरासः । अंशवः । यत्र । सोमस्य । तृम्पसि ॥४॥

**इन्द्र नेदीय ऽएदिहि मितमेधाभिरूतिभिः ।**
**आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥५॥**
इन्द्र । नेदीयः । आ । इत् । इहि । मित०मेधाभिः ।
ऊति०भिः ॥ आ । शम्०तम । शम्०तमाभिः ।
अभिष्टि०भिः । आ । सु०आपे । स्वापि०भिः ॥५॥

**आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।**
**प्र सू तिरा शचीभिर्ये त ऽउक्थिनः क्रतुं पुनत ऽआनुषक् ॥६॥**
आजि०तुरम् । सत्०पतिम् । विश्व०चर्षणिम् । कृधि ।
प्र०जासु । आ०भगम् ॥ प्र । सु । तिर । शचीभिः ।
ये । ते । उक्थिनः । क्रतुम् । पुनते । आनुषक् ॥६॥

**यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।**
**वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहे ॥७॥**
यः । ते । साधिष्ठः । अवसे । ते । स्याम ।
भरेषु । ते ॥ वयम् । होत्राभिः । उत ।
देवहूति०भिः । सस०वांसः । मनामहे ॥७॥

**अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।**
**त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनाम् ॥८॥ ( २३ )** [ ७८२ ]
अहम् । हि । ते । हरि०वः । ब्रह्म । वाज०युः । आजिम् ।
यामि । सदा । ऊति०भिः ॥ त्वाम् । इत् । एव । तम् ।
अमे । सम् । अश्व०युः । गव्युः । अग्रे । मथीनाम् ॥८॥

# ( ५४ ) [ ६ ]

८ मातरिश्वा काण्वः । इन्द्रः, ३-४ विश्वे देवाः । प्रगाथ = ( विषमा बृहती, समा सतोबृहती )।

एतत्त ऽइन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
ते स्तोभन्त ऽऊर्जमावन्घृतश्चुतं पौरासो नक्षन्धीतिभिः ॥१॥
एतत् । ते । इन्द्र । वीर्यम् । गीःऽभिः । गृणन्ति ।
कारवः ॥ ते । स्तोभन्तः । ऊर्जम् । आवन् ।
घृत०श्चुतम् । पौरासः । नक्षन् । धीति०भिः ॥१॥

नक्षन्त ऽइन्द्रमवसे सुकृत्यया येषां सुतेषु मन्दसे ।
यथा संवर्त्ते ऽअमदो यथा कृश ऽएवास्मे ऽइन्द्र मत्स्व ॥२॥
नक्षन्ते । इन्द्रम् । अवसे । सु०कृत्यया । येषाम् ।
सुतेषु । मन्दसे ॥ यथा । सम्०वर्त्ते । अमदः ।
यथा । कृशे । एव । अस्मे इति । इन्द्र । मत्स्व ॥२॥

आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा ऽअवसे न ऽआ गमञ्छृण्वन्तु मरुतो हवम् ॥३॥
आ । नः । विश्वे । स०जोषसः । देवासः । गन्तन ।
उप । नः ॥ वसवः । रुद्राः । अवसे । नः ।
आ । गमन् । शृण्वन्तु । मरुतः । हवम् ॥३॥

पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।
आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवम् ॥४॥ ( २४ )
पूषा । विष्णुः । हवनम् । मे । सरस्वती । अवन्तु ।
सप्त । सिन्धवः ॥ आपः । वातः । पर्वतासः ।
वनस्पतिः । शृणोतु । पृथिवी । हवम् ॥४॥

यदिन्द्र राधो ऽअस्ति ते माघोनं मघवत्तम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहन् ॥५॥
यत् । इन्द्र । राधः । अस्ति । ते । माघोनम् ।
मघवत्ऽतम ॥ तेन । नः । बोधि । सधऽमाद्यः ।
वृधे । भगः । दानाय । वृत्रऽहन् ॥५॥

आजिपते नृपते त्वमिद्धि नो वाज ऽआ वक्षि सुक्रतो ।
वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरे ॥६॥
आजिऽपते । नृऽपते । त्वम् । इत् । हि । नः । वाजे ।
आ । वक्षि । सुक्रतो इति सुऽक्रतो ॥ वीती । होत्राभिः ।
उत । देववीतिऽभिः । ससऽवांसः । वि । शृण्विरे ॥६॥

सन्ति ह्यर्य ऽआशिष ऽइन्द्र ऽआयुर्जनानाम् ।
अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषम् ॥७॥
सन्ति । हि । अर्ये । आऽशिषः । इन्द्रे । आयुः ।
जनानाम् ॥ अस्मान् । नक्षस्व । मघऽवन् । उप ।
अवसे । धुक्षस्व । पिप्युषीम् । इषम् ॥७॥

वयं त ऽइन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।
महि स्थूरं शशयं राधो ऽअह्रयं प्रस्कण्वाय नि तोशय ॥८॥ ( २५ ) [ ७९० ]
वयम् । ते । इन्द्र । स्तोमेभिः । विधेम । त्वम् । अस्माकम् ।
शतक्रतो इति शतऽक्रतो ॥ महि । स्थूरम् । शशयम् ।
राधः । अह्रयम् । प्रस्कण्वाय । नि । तोशय ॥८॥

# ( ५५ ) [ ७ ]

५ कृशः काण्वः । इन्द्रः, प्रस्कण्वश्च । गायत्री, ३, ५ अनुष्टुप् ।

**भूरीदिन्द्रस्य वीर्यं१ व्यख्यमभ्यायति ।**

**राधस्ते दस्यवे वृक ॥१॥**

भूरि । इत् । इन्द्रस्य । वीर्यम् । वि । अख्यम् । अभि । आ । अयति ॥
राधः । ते । दस्यवे । वृक ॥१॥

**शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते ।**

**मह्ना दिवं न तस्तभुः ॥२॥**

शतम् । श्वेतासः । उक्षणः । दिवि । तारः । न । रोचन्ते ॥
मह्ना । दिवम् । न । तस्तभुः ॥२॥

**शतं वेणूञ्छतं शुनः शतं चर्माणि म्लातानि ।**

**शतं मे बल्बजस्तुका अरुषीणां चतुःशतम् ॥३॥**

शतम् । वेणून् । शतम् । शुनः । शतम् । चर्माणि । म्लातानि ॥
शतम् । मे । बल्बज॰स्तुकाः । अरुषीणाम् । चतुः॰शतम् ॥३॥

**सुदेवाः स्थ काण्वायना वयोवयो विचरन्तः ।**

**अश्वासो न चङ्क्रमत ॥४॥**

सु॰देवाः । स्थ । काण्वायनाः । वयः॰वयः । वि॰चरन्तः ।
अश्वासः । न । चङ्क्रमत ॥४॥

**आदित्साप्तस्य चर्किरन्नानूनस्य महि श्रवः ।**

**श्यावीरतिध्वसन्पथश्चक्षुषा चन संनशे ॥५॥ ( २६ )** [ ७९५ ]

आत् । इत् । साप्तस्य । चर्किरन् । न । अनूनस्य । महि । श्रवः ॥
श्यावीः । अति॰ध्वसन् । पथः । चक्षुषा । चन । सम्॰नशे ॥५॥

# (५६) [८]

५ पृषध्रः काण्वः । इन्द्रः, प्रस्कण्वश्च, ५ अग्निसूर्यौ । गायत्री, ५ पङ्क्तिः ।

प्रति ते दस्यवे वृक राधो ऽअदर्श्यह्रयम् ।
द्यौर्न प्रथिना शवः ॥१॥
प्रति । ते । दस्यवे । वृक । राधः । अदर्शि । अह्रयम् ॥
द्यौः । न । प्रथिना । शवः ॥१॥

दश मह्यं पौतक्रतः सहस्रा दस्यवे वृकः ।
नित्याद्रायो ऽअमंहत ॥२॥
दश । मह्यम् । पौत॰क्रतः । सहस्रा । दस्यवे । वृकः ॥
नित्यात् । रायः । अमंहत ॥२॥

शतं मे गर्दभानां शतमूर्णावतीनाम् ।
शतं दासाँ ऽअति स्रजः ॥३॥
शतम् । मे । गर्दभानाम् । शतम् । ऊर्णा॰वतीनाम् ॥
शतम् । दासान् । अति । स्रजः ॥३॥

तत्रो ऽअपि प्राणीयत पूतक्रतायै व्यक्ता ।
अश्वानामिन्न यूथ्याम् ॥४॥
तत्रो इति । अपि । प्र । अनीयत । पूत॰क्रतायै । वि॰अक्ता ॥
अश्वानाम् । इत् । न । यूथ्याम् ॥४॥

अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः ।
अग्निः शुक्रेण शोचिषा बृहत्सूरो ऽअरोचत दिवि सूर्यो ऽअरोचत ॥५॥ ( २७ ) [ ८०० ]
अचेति । अग्निः । चिकितुः । हव्य०वाट् । सः ।
सुमत्०रथः ॥ अग्निः । शुक्रेण । शोचिषा । बृहत् ।
सूरः । अरोचत । दिवि । सूर्यः । अरोचत ॥५॥

## ( ५७ ) [ ९ ]

४ मेध्यः काण्वः । अश्विनौ । त्रिष्टुप् ।

युवं देवा क्रतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा ।
आगच्छतं नासत्या शचीभिरिदं तृतीयं सवनं पिबाथः ॥१॥
युवम् । देवा । क्रतुना । पूर्व्येण । युक्ताः । रथेन ।
तविषम् । यजत्रा ॥ आ । अगच्छतम् । नासत्या ।
शचीभिः । इदम् । तृतीयम् । सवनम् । पिबाथः ॥१॥

युवां देवास्त्रय ऽएकादशासः सत्याः सत्यस्य ददृशे पुरस्तात् ।
अस्माकं यज्ञं सवनं जुषाणा पातं सोममश्विना दीद्यग्नी ॥२॥
युवाम् । देवाः । त्रयः । एकादशासः । सत्याः । सत्यस्य ।
ददृशे । पुरस्तात् ॥ अस्माकम् । यज्ञम् । सवनम् । जुषाणा ।
पातम् । सोमम् । अश्विना । दीद्यग्नी इति दीदि०अग्नी ॥२॥

पनाय्यं तदश्विना कृतं वां वृषभो दिवो रजसः पृथिव्याः ।
सहस्रं शंसा ऽउत ये गविष्टौ सर्वाँ ऽइत्ताँ ऽउप याता पिबध्यै ॥३॥
पनाय्यम् । तत् । अश्विना । कृतम् । वाम् । वृषभः । दिवः ।
रजसः । पृथिव्याः ॥ सहस्रम् । शंसाः । उत । ये । गो०इष्टौ ।
सर्वान् । इत् । तान् । उप । यात । पिबध्यै ॥३॥

अयं वां भागो निहितो यजत्रेमा गिरो नासत्योप यातम् ।
पिबतं सोमं मधुमन्तमस्मे प्र दाश्वांसमवतं शचीभिः ॥४॥ ( २८ ) [ ८०४ ]
अयम् । वाम् । भागः । नि॰हितः । यजत्रा । इमाः । गिरः ।
नासत्या । उप । यातम् ॥ पिबतम् । सोमम् । मधु॰मन्तम् ।
अस्मे इति । प्र । दाश्वांसम् । अवतम् । शचीभिः ॥४॥

## ( ५८ ) [ १० ]

३ मेध्यः काण्वः । विश्वे देवाः, १ ऋत्विजो वा । त्रिष्टुप् ।

यमृत्विजो बहुधा कल्पयन्तः सचेतसो यज्ञमिमं वहन्ति ।
यो ऽअनूचानो ब्राह्मणो युक्त ऽआसीत्का स्वित्तत्र यजमानस्य संवित् ॥१॥
यम् । ऋत्विजः । बहुधा । कल्पयन्तः । स॰चेतसः । यज्ञम् ।
इमम् । वहन्ति ॥ यः । अनूचानः । ब्राह्मणः । युक्तः ।
आसीत् । का । स्वित् । तत्र । यजमानस्य । सम्॰वित् ॥१॥

एक ऽएवाग्निर्बहुधा समिद्ध ऽएकः सूर्यो विश्वमनु प्रभूतः ।
एकैवोषाः सर्वमिदं वि भात्येकं वा ऽइदं वि बभूव सर्वम् ॥२॥
एकः । एव । अग्निः । बहुधा । सम्॰इद्धः । एकः । सूर्यः ।
विश्वम् । अनु । प्र॰भूतः ॥ एका । एव । उषाः । सर्वम् ।
इदम् । वि । भाति । एकम् । वै । इदम् । वि । बभूव । सर्वम् ॥२॥

ज्योतिष्मन्तं केतुमन्तं त्रिचक्रं सुखं रथं सुषदं भूरिवारम् ।
चित्रामघा यस्य योगेऽधिजज्ञे तं वां हुवे ऽअति रिक्तं पिबध्यै ॥३॥ ( २९ ) [ ८०७ ]
ज्योतिष्मन्तम् । केतु॰मन्तम् । त्रि॰चक्रम् । सु॰खम् । रथम् ।
सु॰सदम् । भूरि॰वारम् ॥ चित्र॰मघा । यस्य । योगे ।
अधि॰जज्ञे । तम् । वाम् । हुवे । अति । रिक्तम् । पिबध्यै ॥३॥

# (५९) [११]

७ सुपर्णः काण्वः । इन्द्रावरुणौ । जगती ।

इमानि वां भागधेयानि सिस्रत ऽइन्द्रावरुणा प्र महे सुतेषु वाम् ।
यज्ञेयज्ञे ह सवना भुरण्यथो यत्सुन्वते यजमानाय शिक्षथः ॥१॥
इमानि । वाम् । भाग०धेयानि । सिस्रते । इन्द्रावरुणा ।
प्र । महे । सुतेषु । वाम् ॥ यज्ञे०यज्ञे । ह । सवना ।
भुरण्यथः । यत् । सुन्वते । यजमानाय । शिक्षथः ॥१॥

निष्षिध्वरीरोषधीराप ऽआस्तामिन्द्रावरुणा महिमानमाशत ।
या सिस्रतू रजसस्पारे ऽअध्वनो ययोः शत्रुर्नकिरादेव ऽओहते ॥२॥
निः२सिध्वरीः । ओषधीः । आपः । आस्ताम् । इन्द्रावरुणा ।
महिमानम् । आशत ॥ या । सिस्रतुः । रजसः । पारे ।
अध्वनः । ययोः । शत्रुः । नकिः । अदेवः । ओहते ॥२॥

सत्यं तदिन्द्रावरुणा कृशस्य वां मध्व ऽऊर्मिं दुहते सप्त वाणीः ।
ताभिर्दाश्वांसमवतं शुभस्पती यो वामदब्धो ऽअभि पाति चित्तिभिः ॥३॥
सत्यम् । तत् । इन्द्रावरुणा । कृशस्य । वाम् । मध्वः । ऊर्मिम् ।
दुहते । सप्त । वाणीः ॥ ताभिः । दाश्वांसम् । अवतम् । शुभः ।
पती इति । यः । वाम् । अदब्धः । अभि । पाति । चित्ति०भिः ॥३॥

घृतप्रुषः सौम्या जीरदानवः सप्त स्वसारः सदन ऽऋतस्य ।
या ह वामिन्द्रावरुणा घृतश्चुतस्ताभिर्धत्तं यजमानाय शिक्षतम् ॥४॥ (३०)
घृत०प्रुषः । सौम्याः । जीर०दानवः । सप्त । स्वसारः ।
सदने । ऋतस्य ॥ याः । ह । वाम् । इन्द्रावरुणा ।
घृत०श्चुतः । ताभिः । धत्तम् । यजमानाय । शिक्षतम् ॥४॥

अवोचाम महते सौभगाय सत्यं त्वेषाभ्यां महिमानमिन्द्रियम् ।
अस्मान्स्विन्द्रावरुणा घृतश्चुतस्त्रिभिः साप्तेभिरवतं शुभस्पती ॥५॥
अवोचाम । महते । सौभगाय । सत्यम् । त्वेषाभ्याम् ।
महिमानम् । इन्द्रियम् ॥ अस्मान् । सु । इन्द्रावरुणा । घृत०श्चुतः ।
त्रि०भिः । साप्तेभिः । अवतम् । शुभः । पती इति ॥५॥

इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुतमदत्तमग्रे ।
यानि स्थानान्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यम् ॥६॥
इन्द्रावरुणा । यत् । ऋषि०भ्यः । मनीषाम् । वाचः । मतिम् ।
श्रुतम् । अदत्तम् । अग्रे ॥ यानि । स्थानानि । असृजन्त ।
धीराः । यज्ञम् । तन्वानाः । तपसा । अभि । अपश्यम् ॥६॥

इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं भूतिमस्मासु धत्तं दीर्घायुत्वाय प्र तिरतं न ऽआयुः ॥७॥ ( ३१ ) [ ८१४ ]
इन्द्रावरुणा । सौमनसम् । अदृप्तम् । रायः । पोषम् ।
यजमानेषु । धत्तम् ॥ प्र०जाम् । पुष्टिम् । भूतिम् । अस्मासु ।
धत्तम् । दीर्घायु०त्वाय । प्र । तिरतम् । नः । आयुः ॥७॥

॥ इति वालखिल्याम् ॥

## ( ६० ) [ अथ सप्तमोऽनुवाकः ॥७॥ सूक्तानि ६०-६९

२० भर्गः प्रागाथः । अग्निः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।

अग्न ऽआ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हि रासदे ॥१॥
अग्ने । आ । याहि । अग्नि०भिः । होतारम् ।
त्वा । वृणीमहे ॥ आ । त्वाम् । अनक्तु । प्र०यता ।
हविष्मती । यजिष्ठम् । बर्हिः । आ०सदे ॥१॥

अच्छा हि त्वा सहसः सूनो ऽअङ्गिरः स्रुचश्चरन्त्यध्वरे ।
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥२॥
अच्छ । हि । त्वा । सहसः । सूनो इति । अङ्गिरः ।
स्रुचः । चरन्ति । अध्वरे ॥ ऊर्जः । नपातम् ।
घृत०केशम् । ईमहे । अग्निम् । यज्ञेषु । पूर्व्यम् ॥२॥

अग्ने कविर्वेधा ऽअसि होता पावक यक्ष्यः ।
मन्द्रो यजिष्ठो ऽअध्वरेष्वीड्यो विप्रेभिः शुक्र मन्मभिः ॥३॥
अग्ने । कविः । वेधाः । असि । होता ।
पावक । यक्ष्यः ॥ मन्द्रः । यजिष्ठः । अध्वरेषु ।
ईड्यः । विप्रेभिः । शुक्र । मन्म०भिः ॥३॥

अद्रोघमा वहोशतो यविष्ठ्य देवाँ ऽअजस्र वीतये ।
अभि प्रयांसि सुधिता वसो गहि मन्दस्व धीतिभिर्हितः ॥४॥
अद्रोघम् । आ । वह । उशतः । यविष्ठ्य । देवान् ।
अजस्र । वीतये ॥ अभि । प्रयांसि । सु०धिता । आ ।
वसो इति । गहि । मन्दस्व । धीति०भिः । हितः ॥४॥

त्वमित्सप्रथा ऽअस्यग्ने त्रातर्ऋतस्कविः ।
त्वां विप्रासः समिधान दीदिव ऽआ विवासन्ति वेधसः ॥५॥ ( ३२ )
त्वम् । इत् । स०प्रथाः । असि । अग्ने । त्रातः ।
ऋतः । कविः ॥ त्वाम् । विप्रासः । सम्०इधान ।
दीदि०वः । आ । विवासन्ति । वेधसः ॥५॥

शोचा शोचिष्ठ दीदिहि विशे मयो रास्व स्तोत्रे महाँ ऽअसि ।
देवानां शर्मन्मम सन्तु सूरयः शत्रूषाहः स्वग्नयः ॥६॥

शोचं । शोचिष्ठ । दीदिहि । विशे । मयः । रास्वं ।
स्तोत्रे । महान् । असि ॥ देवानाम् । शर्मन् । ममं ।
सन्तु । सूरयः । शत्रु०सहः । सु०अग्नयः ॥६॥

**यथा चिद्वृद्धमतसमग्ने संजूर्वसि क्षमि ।**
**एवा दह मित्रमहो यो ऽअस्मध्रुग्दुर्मन्मा कश्च वेनति ॥७॥**
यथा । चित् । वृद्धम् । अतसम् । अग्ने ।
सम्०जूर्वसि । क्षमि ॥ एव । दह । मित्र०महः ।
यः । अस्म०ध्रुक् । दुः२मन्मा । कः । च । वेनति ॥७॥

**मा नो मर्ताय रिपवे रक्षस्विने माघशंसाय रीरधः ।**
**अस्रेधद्भिस्तरणिभिर्यविष्ठ्य शिवेभिः पाहि पायुभिः ॥८॥**
मा । नः । मर्ताय । रिपवे । रक्षस्विने । मा ।
अघ०शंसाय । रीरधः ॥ अस्रेधत्०भिः । तरणि०भिः ।
यविष्ठ्य । शिवेभिः । पाहि । पायु०भिः ॥८॥

**पाहि नो ऽअग्न ऽएकया पाह्युत द्वितीयया ।**
**पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥९॥**
पाहि । नः । अग्ने । एकया । पाहि ।
उत । द्वितीयया ॥ पाहि । गीः२भिः । तिसृ०भिः ।
ऊर्जाम् । पते । पाहि । चतसृ०भिः । वसो इति ॥९॥

**पाहि विश्वस्माद्रक्षसो ऽअराव्णः प्र स्म वाजेषु नोऽव ।**
**त्वामिद्धि नेदिष्ठं देवतातय ऽआपिं नक्षामहे वृधे ॥१०॥ ( ३३ )**
पाहि । विश्व०स्मात् । रक्षसः । अराव्णः । प्र ।
स्म । वाजेषु । नः । अव ॥ त्वाम् । इत् । हि ।
नेदिष्ठम् । देव०तातये । आपिम् । नक्षामहे । वृधे ॥१०॥

आ नो॑ ऽअग्ने वयो॒वृधं॑ र॒यिं पा॑वक॒ शंस्य॑म् ।
रास्वा॑ च न ऽउपमाते पु॒रु॒स्पृहं॑ सुनी॑ती॒ स्वय॑शस्तरम् ॥११॥
आ । न॒: । अ॒ग्ने॒ । व॒य॒:ऽवृध॑म् । र॒यिम् । पा॒व॒क॒ ।
शंस्य॑म् ॥ रास्व॑ । च॒ । न॒: । उ॒प॒ऽमा॒ते॒ ।
पु॒रु॒ऽस्पृह॑म् । सु॒ऽनी॑ती । स्वय॑शः॒ऽतरम् ॥११॥

येन॑ वंसा॑म॒ पृत॑नासु॒ शर्द्ध॑त॒स्तरन्तो॑ ऽअ॒र्य ऽआ॒दिश॑: ।
स त्वं नो॑ वर्द्ध॒ प्रय॑सा शचीवसो॒ जिन्वा॑ धियो॑ वसु॒विद॑: ॥१२॥
येन॑ । वंसा॑म । पृत॑नासु । शर्द्ध॑तः । तर॑न्तः । अ॒र्य॑: ।
आ॒ऽदिश॑: ॥ सः । त्वम् । न॒: । व॒र्द्ध॒ । प्र॒ऽय॑सा ।
श॒ची॒व॒सो॒ इति॑ शची॒ऽवसो । जिन्व॑ । धिय॑: । व॒सु॒ऽविद॑: ॥१२॥

शिशा॑नो वृष॒भो य॑था॒ग्निः शृङ्गे॒ दवि॑ध्वत् ।
ति॒ग्मा ऽअ॑स्य॒ हन॑वो॒ न प्र॑ति॒धृषे॑ सु॒जम्भ॒: सह॑सो य॒हुः ॥१३॥
शिशा॑नः । वृ॒ष॒भः । य॒था॒ । अ॒ग्निः । शृङ्गे॑ । दवि॑ध्वत् ॥
ति॒ग्माः । अ॒स्य॒ । हन॑वः । न । प्र॒ति॒ऽधृषे॑ । सु॒ऽजम्भ॑: । सह॑सः । य॒हुः ॥१३॥

न॒हि ते॑ ऽअग्ने वृषभ प्रति॒धृषे॒ जम्भा॑सो॒ यद्वि॒तिष्ठ॑से ।
स त्वं नो॑ होत॒: सुहु॑तं ह॒विष्कृ॑धि॒ वंस्वा॑ नो॒ वार्या॑ पुरु ॥१४॥
न॒हि । ते॒ । अ॒ग्ने॒ । वृ॒ष॒भ॒ । प्र॒ति॒ऽधृषे॑ । जम्भा॑सः ।
यत् । वि॒ऽतिष्ठ॑से ॥ सः । त्वम् । न॒: । हो॒त॒रिति॑ ।
सु॒ऽहु॑तम् । ह॒विः । कृ॒धि॒ । वंस्व॑ । न॒: । वार्या॑ । पुरु ॥१४॥

शेषे॒ वने॑षु मा॒त्रोः सं त्वा॒ मर्त्ता॑स ऽइन्धते ।
अत॑न्द्रो ह॒व्या व॑हसि हवि॒ष्कृत॒ ऽआदिद्दे॒वेषु राजसि ॥१५॥ ( ३४)

शेषें । वनेषु । मात्रोः । सम् । त्वा ।
मर्त्तासः । इन्धते ॥ अतन्द्रः । हव्या । वहसि ।
हविःऽकृतः । आत् । इत् । देवेषु । राजसि ॥१५॥

सप्त होतारस्तमिदीळते त्वाग्ने सुत्यजमह्रयम् ।
भिनत्स्यद्रिं तपसा वि शोचिषा प्राग्ने तिष्ठ जनाँ ऽअति ॥१६॥
सप्त । होतारः । तम् । इत् । ईळते । त्वा । अग्ने ।
सु॰त्यजम् । अह्रयम् ॥ भिनत्सि । अद्रिम् । तपसा ।
वि । शोचिषा । प्र । अग्ने । तिष्ठ । जनान् । अति ॥१६॥

अग्निमग्निं वो ऽअध्रिगुं हुवेम वृक्तबर्हिषः ।
अग्निं हितप्रयसः शश्वतीष्वा होतारं चर्षणीनाम् ॥१७॥
अग्निम्॰अग्निम् । वः । अध्रि॰गुम् । हुवेम । वृक्त॰बर्हिषः ॥
अग्निम् । हित॰प्रयसः । शश्वतीषु । आ । होतारम् । चर्षणीनाम् ॥१७॥

केतेन शर्मन्त्सचते सुषामण्यग्ने तुभ्यं चिकित्वना ।
इषण्यया नः पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥१८॥
केतेन । शर्मन् । सचते । सु॰सामनि । अग्ने ।
तुभ्यम् । चिकित्वना ॥ इषण्यया । नः । पुरु॰रूपम् ।
आ । भर । वाजम् । नेदिष्ठम् । ऊतये ॥१८॥

अग्ने जरितर्विश्पतिस्तेपानो देव रक्षसः ।
अप्रोषिवान्गृहपतिर्महाँ ऽअसि दिवस्पायुर्दुरोणयुः ॥१९॥
अग्ने । जरितः । विश्पतिः । तेपानः । देव ।
रक्षसः ॥ अप्रोषि॰वान् । गृह॰पतिः । महान् ।
असि । दिवः । पायुः । दुरोण॰युः ॥१९॥

मा नो रक्ष ऽआ वेशीदाघृणीवसो मा यातुर्यातुमावताम् ।
परोगव्यूत्यनिरामप क्षुधमग्ने सेध रक्षस्विनः ॥२०॥ ( ३५ ) [ ८३४ ]
मा । नः । रक्षः । आ । वेशीत् । आघृणिवसो इत्याघृणि०वसो ।
मा । यातुः । यातु०मावताम् ॥ परः०गव्यूति । अनिराम् ।
अप । क्षुधम् । अग्ने । सेध । रक्षस्विनः ॥२०॥

## ( ६१ )

१८ भर्गः प्रागाथः । इन्द्रः । प्रगाथः= ( विषमा बृहती, समा सतोबृहती ), १७ शंकुमती ।

उभयं शृणवच्च न ऽइन्द्रो ऽअर्वागिदं वचः ।
सत्राच्या मघवा सोमपीतये धिया शविष्ठ ऽआ गमत् ॥१॥
उभयम् । शृणवत् । च । नः । इन्द्रः । अर्वाक् ।
इदम् । वचः ॥ सत्राच्या । मघ०वा । सोम०पीतये ।
धिया । शविष्ठः । आ । गमत् ॥१॥

तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ॥२॥
तम् । हि । स्व०राजम् । वृषभम् । तम् । ओजसे ।
धिषणे इति । निः०ततक्षतुः ॥ उत । उप०मानाम् । प्रथमः ।
नि । सीदसि । सोम०कामम् । हि । ते । मनः ॥२॥

आ वृषस्व पुरूवसो सुतस्येन्द्रान्धसः ।
विद्मा हि त्वा हरिवः पृत्सु सासहिमधृष्टं चिद्दधृष्वणिम् ॥३॥
आ । वृषस्व । पुरुवसो इति पुरु०वसो । सुतस्य ।
इन्द्र । अन्धसः ॥ विद्म । हि । त्वा । हरि०वः ।
पृत्०सु । ससहिम् । अधृष्टम् । चित् । दधृष्वणिम् ॥३॥

अप्रामिसत्य मघवन्तथेदसदिन्द्र क्रत्वा यथा वशः ।
सनेम वाजं तव शिप्रिन्नवसा मक्षू चिद्यन्तो ऽअद्रिवः ॥४॥
अप्रामि०सत्य । मघ०वन् । तथा । इत् । असत् । इन्द्र ।
क्रत्वा । यथा । वशः ॥ सनेम । वाजम् । तव । शिप्रिन् ।
अवसा । मक्षु । चित् । यन्तः । अद्रि०वः ॥४॥

शग्ध्यूई षु शचीपत ऽइन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥५॥ ( ३६ )
शग्धि । ऊँ इति । सु । शची०पते । इन्द्र ।
विश्वाभिः । ऊति०भिः ॥ भगम् । न । हि । त्वा ।
यशसम् । वसु०विदम् । अनु । शूर । चरामसि ॥५॥

पौरो ऽअश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।
नकिर्हि दानं परिमर्धिषत्त्वे यद्यद्यामि तदा भर ॥६॥
पौरः । अश्वस्य । पुरु०कृत् । गवाम् । असि । उत्सः ।
देव । हिरण्ययः ॥ नकिः । हि । दानम् । परि०मर्धिषत् ।
त्वे इति । यत्०यत् । यामि । तत् । आ । भर ॥६॥

त्वं ह्येहि चेरवे विदा भगं वसुत्तये ।
उद्वावृषस्व मघवन्गविष्टय ऽउदिन्द्राश्वमिष्टये ॥७॥
त्वम् । हि । आ । इहि । चेरवे । विदाः ।
भगम् । वसुत्तये ॥ उत् । ववृषस्व । मघ०वन् ।
गो०इष्टये । उत् । इन्द्र । अश्वम्०इष्टये ॥७॥

त्वं पुरू सहस्राणि शतानि च यूथा दानाय मंहसे ।
आ पुरंदरं चकृम विप्रवचस ऽइन्द्रं गायन्तोऽवसे ॥८॥

त्वम् । पुरु । सहस्राणि । शतानि । च । यूथा ।
दानाय । मंहसे ॥ आ । पुरम्०दरम् । चकृम ।
विप्र०वचसः । इन्द्रम् । गायन्तः । अवसे ॥८॥

अविप्रो वा यदविधद्विप्रो वेन्द्र ते वचः ।
स प्र ममन्दत्त्वाया शतक्रतो प्राचामन्यो ऽअहंसन ॥९॥
अविप्रः । वा । यत् । अविधत् । विप्रः । वा । इन्द्र ।
ते । वचः ॥ सः । प्र । ममन्दत् । त्वा०या । शतक्रतो इति
शत०क्रतो । प्राचामन्यो इति प्राचा०मन्यो । अहम्०सन ॥९॥

उग्रबाहुर्म्रक्षकृत्वा पुरंदरो यदि मे शृणवद्धवम् ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहे ॥१०॥ (३७)
उग्र०बाहुः । म्रक्ष०कृत्वा । पुरम्०दरः । यदि । मे ।
शृणवत् । हवम् ॥ वसु०यवः । वसु०पतिम् ।
शत०क्रतुम् । स्तोमैः । इन्द्रम् । हवामहे ॥१०॥

न पापासो मनामहे नारायासो न जळ्हवः ।
यदिन्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै ॥११॥
न । पापासः । मनामहे । न । अरायासः ।
न । जल्हवः ॥ यत् । इत् । नु । इन्द्रम् । वृषणम् ।
सचा । सुते । सखायम् । कृणवामहै ॥११॥

उग्रं युयुज्म पृतनासु सासहिमृणकातिमदाभ्यम् ।
वेदा भृमं चित्सनिता रथीतमो वाजिनं यमिदू नशत् ॥१२॥
उग्रम् । युयुज्म । पृतनासु । ससहिम् । ऋण०कातिम् ।
अदाभ्यम् ॥ वेद । भृमम् । चित् । सनिता । रथि०तमः ।
वाजिनम् । यम् । इत् । ऊँ इति । नशत् ॥१२॥

यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि ॥१३॥
यतः । इन्द्र । भयामहे । ततः । नः । अभयम् ।
कृधि ॥ मघऽवन् । शग्धि । तव । तम् । नः ।
ऊतिऽभिः । वि । द्विषः । वि । मृधः । जहि ॥१३॥

त्वं हि राधस्पते राधसो महः क्षयस्यासि विधतः ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥१४॥
त्वम् । हि । राधः२पते । राधसः । महः । क्षयस्य ।
असि । विधतः ॥ तम् । त्वा । वयम् । मघऽवन् ।
इन्द्र । गिर्वणः । सुतऽवन्तः । हवामहे ॥१४॥

इन्द्रः स्पळुत वृत्रहा परस्पा नो वरेण्यः ।
स नो रक्षिषच्चरमं स मध्यमं स पश्चात्पातु नः पुरः ॥१५॥ ( ३८ )
इन्द्रः । स्पट् । उत । वृत्रऽहा । परः२पाः । नः ।
वरेण्यः ॥ सः । नः । रक्षिषत् । चरमम् । सः ।
मध्यमम् । सः । पश्चात् । पातु । नः । पुरः ॥१५॥

त्वं नः पश्चादधरादुत्तरात्पुर इन्द्र नि पाहि विश्वतः ।
आरे अस्मत्कृणुहि दैव्यं भयमारे हेतीरदेवीः ॥१६॥
त्वम् । नः । पश्चात् । अधरात् । उत्तरात् । पुरः । इन्द्र ।
नि । पाहि । विश्वतः ॥ आरे । अस्मत् । कृणुहि ।
दैव्यम् । भयम् । आरे । हेतीः । अदेवीः ॥१६॥

अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः ।
विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥१७॥

अद्य॰अंद्य । श्वः॰श्वः । इन्द्रंस् । त्रास्वं । परे ।
च । नः ॥ विश्वा । च । नः । जरितॄन् । सत्॰पते ।
अहां । दिवां । नक्तंम् । च । रक्षिषः ॥१७॥

प्रभङ्गी शूरो मघवा तुवीमघः संमिश्लो विर्यांय कम् ।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥१८॥ (३९) [८५२]
प्र॰भङ्गी । शूरः । मघ॰वा । तुवि॰मघः । सम्॰मिश्लः ।
वीर्याय । कम् ॥ उभा । ते । बाहू इति । वृषणा ।
शतक्रतो इति शत॰क्रतो । नि । या । वज्रंम् । मिमिक्षतुः ॥१८॥

# ( ६२ )

१२ प्रगाथो घौरः काण्वः । इन्द्रः । पङ्क्तिः, ७-९ बृहती ।

प्रो ऽअस्मा ऽउपंस्तुतिं भरता यज्जुजोषति ।
उक्थैरिन्द्रस्य माहिनं वयो वर्द्धन्ति सोमिनो भद्रा ऽइन्द्रस्य रातयः ॥१॥
प्रो इति । अस्मै । उपं॰स्तुतिम् । भरत । यत् ।
जुजोषति ॥ उक्थैः । इन्द्रस्य । माहिनम् । वयः ।
वर्द्धन्ति । सोमिनः । भद्राः । इन्द्रस्य । रातयः ॥१॥

अयुजो ऽअसमो नृभिरेकः कृष्टीरयास्यः ।
पूर्वीरति प्र वावृधे विश्वा जातान्योजसा भद्रा ऽइन्द्रस्य रातयः ॥२॥
अयुजः । असमः । नृ॰भिः । एकः । कृष्टीः ।
अयास्यः ॥ पूर्वीः । अति । प्र । ववृधे । विश्वा ।
जातानि । ओजसा । भद्राः । इन्द्रस्य । रातयः ॥२॥

अहितेन चिदर्वता जीरदानुः सिषासति ।
प्रवाच्यमिन्द्र तत्तव वीर्याणि करिष्यतो भद्रा ऽइन्द्रस्य रातयः ॥३॥

अहिंतेन । चित् । अर्वंता । जीर०दानुः । सिषासति ॥
प्र०वाच्यम् । इन्द्र । तत् । तर्व । वीर्याणि ।
करिष्यतः । भद्राः । इन्द्रस्य । रातयः ॥३॥

**आ याहि कृणवाम त ऽइन्द्र ब्रह्माणि वर्द्धना ।**
**येभिः शविष्ठ चाकनो भद्रमिह श्रवस्यते भद्रा ऽइन्द्रस्य रातयः ॥४॥**
आ । याहि । कृणवाम । ते । इन्द्र । ब्रह्माणि ।
वर्द्धना ॥ येभिः । शविष्ठ । चाकनः । भद्रम् ।
इह । श्रवस्यते । भद्राः । इन्द्रस्य । रातयः ॥४॥

**धृषतश्चिद्धृषन्मनः कृणोषीन्द्र यत्त्वम् ।**
**तीव्रैः सोमैः सपर्यतो नमोभिः प्रतिभूषतो भद्रा ऽइन्द्रस्य रातयः ॥५॥**
धृषतः । चित् । धृषत् । मनः । कृणोषि । इन्द्र ।
यत् । त्वम् ॥ तीव्रैः । सोमैः । सपर्यतः । नमः२भिः ।
प्रति०भूषतः । भद्राः । इन्द्रस्य । रातयः ॥५॥

**अव चष्ट ऽऋचीषमोऽवताँइव मानुषः ।**
**जुष्ट्वी दक्षस्य सोमिनः सखायं कृणुते युजं भद्रा ऽइन्द्रस्य रातयः ॥६॥ ( ४० )**
अव । चष्टे । ऋचीषमः । अवतान्०इव । मानुषः ॥
जुष्ट्वी । दक्षस्य । सोमिनः । सखायम् । कृणुते ।
युजम् । भद्राः । इन्द्रस्य । रातयः ॥६॥

**विश्वे त ऽइन्द्र वीर्यं देवा ऽअनु क्रतुं ददुः ।**
**भुवो विश्वस्य गोपतिः पुरुष्टुत भद्रा ऽइन्द्रस्य रातयः ॥७॥**
विश्वे । ते । इन्द्र । वीर्यम् । देवाः । अनु ।
क्रतुम् । ददुः ॥ भुवः । विश्वस्य । गो०पतिः ।
पुरु०स्तुत । भद्राः । इन्द्रस्य । रातयः ॥७॥

गृणे तदिन्द्र ते शव उपमं देवतातये ।
यद्धंसि वृत्रमोजसा शचीपते भद्रा इन्द्रस्य रातयः ॥८॥
गृणे । तत् । इन्द्र । ते । शवः । उप॰मम् ।
देव॰तातये ॥ यत् । हंसि । वृत्रम् । ओजसा ।
शची॰पते । भद्राः । इन्द्रस्य । रातयः ॥८॥

समनेव वपुष्यतः कृणवन्मानुषा युगा ।
विदे तदिन्द्रश्चेतनमध श्रुतो भद्रा इन्द्रस्य रातयः ॥९॥
समनाऽइव । वपुष्यतः । कृणवत् । मानुषा ।
युगा ॥ विदे । तत् । इन्द्रः । चेतनम् । अध ।
श्रुतः । भद्राः । इन्द्रस्य । रातयः ॥९॥

उज्जातमिन्द्र ते शव उत्त्वामुत्त तव क्रतुम् ।
भूरिगो भूरि वावृधुर्मघवन्तव शर्मणि भद्रा इन्द्रस्य रातयः ॥१०॥
उत् । जातम् । इन्द्र । ते । शवः । उत् । त्वाम् । उत् ।
तव । क्रतुम् ॥ भूरिगो इति भूरि॰गो । भूरि । ववृधुः ।
मघ॰वन् । तव । शर्मणि । भद्राः । इन्द्रस्य । रातयः ॥१०॥

अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ ।
अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥११॥
अहम् । च । त्वम् । च । वृत्र॰हन् । सम् । युज्याव ।
सनि॰भ्यः । आ ॥ अराति॰वा । चित् । अद्रि॰वः । अनु ।
नौ । शूर । मंसते । भद्राः । इन्द्रस्य । रातयः ॥११॥

सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम नानृतम् ।
महाँ असुन्वतो वधो भूरि ज्योतींषि सुन्वतो भद्रा इन्द्रस्य रातयः ॥१२॥ ( ४१ ) [ ८६४ ]

सत्यम् । इत् । वै । ऊँ इति । तम् । वयम् । इन्द्रम् ।
स्तवाम । न । अनृतम् ॥ महान् । असुन्वतः । वधः ।
भूरि । ज्योतींषि । सुन्वतः । भद्राः । इन्द्रस्य । रातयः ॥१२॥

## ( ६३ )

**१२ प्रगाथः काण्वः । इन्द्रः, १२ देवाः । गायत्री, १, ४-५, ७ अनुष्टुप्, १२ त्रिष्टुप् ।**

**स पूर्व्यो महानां वेनः क्रतुभिरानजे ।**
**यस्य द्वारा मनुष्पिता देवेषु धियऽआनजे ॥१॥**
सः । पूर्व्यः । महानाम् । वेनः । क्रतु०भिः । आनजे ॥
यस्य । द्वारा । मनुः । पिता । देवेषु । धियः । आनजे ॥१॥

**दिवो मानं नोत्सदन्त्सोमपृष्ठासोऽअद्रयः ।**
**उक्था ब्रह्म च शंस्या ॥२॥**
दिवः । मानम् । न । उत् । सदन् । सोम०पृष्ठासः । अद्रयः ॥
उक्था । ब्रह्म । च । शंस्या ॥२॥

**स विद्वाँऽअङ्गिरोभ्यऽइन्द्रो गाऽअवृणोदप ।**
**स्तुषे तदस्य पौंस्यम् ॥३॥**
सः । विद्वान् । अङ्गिरः२भ्यः । इन्द्रः । गाः । अवृणोत् । अप ॥
स्तुषे । तत् । अस्य । पौंस्यम् ॥३॥

**स प्रत्नथा कविवृधऽइन्द्रो वाकस्य वक्षणिः ।**
**शिवोऽअर्कस्य होमन्यस्मत्रा गन्त्ववसे ॥४॥**
सः । प्रत्न०था । कवि०वृधः । इन्द्रः । वाकस्य । वक्षणिः ॥
शिवः । अर्कस्य । होमनि । अस्म०त्रा । गन्तु । अवसे ॥४॥

**आदू नु ते ऽअनु क्रतुं स्वाहा वरस्य यज्यवः ।**
**श्वात्रमर्का ऽअनूषतेन्द्र गोत्रस्य दावने ॥५॥**
आत् । ऊँ इति । नु । ते । अनु । क्रतुम् ।
स्वाहा । वरस्य । यज्यवः ॥ श्वात्रम् । अर्काः ।
अनूषत । इन्द्र । गोत्रस्य । दावने ॥५॥

**इन्द्रे विश्वानि वीर्या कृतानि कर्त्त्वानि च ।**
**यमर्का ऽअध्वरं विदुः ॥६॥ (४२)**
इन्द्रे । विश्वानि । वीर्या । कृतानि । कर्त्त्वानि । च ॥
यम् । अर्काः । अध्वरम् । विदुः ॥६॥

**यत्पाञ्चजन्यया विशेन्द्रे घोषा ऽअसृक्षत ।**
**अस्तृणाद्बर्हणा विपोऽर्यो मानस्य स क्षयः ॥७॥**
यत् । पाञ्च०जन्यया । विशा । इन्द्रे । घोषाः । असृक्षत ॥
अस्तृणात् । बर्हणा । विपः । अर्यः । मानस्य । सः । क्षयः ॥७॥

**इयमु ते ऽअनुष्टुतिश्चकृषे तानि पौंस्या ।**
**प्रावश्चक्रस्य वर्त्तनिम् ॥८॥**
इयम् । ऊँ इति । ते । अनु०स्तुतिः । चकृषे । तानि । पौंस्या ॥
प्र । आवः । चक्रस्य । वर्त्तनिम् ॥८॥

**अस्य वृष्णो व्योदन ऽउरु क्रमिष्ट जीवसे ।**
**यवं न पश्व ऽआ ददे ॥९॥**
अस्य । वृष्णः । वि०ओदने । उरु । क्रमिष्ट । जीवसे ॥
यवम् । न । पश्वः । आ । ददे ॥९॥

**तद्दधाना ऽअवस्यवो युष्माभिर्दक्षपितरः ।**

**स्याम मरुत्वतो वृधे ॥१०॥**

तत् । दधानाः । अवस्यवः । युष्माभिः । दक्ष०पितरः ॥
स्याम । मरुत्वतः । वृधे ॥१०॥

**बळृत्वियाय धाम्न ऽऋक्वभिः शूर नोनुमः ।**

**जेषामेन्द्र त्वया युजा ॥११॥**

बट् । ऋत्वियाय । धाम्नै । ऋक्व०भिः । शूर । नोनुमः ॥
जेषाम । इन्द्र । त्वया । युजा ॥११॥

**अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।**

**यः शंसते स्तुवते धायि पज्र ऽइन्द्रज्येष्ठा ऽअस्माँ ऽअवन्तु देवाः ॥१२॥ ( ४३ ) [ ८७६ ]**

अस्मे इति । रुद्राः । मेहना । पर्वतासः । वृत्र०हत्ये ।
भर०हूतौ । स०जोषाः ॥ यः । शंसते । स्तुवते । धायि ।
पज्रः । इन्द्र०ज्येष्ठाः । अस्मान् । अवन्तु । देवाः ॥१२॥

# ( ६४ )

**१२ प्रगाथः काण्वः । इन्द्रः । गायत्री ।**

**उत्त्वा मन्दन्तु स्तोमाः कृणुष्व राधो ऽअद्रिवः ।**

**अव ब्रह्मद्विषो जहि॥१॥**

उत् । त्वा । मन्दन्तु । स्तोमाः । कृणुष्व । राधः । अद्रि०वः ॥
अव । ब्रह्म०द्विषः । जहि ॥१॥

**पदा पणीँरराधसो नि बाधस्व महाँ ऽअसि ।**

**नहि त्वा कश्चन प्रति ॥२॥**

पदा । पणीन् । अराधसः । नि । बाधस्व । महान् । असि ॥
नहि । त्वा । कः । चन । प्रति ॥२॥

त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।
त्वं राजा जनानाम् ॥३॥
त्वम् । ईशिषे । सुतानाम् । इन्द्र । त्वम् । असुतानाम् ॥
त्वम् । राजा । जनानाम् ॥३॥

एहि प्रेहि क्षयो दिव्याइघोषञ्चर्षणीनाम् ।
ओभे पृणासि रोदसी ॥४॥
आ । इहि । प्र । इहि । क्षयः । दिवि । आ०घोषन् । चर्षणीनाम् ॥
आ । उभे इति । पृणासि । रोदसी इति ॥४॥

त्यं चित्पर्वतं गिरिं शतवन्तं सहस्रिणम् ।
वि स्तोतृभ्यो रुरोजिथ ॥५॥
त्यम् । चित् । पर्वतम् । गिरिम् । शत०वन्तम् । सहस्रिणम् ॥
वि । स्तोतृ०भ्यः । रुरोजिथ ॥५॥

वयमु त्वा दिवा सुते वयं नक्तं हवामहे ।
अस्माकं काममा पृण ॥६॥ (४४)
वयम् । ऊँ इति । त्वा । दिवा । सुते । वयम् । नक्तम् । हवामहे ॥
अस्माकम् । कामम् । आ । पृण ॥६॥

क्व१ स्य वृषभो युवा तुविग्रीवो ऽअनानतः ।
ब्रह्मा कस्तं सपर्यति ॥७॥

क्वं । स्यः । वृषभः । युवा । तुविऽग्रीवः । अनानतः ॥
ब्रह्मा । कः । तम् । सपर्यति ॥७॥

**कस्यं स्वित्सवनं वृषा जुजुष्वाँ ऽअव गच्छति ।**
**इन्द्रं क ऽउं स्विदा चंके ॥८॥**
कस्यं । स्वित् । सवनम् । वृषा । जुजुष्वान् । अव । गच्छति ॥
इन्द्रम् । कः । ऊँ इतिं । स्वित् । आ । चके ॥८॥

**कं ते दाना ऽअसक्षत वृत्रहन्कं सुवीर्या ।**
**उक्थे क ऽउं स्विदन्तमः ॥९॥**
कम् । ते । दानाः । असक्षत । वृत्रऽहन् । कम् । सुऽवीर्या ।
उक्थे । कः । ऊँ इतिं । स्वित् । अन्तमः ॥९॥

**अयं ते मानुषे जने सोमः पूरुषु सूयते ।**
**तस्येहि प्र द्रवा पिब ॥१०॥**
अयम् । ते । मानुषे । जने । सोमः । पूरुषु । सूयते ॥
तस्यं । आ । इहि । प्र । द्रव । पिब ॥१०॥

**अयं ते शर्यणावति सुषोमायामधि प्रियः ।**
**आर्जीकीयें मदिन्तमः ॥११॥**
अयम् । ते । शर्यणाऽवति । सुऽसोमायाम् । अधि । प्रियः ॥
आर्जीकीयें । मदिन्ऽतमः ॥११॥

**तमद्य राधसे महे चारुं मदाय घृष्वये ।**
**एहीमिन्द्र द्रवा पिब ॥१२॥ (४५)** [ ८८८ ]

तम् । अद्य । राधसे । महे । चारुम् । मदाय । घृष्वये ॥
आ । इहि । ईम् । इन्द्र । द्रव । पिब ॥१२॥

# ( ६५ )

१२ प्रगाथः काण्वः । इन्द्रः । गायत्री ।

यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
आ याहि तूयमाशुभिः ॥१॥
यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृ०भिः ॥
आ । याहि । तूयम् । आशु०भिः ॥१॥

यद्वा प्रस्रवणे दिवो मादयासे स्वर्णरे ।
यद्वा समुद्रे ऽअन्धसः ॥२॥
यत् । वा । प्र०स्रवणे । दिवः । मादयासे । स्वः२नरे ॥
यत् । वा । समुद्रे । अन्धसः ॥२॥

आ त्वा गीर्भिर्महामुरुं हुवे गामिव भोजसे ।
इन्द्र सोमस्य पीतये ॥३॥
आ । त्वा । गीः२भिः । महाम् । उरुम् । हुवे । गाम्ऽइव । भोजसे ॥
इन्द्र । सोमस्य । पीतये ॥३॥

आ त ऽइन्द्र महिमानं हरयो देव ते महः ।
रथे वहन्तु बिभ्रतः ॥४॥
आ । ते । इन्द्र । महिमानम् । हरयः । देव । ते । महः ॥
रथे । वहन्तु । बिभ्रतः ॥४॥

इन्द्रं गृणीष ऽउ स्तुषे महाँ ऽउग्र ऽईशानकृत् ।
एहिं नः सुतं पिबं ॥५॥
इन्द्रं । गृणीषे । ऊँ इतिं । स्तुषे । महान् । उग्रः । ईशान०कृत् ॥
आ । इहि । नः । सुतम् । पिबं ॥५॥

सुतावन्तस्त्वा वयं प्रयस्वन्तो हवामहे ।
इदं नो बर्हिरासदे ॥६॥ (४६)
सुत०वन्तः । त्वा । वयम् । प्रयस्वन्तः । हवामहे ॥
इदम् । नः । बर्हिः । आ०सदे ॥६॥

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् ।
तं त्वा वयं हवामहे ॥ ७॥
यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् ॥
तम् । त्वा । वयम् । हवामहे ॥७॥

इदं ते सोम्यं मध्वधुक्षन्नद्रिभिर्नरः ।
जुषाण ऽइन्द्र तत्पिब ॥८॥
इदम् । ते । सोम्यम् । मधु । अधुक्षन् । अद्रि०भिः । नरः ॥
जुषाणः । इन्द्र । तत् । पिब ॥८॥

विश्वाँ ऽअर्यो विपश्चितोऽति ख्यस्तूयमा गहि ।
अस्मे धेहि श्रवो बृहत् ॥९॥
विश्वान् । अर्यः । विपःश्चितः । अति । ख्यः । तूयम् । आ । गहि ॥
अस्मे इति । धेहि । श्रवः । बृहत् ॥९॥

दाता मे पृषतीनां राजा हिरण्यवीनाम् ।
मा देवा मघवा रिषत् ॥१०॥
दाता । मे । पृषतीनाम् । राजा । हिरण्य०वीनाम् ॥
मा । देवाः । मघ०वा । रिषत् ॥१०॥

सहस्रे पृषतीनामधि श्चन्द्रं बृहत्पृथु ।
शुक्रं हिरण्यमा ददे ॥११॥
सहस्रे । पृषतीनाम् । अधि । चन्द्रम् । बृहत् । पृथु ॥
शुक्रम् । हिरण्यम् । आ । ददे ॥११॥

नपातो दुर्गहस्य मे सहस्रेण सुराधसः ।
श्रवो देवेष्वक्रत ॥१२॥ (४७) [९००]
नपातः । दुः२गहस्य । मे । सहस्रेण । सु०राधसः ॥
श्रवः । देवेषु । अक्रत ॥१२॥

## ( ६६ )

१५ कलिः प्रागाथः । इन्द्रः । प्रगाथः ( विषमा बृहती, समा सतोबृहती ), १५ अनुष्टुप्।
तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऽऊतये ।
बृहद्गायन्तः सुतसोमे ऽअध्वरे हुवे भरं न कारिणम् ॥१॥
तरः२भिः । वः । विदत्०वसुम् । इन्द्रम् । स०बाधः । ऊतये ॥
बृहत् । गायन्तः । सुत०सोमे । अध्वरे । हुवे । भरम् । न । कारिणम् ॥१॥

न यं दुध्रा वरन्ते न स्थिरा मुरो मदे सुशिप्रमन्धसः ।
य ऽआदृत्या शशमानाय सुन्वते दाता जरित्र ऽउक्थ्यम् ॥२॥

न । यम् । दुध्राः । वरन्ते । न । स्थिराः । मुरः ।
मदे । सुऽशिप्रम् । अन्धसः ॥ यः । आऽदृत्य ।
शशमानाय । सुन्वते । दाता । जरित्रे । उक्थ्यम् ॥२॥

यः शक्रो मृक्षो ऽअश्व्यो यो वा कीजो हिरण्ययः ।
स ऽऊर्वस्य रेजयत्यपावृतिमिन्द्रो गव्यस्य वृत्रहा ॥३॥
यः । शक्रः । मृक्षः । अश्व्यः । यः । वा । कीजः । हिरण्ययः ॥
सः । ऊर्वस्य । रेजयति । अपऽवृतिम् । इन्द्रः । गव्यस्य । वृत्रऽहा ॥३॥

निखातं चिद्यः पुरुसंभृतं वसूदिद्वपति दाशुषे ।
वज्री सुशिप्रो हर्यश्व ऽइत्करदिन्द्रः क्रत्वा यथा वशत् ॥४॥
निखातम् । चित् । यः । पुरुऽसम्भृतम् । वसु । उत् ।
इत् । वपति । दाशुषे ॥ वज्री । सुऽशिप्रः । हरिऽअश्वः ।
इत् । करत् । इन्द्रः । क्रत्वा । यथा । वशत् ॥४॥

यद्वावन्थ पुरुष्टुत पुरा चिच्छूर नृणाम् ।
वयं तत्त ऽइन्द्र सं भरामसि यज्ञमुक्थं तुरं वचः ॥५॥ (४८)
यत् । ववन्थ । पुरुऽस्तुत । पुरा । चित् ।
शूर । नृणाम् ॥ वयम् । तत् । ते । इन्द्र । सम् ।
भरामसि । यज्ञम् । उक्थम् । तुरम् । वचः ॥५॥

सचा सोमेषु पुरुहूत वज्रिवो मदाय द्युक्ष सोमपाः ।
त्वमिद्धि ब्रह्मकृते काम्यं वसु देष्ठः सुन्वते भुवः ॥६॥
सचा । सोमेषु । पुरुऽहूत । वज्रिऽवः । मदाय ।
द्युक्ष । सोमऽपाः ॥ त्वम् । इत् । हि । ब्रह्मऽकृते ।
काम्यम् । वसु । देष्ठः । सुन्वते । भुवः ॥६॥

**वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।**
**तस्मा ऽउ ऽअद्य समना सुतं भरा नूनं भूषत श्रुते ॥७॥**
वयम् । एनम् । इदा । ह्यः । अपीपेम । इह ।
वज्रिणम् ॥ तस्मै । ऊँ इति । अद्य । समना ।
सुतम् । भर । आ । नूनम् । भूषत । श्रुते ॥७॥

**वृकश्चिदस्य वारण ऽउरामथिरा वयुनेषु भूषति ।**
**सेमं नः स्तोमं जुजुषाण ऽआ गहीन्द्र प्र चित्रया धिया ॥८॥**
वृकः । चित् । अस्य । वारणः । उरा०मथिः । आ ।
वयुनेषु । भूषति ॥ सः । इमम् । नः । स्तोमम् ।
जुजुषाणः । आ । गहि । इन्द्र । प्र । चित्रया । धिया ॥८॥

**कदू न्वस्याकृतमिन्द्रस्यास्ति पौंस्यम् ।**
**केनो नु कं श्रोमतेन न शुश्रुवे जनुषः परि वृत्रहा ॥९॥**
कत् । ऊँ इति । नु । अस्य । अकृतम् । इन्द्रस्य ।
अस्ति । पौंस्यम् ॥ केनो इति । नु । कम् । श्रोमतेन ।
न । शुश्रुवे । जनुषः । परि । वृत्र०हा ॥९॥

**कदू महीरधृष्टा ऽअस्य तविषीः कदु वृत्रनो ऽअस्तृतम् ।**
**इन्द्रो विश्वान्बेकनाटाँ ऽअहर्दृश ऽउत क्रत्वा पणीँरभि ॥१०॥ ( ४९ )**
कत् । ऊँ इति । महीः । अधृष्टाः । अस्य । तविषीः । कत् ।
ऊँ इति । वृत्र०घ्नः । अस्तृतम् ॥ इन्द्रः । विश्वान् ।
बेक०नाटान् । अहः२दृशः । उत । क्रत्वा । पणीन् । अभि ॥१०॥

**वयं घा ते ऽअपूर्व्येन्द्र ब्रह्माणि वृत्रहन् ।**
**पुरूतमासः पुरुहूत वज्रिवो भृतिं न प्र भरामसि ॥११॥**

वयम् । घ । ते । अपूर्व्या । इन्द्र । ब्रह्माणि । वृत्र॰हन् ॥
पुरु॰तमासः । पुरु॰हूत । वज्रि॰वः । भृतिम् । न । प्र । भरामसि ॥११॥

**पूर्वीश्चिद्धि त्वे तुविकूर्मिन्नाशसो हवन्त ऽइन्द्रोतयः ।**
**तिरश्चिदर्यः सवना वसो गहि शविष्ठ श्रुधि मे हवम् ॥१२॥**
पूर्वीः । चित् । हि । त्वे इति । तुवि॰कूर्मिन् । आ॰शसः ।
हवन्ते । इन्द्र । ऊतयः ॥ तिरः । चित् । अर्यः । सवना ।
आ । वसो इति । गहि । शविष्ठ । श्रुधि । मे । हवम् ॥१२॥

**वयं घा ते त्वे ऽइद्विन्द्र विप्रा ऽअपि ष्मसि ।**
**नहि त्वदन्यः पुरुहूत कश्चन मघवन्नस्ति मर्डिता ॥१३॥**
वयम् । घ । ते । त्वे इति । इत् । ऊँ इति । इन्द्र ।
विप्राः । अपि । स्मसि ॥ नहि । त्वत् । अन्यः ।
पुरु॰हूत । कः । चन । मघ॰वन् । अस्ति । मर्डिता ॥१३॥

**त्वं नो ऽअस्या ऽअमतेरुत क्षुधो३ऽभिशस्तेरव स्पृधि ।**
**त्वं न ऽऊती तव चित्रया धिया शिक्षा शचिष्ठ गातुवित् ॥१४॥**
त्वम् । नः । अस्याः । अमतेः । उत । क्षुधः । अभि॰शस्तेः ।
अव । स्पृधि ॥ त्वम् । नः । ऊती । तव । चित्रया ।
धिया । शिक्ष । शचिष्ठ । गातु॰वित् ॥१४॥

**सोम ऽइद्वः सुतो ऽअस्तु कलयो मा बिभीतन ।**
**अपेदेष ध्वस्मायति स्वयं घैषो ऽअपायति ॥१५॥ (५०)** [ ९१५ ]
सोमः । इत् । वः । सुतः । अस्तु । कलयः ।
मा । बिभीतन ॥ अप । इत् । एषः । ध्वस्मा ।
अयति । स्वयम् । घ । एषः । अप । अयति ॥१५॥

# ( ६७ )

२१ मत्स्यः साम्मदः, मैत्रावरुणिर्मान्यः, बहवो वा मत्स्या जालनद्धाः । आदित्याः, १०-१२ अदितिः । गायत्री ।

त्यान्नु क्षत्रियाँ ऽअव ऽआदित्यान्याचिषामहे ।
सुमृळीकाँ ऽअभिष्टये ॥१॥
त्यान् । नु । क्षत्रियान् । अवः । आदित्यान् । याचिषामहे ॥
सुऽमृळीकान् । अभिष्टये ॥१॥

मित्रो नो ऽअत्यंहतिं वरुणः पर्षदर्यमा ।
आदित्यासो यथा विदुः ॥२॥
मित्रः । नः । अति । अंहतिम् । वरुणः । पर्षत् । अर्यमा ॥
आदित्यासः । यथा । विदुः ॥२॥

तेषां हि चित्रमुक्थ्यं१ वरूथमस्ति दाशुषे ।
आदित्यानामरंकृते ॥३॥
तेषाम् । हि । चित्रम् । उक्थ्यम् । वरूथम् । अस्ति । दाशुषे ॥
आदित्यानाम् । अरम्ऽकृते ॥३॥

महिं वो महतामवो वरुण मित्रार्यमन् ।
अवांस्या वृणीमहे ॥४॥
महि । वः । महताम् । अवः । वरुण । मित्र । अर्यमन् ॥
अवांसि । आ । वृणीमहे ॥४॥

जीवान्नो ऽअभि धेतनादित्यासः पुरा हथात् ।
कद्ध स्थ हवनश्रुतः ॥५॥ (५१)

जीवान् । नः । अभि । धेतन । आदित्यासः । पुरा । हथात् ॥
कत् । ह । स्थ । हवन॰श्रुतः ॥५॥

**यद्वः श्रान्ताय सुन्वते वरूथमस्ति यच्छर्दिः ।**
**तेना नो ऽअधि वोचत ॥६॥**
यत् । वः । श्रान्ताय । सुन्वते । वरूथम् । अस्ति । यत् । छर्दिः ॥
तेन । नः । अधि । वोचत ॥६॥

**अस्ति देवा ऽअंहोरुर्वस्ति रत्नमनागसः ।**
**आदित्या ऽअद्भुतैनसः ॥७॥**
अस्ति । देवाः । अंहोः । उरु । अस्ति । रत्नम् । अनागसः ॥
आदित्याः । अद्भुत॰एनसः ॥७॥

**मा नः सेतुः सिषेदयं महे वृणक्तु नस्परि ।**
**इन्द्र ऽइद्धि श्रुतो वशी ॥८॥**
मा । नः । सेतुः । सिसेत् । अयम् । महे । वृणक्तु । नः । परि ॥
इन्द्रः । इत् । हि । श्रुतः । वशी ॥८॥

**मा नो मृचा रिपूणां वृजिनानामविष्यवः ।**
**देवा ऽअभि प्र मृक्षत ॥९॥**
मा । नः । मृचा । रिपूणाम् । वृजिनानाम् । अविष्यवः ॥
देवाः । अभि । प्र । मृक्षत ॥९॥

**उत त्वामदिते मह्यहं देव्युप ब्रुवे ।**
**सुमृळीकामभिष्टये ॥१०॥ (५२)**

उत । त्वाम् । अदिते । महि । अहम् । देवि । उप । ब्रुवे ॥
सु०मृळीकाम् । अभिष्टये ॥१०॥

**पर्षि दीने गभीर ऽआँ ऽउग्रपुत्रे जिघांसतः ।**
**माकिस्तोकस्य नो रिषत् ॥११॥**
पर्षि । दीने । गभीरे । आ । उग्र०पुत्रे । जिघांसतः ॥
माकिः । तोकस्य । नः । रिषत् ॥११॥

**अनेहो न ऽउरुव्रज ऽउरूचि वि प्रसर्त्तवे ।**
**कृधि तोकाय जीवसे ॥१२॥**
अनेहः । नः । उरु०व्रजे । उरूचि । वि । प्र०सर्त्तवे ॥
कृधि । तोकाय । जीवसे ॥१२॥

**ये मूर्द्धानः क्षितीनामदब्धासः स्वयशसः ।**
**व्रता रक्षन्ते ऽअद्रुहः ॥१३॥**
ये । मूर्द्धानः । क्षितीनाम् । अदब्धासः । स्व०यशसः ॥
व्रता । रक्षन्ते । अद्रुहः ॥१३॥

**ते न ऽआस्नो वृकाणामादित्यासो मुमोचत ।**
**स्तेनं बद्धमिवादिते ॥१४॥**
ते । नः । आस्नः । वृकाणाम् । आदित्यासः । मुमोचत ॥
स्तेनम् । बद्धम्ऽइव । अदिते ॥१४॥

**अपो षु ण ऽइयं शरुरादित्या ऽअप दुर्मतिः ।**
**अस्मदेत्वजघ्नुषी ॥१५॥ (५३)**

अपो इति । सु । नः । इयम् । शरुः । आदित्याः । अप । दुःऽमतिः ॥
अस्मत् । एतु । अजघ्नुषी ॥१५॥

**शश्वद्धि वः सुदानव ऽआदित्या ऽऊतिभिर्वयम् ।**
**पुरा नूनं बुभुज्महे ॥१६॥**
शश्वत् । हि । वः । सुऽदानवः । आदित्याः । ऊतिऽभिः । वयम् ॥
पुरा । नूनम् । बुभुज्महे ॥१६॥

**शश्वन्तं हि प्रचेतसः प्रतियन्तं चिदेनसः ।**
**देवाः कृणुथ जीवसे ॥१७॥**
शश्वन्तम् । हि । प्रऽचेतसः । प्रतिऽयन्तम् । चित् । एनसः ॥
देवाः । कृणुथ । जीवसे ॥१७॥

**तत्सु नो नव्यं सन्यस ऽआदित्या यन्मुमोचति ।**
**बन्धाद्बद्धमिवादिते ॥१८॥**
तत् । सु । नः । नव्यम् । सन्यसे । आदित्याः । यत् । मुमोचति ॥
बन्धात् । बद्धम्ऽइव । अदिते ॥१८॥

**नास्माकमस्ति तत्तर ऽआदित्यासो ऽअतिष्कदे ।**
**यूयमस्मभ्यं मृळत ॥१९॥**
न । अस्माकम् । अस्ति । तत् । तरः । आदित्यासः । अतिऽस्कदे ॥
यूयम् । अस्मभ्यम् । मृळत ॥१९॥

**मा नो हेतिर्विवस्वत ऽआदित्याः कृत्रिमा शरुः ।**
**पुरा नु जरसो वधीत् ॥२०॥**

मा । नः । हेतिः । विवस्वतः । आदित्याः । कृत्रिमा । शरुः ॥
पुरा । नु । जरसः । वधीत् ॥२०॥

**वि षु द्वेषो व्यंहतिमादित्यासो वि संहितम् ।**
**विष्वग्वि वृहता रपः ॥२१॥ (५४)** [ १३६ ]
वि । सु । द्वेषः । वि । अंहतिम् । आदित्यासः । वि । सम्ऽहितम् ॥
विष्वक् । वि । वृहत । रपः ॥२१॥

॥ इति षष्ठाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

# चतुर्थाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां षष्ठाष्टके चतुर्थोऽध्यायः ॥

( चतुर्थाध्याये वर्गाः ५४, सूक्तानि २२, ऋचः २६८ )

# ॥ षष्ठाष्टके पञ्चमोऽध्यायः॥

**अथ पञ्चमोऽध्यायः॥५॥ वर्गाः १-३८ ]** **[ अष्टममण्डले सूक्तानि ६८-८१ ]**

## ( ६८ )

१९ प्रियमेध आङ्गिरसः । इन्द्रः, १४-१९ ऋक्षाश्वमेधौ । गायत्री, अनुष्टुम्मुखः प्रगाथः = (अनुष्टुप् + गायत्र्यौ), १, ४, ७, १० अनुष्टुप्, १६ शंकुमती ।

**आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि ।**
**तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ॥१॥**
आ । त्वा । रथम् । यथा । ऊतये । सुम्नाय । वर्त्तयामसि ॥
तुवि०कूर्मिम् । ऋति०सहम् । इन्द्र । शविष्ठ । सत्०पते ॥१॥

**तुविशुष्म तुविक्रतो शचीवो विश्वया मते ।**
**आ पप्राथ महित्वना ॥२॥**
तुवि०शुष्म । तुविक्रतो इति तुवि०क्रतो । शची०वः । विश्वया । मते ॥
आ । पप्राथ । महि०त्वना ॥२॥

**यस्य ते महिना महः परि ज्मायन्तमीयतुः ।**
**हस्ता वज्रं हिरण्ययम् ॥३॥**
यस्य । ते । महिना । महः । परि । ज्मायन्तम् । ईयतुः ॥
हस्ता । वज्रम् । हिरण्ययम् ॥३॥

**विश्वानरस्य वस्पतिमनानतस्य शवसः ।**
**एवैश्च चर्षणीनामूती हुवे रथानाम् ॥४॥**
विश्वानरस्य । वः । पतिम् । अनानतस्य । शवसः ॥
एवैः । च । चर्षणीनाम् । ऊती । हुवे । रथानाम् ॥४॥

अभिष्टये सदावृधं स्वर्मीळ्हेषु यं नरः ।
नाना हवन्त ऽऊतये ॥५॥ (१)
अभिष्टये । सदा०वृधम् । स्वः२मीळ्हेषु । यम् । नरः ॥
नाना । हवन्ते । ऊतये ॥५॥

परोमात्रमृचीषमिन्द्रमुग्रं सुराधसम् ।
ईशानं चिद्वसूनाम् ॥६॥
परः२मात्रम् । ऋचीषमम् । इन्द्रम् । उग्रम् । सु०राधसम् ॥
ईशानम् । चित् । वसूनाम् ॥६॥

तंतमिद्राधसे मह ऽइन्द्रं चोदामि पीतये ।
यः पूर्व्यामनुष्टुतिमीशे कृष्टीनां नृतुः ॥७॥
तम्०तम् । इत् । राधसे । महे । इन्द्रम् । चोदामि । पीतये ॥
यः । पूर्व्याम् । अनु०स्तुतिम् । ईशे । कृष्टीनाम् । नृतुः ॥७॥

न यस्य ते शवसान सख्यमानंश मर्त्यः ।
नकिः शवांसि ते नशत् ॥८॥
न । यस्य । ते । शवसान । सख्यम् । आनंश । मर्त्यः ॥
नकिः । शवांसि । ते । नशत् ॥८॥

त्वोतासस्त्वा युजाप्सु सूर्ये महद्धनम् ।
जयेम पृत्सु वज्रिवः ॥९॥
त्वा०ऊतासः । त्वा । युजा । अप्०सु । सूर्ये । महत् । धनम् ॥
जयेम । पृत्०सु । वज्रि०वः ॥९॥

तं त्वा यज्ञेभिरीमहे तं गीर्भिर्गिर्वणस्तम ।
इन्द्र यथा चिदाविथ वाजेषु पुरुमाय्यम् ॥१०॥ (२)
तम् । त्वा । यज्ञेभिः । ईमहे । तम् । गीःऽभिः । गिर्वणःऽतम ॥
इन्द्र । यथा । चित् । आविथ । वाजेषु । पुरुऽमाय्यम् ॥१०॥

यस्य ते स्वादु सख्यं स्वाद्वी प्रणीतिरद्रिवः ।
यज्ञो वितन्तसाय्यः ॥११॥
यस्य । ते । स्वादु । सख्यम् । स्वाद्वी । प्रऽनीतिः । अद्रिऽवः ॥
यज्ञः । वितन्तसाय्यः ॥११॥

उरु णस्तन्वे३ तन ऽउरु क्षयाय नस्कृधि ।
उरु णो यन्धि जीवसे ॥१२॥
उरु । नः । तन्वे । तने । उरु । क्षयाय । नः । कृधि ॥
उरु । नः । यन्धि । जीवसे ॥१२॥

उरुं नृभ्य ऽउरुं गव ऽउरुं रथाय पन्थाम् ।
देववीतिं मनामहे ॥१३॥
उरुम् । नृऽभ्यः । उरुम् । गवे । उरुम् । रथाय । पन्थाम् ॥
देवऽवीतिम् । मनामहे ॥१३॥

उप मा षड् द्वाद्वा नरः सोमस्य हर्ष्या ।
तिष्ठन्ति स्वादुरातयः ॥१४॥
उप । मा । षट् । द्वाऽद्वा । नरः । सोमस्य । हर्ष्या ॥
तिष्ठन्ति । स्वादुऽरातयः ॥१४॥

**ऋज्राविन्द्रोत ऽआ द॑दे हरी ऽऋक्षस्य सूनवि॑ ।**

**आश्वमेधस्य रोहि॑ता॥१५॥ ( ३ )**

ऋज्रौ । इन्द्रोते । आ । द॒दे । हरी इति॑ । ऋक्षस्य । सूनवि॑ ॥

आश्व०मेधस्य॑ । रोहि॑ता ॥१५॥

**सुरथाँ॑ ऽआतिथिग्वे स्वभीशूँ॑रार्क्षे ।**

**आश्वमेधे सुपेश॑सः ॥१६॥**

सु०रथा॑न् । आतिथि०ग्वे । सु०अभीशून् । आर्क्षे ॥

आश्व०मेधे । सु०पेश॑सः ॥१६॥

**षळश्वाँ॑ ऽआतिथिग्व ऽइन्द्रोते वधूमतः ।**

**सचा॑ पूतक्र॑तौ सनम् ॥१७॥**

षट् । अश्वा॑न् । आतिथि०ग्वे । इन्द्रोते । वधू०मतः ॥

सचा॑ । पूत०क्र॑तौ । सनम् ॥१७॥

**ऐषु चेतद्वृषण्वत्यन्तर्ऋज्रेष्वरु॑षी ।**

**स्वभीशुः कशा॑वती ॥१८॥**

आ । एषु । चेतत् । वृषण्०वती । अन्तः । ऋज्रेषु । अरु॑षी ॥

सु०अभीशुः । कशा॑०वती ॥१८॥

**न युष्मे वा॑जबन्धवो निनित्सुश्चन मर्त्यः॑ ।**

**अवद्यमधि॑ दीधरत् ॥१९॥ ( ४ )** [ १५५ ]

न । युष्मे इति॑ । वाज०बन्धवः । निनित्सुः । चन । मर्त्यः॑ ॥

अवद्यम् । अधि॑ । दीधरत् ॥१९॥

# ( ६९ )

१८ प्रियमेध आङ्गिरसः । इन्द्रः, ११ (अर्द्धर्चस्य) विश्वेदेवाः, ११ (उत्तरार्द्धस्य) १२ वरुणः । अनुष्टुप्, २ उष्णिक्, ४-६ गायत्री, ११, १६ पङ्क्तिः, १७-१८ बृहती ।

प्रप्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे ।
धिया वो मेधसातये पुरंध्या विवासति ॥१॥
प्र०प्र । वः । त्रि०स्तुभम् । इषम् । मन्दत्०वीराय । इन्दवे ॥
धिया । वः । मेध०सातये । पुरम्०ध्या । आ । विवासति ॥१॥

नदं व ऽओदतीनां नदं योयुवतीनाम् ।
पतिं वो ऽअघ्न्यानां धेनूनामिषुध्यसि ॥२॥
नदम् । वः । ओदतीनाम् । नदम् । योयुवतीनाम् ॥
पतिम् । वः । अघ्न्यानाम् । धेनूनाम् । इषुध्यसि ॥२॥

ता ऽअस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।
जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥३॥
ताः । अस्य । सूद०दोहसः । सोमम् । श्रीणन्ति । पृश्नयः ॥
जन्मन् । देवानाम् । विशः । त्रिषु । आ । रोचने । दिवः ॥३॥

अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
सूनुं सत्यस्य सत्पतिम् ॥४॥
अभि । प्र । गो०पतिम् । गिरा । इन्द्रम् । अर्च । यथा । विदे ॥
सूनुम् । सत्यस्य । सत्०पतिम् ॥४॥

आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।
यत्राभि संनवामहे ॥५॥ (५)

आ । हर॑यः । स॒सृ॒ज्रि॒रे । अरु॑षीः । अधि॑ । ब॒र्हिषि॑ ॥
यत्र॑ । अ॒भि । स॒म्॰नवा॑महे ॥५॥

**इन्द्रा॑य॒ गाव॑ ऽआ॒शिर॑ं दुदु॒ह्रे व॒ज्रिणे॒ मधु॑ ।**
**यत्सी॑मुपह्व॒रे वि॒दत् ॥६॥**
इन्द्रा॑य । गाव॑ः । आ॒॰शिर॑म् । दु॒दु॒ह्रे । व॒ज्रिणे॑ । मधु॑ ॥
यत् । सी॒म् । उ॒प॒॰ह्व॒रे । वि॒दत् ॥६॥

**उद्यद्ब्र॒ध्नस्य॑ वि॒ष्टप॑ं गृ॒हमिन्द्र॑श्च॒ गन्व॑हि ।**
**मध्व॑ः पी॒त्वा स॑चेवहि॒ त्रिः स॒प्त सख्यु॑ः प॒दे ॥७॥**
उत् । यत् । ब्र॒ध्नस्य॑ । वि॒ष्टप॑म् । गृ॒हम् । इन्द्र॑ः । च॒ । गन्व॑हि ॥
मध्व॑ः । पी॒त्वा । स॒चे॒व॒हि॒ । त्रिः । स॒प्त । सख्यु॑ः । प॒दे ॥७॥

**अर्च॑त॒ प्रार्च॑त॒ प्रिय॑मेधासो॒ ऽअर्च॑त ।**
**अर्च॑न्तु पु॒त्रका ऽउ॒त पुर॑ं न धृ॒ष्ण्व॑र्चत ॥८॥**
अर्च॑त । प्र । अ॒र्च॒त॒ । प्रिय॑॰मेधासः । अर्च॑त ॥
अर्च॑न्तु । पु॒त्रकाः । उ॒त । पुर॑म् । न । धृ॒ष्णु । अ॒र्च॒त॒ ॥८॥

**अव॑ स्वराति॒ गर्ग॑रो गो॒धा परि॑ सनिष्वणत् ।**
**पिङ्गा॒ परि॑ चनिष्कद॒दिन्द्रा॑य ब्र॒ह्मोद्य॑तम् ॥९॥**
अव॑ । स्व॒रा॒ति॒ । गर्ग॑रः । गो॒धा । परि॑ । स॒नि॒स्व॒न॒त् ॥
पिङ्गा॑ । परि॑ । च॒नि॒स्क॒द॒त् । इन्द्रा॑य । ब्रह्म॑ । उत्॰य॑तम् ॥९॥

**आ यत्पत॑न्त्ये॒न्य॑ः सु॒दुघा॒ ऽअन॑पस्फुरः ।**
**अ॒प॒स्फुर॑ं गृभायत॒ सोम॒मिन्द्रा॑य॒ पात॑वे ॥१०॥ ( ६ )**

आ । यत् । पर्तन्ति । एन्यः । सुऽदुघाः । अनपऽस्फुरः ॥
अपऽस्फुरम् । गृभायत । सोमम् । इन्द्राय । पातवे ॥१०॥

**अपादिन्द्रो ऽअपादग्निर्विश्वे देवा ऽअमत्सत ।**
**वरुण ऽइदिह क्षयत्तमापो ऽअभ्यनूषत वत्सं संशिश्वरीरिव ॥११॥**
अपात् । इन्द्रः । अपात् । अग्निः । विश्वे । देवाः ।
अमत्सत ॥ वरुणः । इत् । इह । क्षयत् । तम् ।
आपः । अभि । अनूषत । वत्सम् । संशिश्वरीःऽइव ॥११॥

**सुदेवो ऽअसि वरुण यस्य ते सप्त सिन्धवः ।**
**अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥१२॥**
सुऽदेवः । असि । वरुण । यस्य । ते । सप्त । सिन्धवः ॥
अनुऽक्षरन्ति । काकुदम् । सूर्म्यम् । सुषिराम्ऽइव ॥१२॥

**यो व्यतीँरफाणयत्सुयुक्ताँ ऽउप दाशुषे ।**
**तक्वो नेता तदिद्वपुरुपमा यो ऽअमुच्यत ॥१३॥**
यः । व्यतीन् । अफाणयत् । सुऽयुक्तान् । उप । दाशुषे ॥
तक्वः । नेता । तत् । इत् । वपुः । उपऽमा । यः । अमुच्यत ॥१३॥

**अतीदु शक्र ऽओहत ऽइन्द्रो विश्वा ऽअति द्विषः ।**
**भिनत्कनीन ऽओदनं पच्यमानं परो गिरा ॥१४॥**
अति । इत् । ऊँ इति । शक्रः । ओहते । इन्द्रः ।
विश्वाः । अति । द्विषः ॥ भिनत् । कनीनः ।
ओदनम् । पच्यमानम् । परः । गिरा ॥१४॥

अर्भको न कुमारकोऽधि तिष्ठन्नवं रथम् ।
स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम् ॥१५॥
अर्भकः । न । कुमारकः । अधि । तिष्ठत् । नवम् । रथम् ॥
सः । पक्षत् । महिषम् । मृगम् । पित्रे । मात्रे । विभु०क्रतुम् ॥१५॥

आ तू सुशिप्र दम्पते रथं तिष्ठा हिरण्ययम् ।
अध द्युक्षं सचेवहि सहस्रपादमरुषं स्वस्तिगामनेहसम् ॥१६॥
आ । तु । सु०शिप्र । दम्०पते । रथम् । तिष्ठ । हिरण्ययम् ॥
अध । द्युक्षम् । सचेवहि । सहस्र०पादम् । अरुषम् । स्वस्ति०गाम् । अनेहसम् ॥१६॥

तं घेमित्था नमस्विन उप स्वराजमासते ।
अर्थं चिदस्य सुधितं यदेतव आवर्त्तयन्ति दावने ॥१७॥
तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्व०राजम् । आसते ॥
अर्थम् । चित् । अस्य । सु०धितम् । यत् । एतवे । आ०वर्त्तयन्ति । दावने ॥१७॥

अनु प्रत्नस्यौकसः प्रियमेधास एषाम् ।
पूर्वामनु प्रयतिं वृक्तबर्हिषो हितप्रयस आशत ॥१८॥ (७) [ ९७३ ]
अनु । प्रत्नस्य । ओकसः । प्रिय०मेधासः । एषाम् ॥
पूर्वाम् । अनु । प्र०यतिम् । वृक्त०बर्हिषः । हित०प्रयसः । आशत ॥१८॥

## ( ७० ) [ अथाष्टमोऽनुवाकः ॥८॥ सूक्तानि ७०-८०

१५ पुरुहन्मा आङ्गिरसः । इन्द्रः । बृहती, १-६ प्रगाथः = ( विषमा बृहती, समा सतोबृहती), १२ शंकुमती, १३ उष्णिक्, १४ अनुष्टुप्, १५ पुरउष्णिक् ।

यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥१॥

यः । राजा । चर्षणीनाम् । याता । रथेभिः ।
अध्रि०गुः ॥ विश्वासाम् । तरुता । पृतनानाम् ।
ज्येष्ठः । यः । वृत्र०हा । गृणे ॥१॥

**इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्त्तरि ।**
**हस्ताय वज्रः प्रति धायि दर्शतो महो दिवे न सूर्यः ॥२॥**
इन्द्रम् । तम् । शुम्भ । पुरु०हन्मन् । अवसे । यस्य ।
द्विता । वि०धर्त्तरि ॥ हस्ताय । वज्रः । प्रति ।
धायि । दर्शतः । महः । दिवे । न । सूर्यः ॥२॥

**नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् ।**
**इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टं धृष्ण्वोजसम् ॥३॥**
नकिः । तम् । कर्मणा । नशत् । यः । चकार ।
सदा०वृधम् ॥ इन्द्रम् । न । यज्ञैः । विश्व०गूर्त्तम् ।
ऋभ्वसम् । अधृष्टम् । धृष्णु०ओजसम् ॥३॥

**अषाळ्हमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।**
**सं धेनवो जायमाने ऽअनोनवुर्द्यावः क्षामो ऽअनोनवुः ॥४॥**
अषाळ्हम् । उग्रम् । पृतनासु । ससहिम् । यस्मिन् ।
महीः । उरु०ज्रयः ॥ सम् । धेनवः । जायमाने ।
अनोनवुः । द्यावः । क्षामः । अनोनवुः ॥४॥

**यद् द्याव ऽइन्द्र ते शतं शतं भूमीरुत स्युः ।**
**न त्वा वज्रिन्त्सहस्रं सूर्या ऽअनु न जातमष्ट रोदसी ॥५॥ (८)**
यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः ।
उत । स्युरिति स्युः ॥ न । त्वा । वज्रिन् । सहस्रम् ।
सूर्याः । अनु । न । जातम् । अष्ट । रोदसी इति ॥५॥

आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।
अस्माँ ऽअव मघवन्गोमति व्रजे वज्रिञ्चित्राभिरूतिभिः ॥६॥
आ । पप्राथ । महिना । वृष्ण्या । वृषन् । विश्वा ।
शविष्ठ । शवसा ॥ अस्मान् । अव । मघ०वन् ।
गो०मति । व्रजे । वज्रिन् । चित्राभिः । ऊति०भिः ॥६॥

न सीमदेव ऽआपदिषं दीर्घायो मर्त्यः ।
एतग्वा चिद्य ऽएतशा युयोजते हरी ऽइन्द्रो युयोजते ॥७॥
न । सीम् । अदेवः । आपत् । इषम् । दीर्घायो इति
दीर्घ०आयो । मर्त्यः ॥ एत०ग्वा । चित् । यः ।
एतशा । युयोजते । हरी इति । इन्द्रः । युयोजते ॥७॥

तं वो महो महाय्यमिन्द्रं दानाय सक्षणिम् ।
यो गाधेषु य ऽआरणेषु हव्यो वाजेष्वस्ति हव्यः ॥८॥
तम् । वः । महः । महाय्यम् । इन्द्रम् । दानाय । सक्षणिम् ॥
यः । गाधेषु । यः । आ०अरणेषु । हव्यः । वाजेषु । अस्ति । हव्यः ॥८॥

उदू षु णो वसो महे मृशस्व शूर राधसे ।
उदू षु मह्यै मघवन्मघत्तय ऽउदिन्द्र श्रवसे महे ॥९॥
उत् । ऊँ इति । सु । नः । वसो इति । महे ।
मृशस्व । शूर । राधसे ॥ उत् । ऊँ इति । सु । मह्यै ।
मघ०वन् । मघत्तये । उत् । इन्द्र । श्रवसे । महे ॥९॥

त्वं न ऽइन्द्र ऽऋतयुस्त्वानिदो नि तृम्पसि ।
मध्ये वसिष्व तुविनृम्णोर्वोर्नि दासं शिश्नथो हथैः ॥१०॥ (९)

त्वम् । नः । इन्द्र । ऋत॰युः । त्वा॰निदः ।
नि । तृम्पसि ॥ मध्ये । वसिष्व । तुवि॰नृम्ण ।
ऊर्वोः । नि । दासम् । शिश्नथः । हथैः ॥१०॥

**अन्यव्रतममानुषमयज्वानमदेवयुम् ।**
**अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वतः ॥११॥**
अन्य॰व्रतम् । अमानुषम् । अयज्वानम् ।
अदेव॰युम् ॥ अव । स्वः । सखा । दुधुवीत ।
पर्वतः । सु॰घ्नाय । दस्युम् । पर्वतः ॥११॥

**त्वं न ऽइन्द्रासां हस्ते शविष्ठ दावने ।**
**धानानां न सं गृभायास्मयुर्द्विः सं गृभायास्मयुः ॥१२॥**
त्वम् । नः । इन्द्र । आसाम् । हस्ते । शविष्ठ । दावने ॥
धानानाम् । न । सम् । गृभाय । अस्म॰युः । द्विः । सम् । गृभाय । अस्म॰युः ॥१२॥

**सखायः क्रतुमिच्छत कथा राधाम शरस्य ।**
**उपस्तुतिं भोजः सूरियो ऽअह्रयः ॥१३॥**
सखायः । क्रतुम् । इच्छत । कथा । राधाम । शरस्य ॥
उप॰स्तुतिम् । भोजः । सूरिः । यः । अह्रयः ॥१३॥

**भूरिभिः समह ऽऋषिभिर्बर्हिष्मद्भिः स्तविष्यसे ।**
**यदित्थमेकमेकमिच्छर वत्सान्पराददः ॥१४॥**
भूरि॰भिः । समह । ऋषि॰भिः । बर्हिष्मत्॰भिः । स्तविष्यसे ॥
यत् । इत्थम् । एकम्॰एकम् । इत् । शर । वत्सान् । परा॰ददः ॥१४॥

कर्णगृह्या मघवा शौरदेव्यो वत्सं नस्त्रिभ्य ऽआनयत् ।

अजां सूरिर्न धातवे ॥१५॥ (१०) [ ९८८ ]

कर्ण०गृह्य । मघ०वा । शौर०देव्यः । वत्सम् । नः । त्रि०भ्यः । आ । अनयत् ॥

अजाम् । सूरिः । न । धातवे ॥१५॥

# ( ७१ )

१५ सुदीति-पुरुमीळ्हावाङ्गिरसौ, तयोर्वान्यतरः । अग्निः ।
गायत्री, १०-१५ प्रगाथः = (विषमा बृहती, समा सतोबृहती)

त्वं नो ऽअग्ने महोभिः पाहि विश्वस्या ऽअरातेः ।

उत द्विषो मर्त्यस्य ॥१॥

त्वम् । नः । अग्ने । महःऽभिः । पाहि । विश्वस्याः । अरातेः ॥

उत । द्विषः । मर्त्यस्य ॥१॥

नहि मन्युः पौरुषेय ऽईशे हि वः प्रियजात ।

त्वमिदसि क्षपावान् ॥२॥

नहि । मन्युः । पौरुषेयः । ईशे । हि । वः । प्रियऽजात ॥

त्वम् । इत् । असि । क्षपा०वान् ॥२॥

स नो विश्वेभिर्देवेभिरूर्जो नपाद्भद्रशोचे ।

रयिं देहि विश्ववारम् ॥३॥

सः । नः । विश्वेभिः । देवेभिः । ऊर्जः । नपात् । भद्र०शोचे ॥

रयिम् । देहि । विश्व०वारम् ॥३॥

न तमग्ने ऽअरातयो मर्तं युवन्त रायः ।

यं त्रायसे दाश्वांसम् ॥४॥

न । तम् । अग्ने । अरातयः । मर्तम् । युवन्त । रायः ॥
यम् । त्रायसे । दाश्वांसम् ॥४॥

**यं त्वं विप्र मेधसातावग्ने हिनोषि धनाय ।**
**स तवोती गोषु गन्ता ॥५॥ (११)**
यम् । त्वम् । विप्र । मेध०सातौ । अग्ने । हिनोषि । धनाय ॥
सः । तव । ऊती । गोषु । गन्ता ॥५॥

**त्वं रयिं पुरुवीरमग्ने दाशुषे मर्त्ताय ।**
**प्र णो नय वस्यो ऽअच्छ ॥६॥**
त्वम् । रयिम् । पुरु०वीरम् । अग्ने । दाशुषे । मर्त्ताय ॥
प्र । नः । नय । वस्यः । अच्छ ॥६॥

**उरुष्या णो मा परा दा ऽअघायते जातवेदः ।**
**दुराध्येइ मर्त्ताय ॥७॥**
उरुष्य । नः । मा । परा । दाः । अघ०यते । जत०वेदः ॥
दुः२आध्ये । मर्त्ताय ॥७॥

**अग्ने माकिष्टे देवस्य रातिमदेवो युयोत ।**
**त्वमीशिषे वसूनाम् ॥८॥**
अग्ने । माकिः । ते । देवस्य । रातिम् । अदेवः । युयोत ॥
त्वम् । ईशिषे । वसूनाम् ॥८॥

**स नो वस्व ऽउप मास्यूर्जो नपान्माहिनस्य ।**
**सखे वसो जरितृभ्यः ॥९॥**

सः । नः । वस्वः । उप । मासि । ऊर्जः । नपात् । माहिनस्य ॥
सखे । वसो इति । जरितृऽभ्यः ॥९॥

अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥१०॥ (१२)
अच्छ । नः । शीरऽशोचिषम् । गिरः । यन्तु । दर्शतम् ॥
अच्छ । यज्ञासः । नमसा । पुरुऽवसुम् । पुरुऽप्रशस्तम् । ऊतये ॥१०॥

अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम् ।
द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥११॥
अग्निम् । सूनुम् । सहसः । जातऽवेदसम् । दानाय । वार्याणाम् ॥
द्विता । यः । भूत् । अमृतः । मर्त्येषु । आ । होता । मन्द्रऽतमः । विशि ॥११॥

अग्निं वो देवयज्ययाग्निं प्रयत्यध्वरे ।
अग्निं धीषु प्रथममग्निमर्वत्यग्निं क्षैत्राय साधसे ॥१२॥
अग्निम् । वः । देवऽयज्यया । अग्निम् । प्रऽयति । अध्वरे ॥
अग्निम् । धीषु । प्रथमम् । अग्निम् । अर्वति । अग्निम् । क्षैत्राय । साधसे ॥१२॥

अग्निरिषां सख्ये ददातु न ऽईशे यो वार्याणाम् ।
अग्निं तोके तनये शश्वदीमहे वसुं सन्तं तनूपाम् ॥१३॥
अग्निः । इषाम् । सख्ये । ददातु । नः । ईशे ।
यः । वार्याणाम् ॥ अग्निम् । तोके । तनये ।
शश्वत् । ईमहे । वसुम् । सन्तम् । तनूऽपाम् ॥१३॥

अग्निमीळिष्वावसे गाथाभिः शीरशोचिषम् ।
अग्निं राये पुरुमीळ्ह श्रुतं नरोऽग्निं सुदीतये छर्दिः ॥१४॥

अग्निम् । ईळिष्व । अवसे । गाथाभिः ।
शीर०शोचिषम् ॥ अग्निम् । राये । पुरु०मीळ्ह ।
श्रुतम् । नरः । अग्निम् । सु०दीतये । छर्दिः ॥१४॥

अग्निं द्वेषो योतवै नो गृणीमस्यग्निं शं योश्च दातवे ।
विश्वासु विक्ष्ववितेव हव्यो भुवद्वस्तुर्ऋषूणाम् ॥१५॥ (१३) [१००३]
अग्निम् । द्वेषः । योतवै । नः । गृणीमसि । अग्निम् ।
शम् । योः । च । दातवे ॥ विश्वासु । विक्षु ।
अविताऽइव । हव्यः । भुवत् । वस्तुः । ऋषूणाम् ॥१५॥

## (७२)

१८ हर्यतः प्रगाथः । अग्निः हवींषि वा । गायत्री ।

हविष्कृणुध्वमा गमदध्वर्युर्वनते पुनः ।
विद्वाँ ऽअस्य प्रशासनम् ॥१॥
हविः । कृणुध्वम् । आ । गमत् । अध्वर्युः । वनते । पुनरिति ॥
विद्वान् । अस्य । प्र०शासनम् ॥१॥

नि तिग्ममभ्यंशुं सीदद्धोता मनावधि ।
जुषाणो ऽअस्य सख्यम् ॥२॥
नि । तिग्मम् । अभि । अंशुम् । सीदत् । होता । मनौ । अधि ॥
जुषाणः । अस्य । सख्यम् ॥२॥

अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया ।
गृभ्णन्ति जिह्वया ससम् ॥३॥
अन्तः । इच्छन्ति । तम् । जने । रुद्रम् । परः । मनीषया ॥
गृभ्णन्ति । जिह्वया । ससम् ॥३॥

**जाम्यतीतपे धनुर्वयोधा ऽअरुहद्वनम् ।**
**दृषदं जिह्वयावधीत् ॥४॥**
जामि । अतीतपे । धनुः । वयः२धाः । अरुहत् । वनम् ॥
दृषदम् । जिह्वया । आ । अवधीत् ॥४॥

**चरन्वत्सो रुशन्निह निदातारं न विन्दते ।**
**वेति स्तोतव ऽअम्ब्यम् ॥५॥ (१४)**
चरन् । वत्सः । रुशन् । इह । नि०दातारम् । न । विन्दते ॥
वेति । स्तोतवे । अम्ब्यम् ॥५॥

**उतो न्वस्य यन्महदश्वावद्योजनं बृहद् ।**
**दामा रथस्य ददृशे ॥६॥**
उतो इति । नु । अस्य । यत् । महत् । अश्व०वत् । योजनम् । बृहत् ॥
दामा । रथस्य । ददृशे ॥६॥

**दुहन्ति सप्तैकामुप द्वा पञ्च सृजतः ।**
**तीर्थे सिन्धोरधि स्वरे ॥७॥**
दुहन्ति । सप्त । एकाम् । उप । द्वा । पञ्च । सृजतः ॥
तीर्थे । सिन्धोः । अधि । स्वरे ॥७॥

**आ दशभिर्विवस्वत ऽइन्द्रः कोशमचुच्यवीत् ।**
**खेदया त्रिवृता दिवः ॥८॥**
आ । दश०भिः । विवस्वतः । इन्द्रः । कोशम् । अचुच्यवीत् ॥
खेदया । त्रि०वृता । दिवः ॥८॥

परि त्रिधातुरध्वरं जूर्णिरेति नवीयसी ।
मध्वा होतारो ऽअञ्जते ॥९॥
परि । त्रि॰धातुः । अध्वरम् । जूर्णिः । एति । नवीयसी ॥
मध्वा । होतारः । अञ्जते ॥९॥

सिञ्चन्ति नमसावतमुच्चाचक्रं परिज्मानम् ।
नीचीनबारमक्षितम् ॥१०॥ (१५)
सिञ्चन्ति । नमसा । अवतम् । उच्चा॰चक्रम् । परि॰ज्मानम् ॥
नीचीन॰बारम् । अक्षितम् ॥१०॥

अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।
अवतस्य विसर्जने ॥११॥
अभि॰आरम् । इत् । अद्रयः । नि॰सिक्तम् । पुष्करे । मधु ॥
अवतस्य । वि॰सर्जने ॥११॥

गाव ऽउपावतावतं मही यज्ञस्य रप्सुदा ।
उभा कर्णा हिरण्यया ॥१२॥
गावः । उप । अवत । अवतम् । मही इति । यज्ञस्य । रप्सुदा ॥
उभा । कर्णा । हिरण्यया ॥१२॥

आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् ।
रसा दधीत वृषभम् ॥१३॥
आ । सुते । सिञ्चत । श्रियम् । रोदस्योः । अभि॰श्रियम् ॥
रसा । दधीत । वृषभम् ॥१३॥

ते जानत स्वमोक्यंं सं वत्सासो न मातृभिः ।
मिथो नसन्त जामिभिः ॥१४॥
ते । जानत । स्वम् । ओक्यम् । सम् । वत्सासः । न । मातृ०भिः ॥
मिथः । नसन्त । जामि०भिः ॥१४॥

उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि ।
इन्द्रे ऽअग्ना नमः स्वः ॥१५॥ (१६)
उप । स्रक्वेषु । बप्सतः । कृण्वते । धरुणम् । दिवि ॥
इन्द्रे । अग्ना । नमः । स्वरिति स्वः ॥१५॥

अधुक्षत्पिप्युषीमिषमूर्जं सप्तपदीमरिः ।
सूर्यस्य सप्त रश्मिभिः ॥१६॥
अधुक्षत् । पिप्युषीम् । इषम् । ऊर्जम् । सप्त०पदीम् । अरिः ॥
सूर्यस्य । सप्त । रश्मि०भिः ॥१६॥

सोमस्य मित्रावरुणोदिता सूर ऽआ ददे ।
तदातुरस्य भेषजम् ॥
सोमस्य । मित्रावरुणा । उत्०इता । सूरे । आ । ददे ॥
तत् । आतुरस्य । भेषजम् ॥१७॥

उतो न्वस्य यत्पदं हर्यतस्य निधान्यम् ।
परि द्यां जिह्वयातनत् ॥१८॥ (१७) [ १०२१ ]
उतो इति । नु । अस्य । यत् । पदम् । हर्यतस्य । नि०धान्यम् ॥
परि । द्याम् । जिह्वया । अतनत् ॥१८॥

# ( ७३ )

१८ गोपावन आत्रेयः सप्तवध्रिर्वा । अश्विनौ । गायत्री ।

**उदीराथामृतायते युञ्जाथामश्विना रथम् ।**

**अन्ति षद्भूतु वामवः ॥१॥**

उत् । ईराथाम् । ऋत॰यते । युञ्जाथाम् । अश्विना । रथम् ॥

अन्ति । सत् । भूतु । वाम् । अवः ॥१॥

**निमिषश्चिज्जवीयसा रथेना यातमश्विना ।**

**अन्ति षद्भूतु वामवः ॥२॥**

नि॰मिषः । चित् । जवीयसा । रथेन । आ । यातम् । अश्विना ॥

अन्ति । सत् । भूतु । वाम् । अवः ॥२॥

**उप स्तृणीतमत्रये हिमेन घर्ममश्विना ।**

**अन्ति षद्भूतु वामवः ॥३॥**

उप । स्तृणीतम् । अत्रये । हिमेन । घर्मम् । अश्विना ॥

अन्ति । सत् । भूतु । वाम् । अवः ॥३॥

**कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः ।**

**अन्ति षद्भूतु वामवः ॥४॥**

कुह । स्थः । कुह । जग्मथुः । कुह । श्येनाऽइव । पेतथुः ॥

अन्ति । सत् । भूतु । वाम् । अवः ॥४॥

**यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवम् ।**

**अन्ति षद्भूतु वामवः ॥५॥ ( १८ )**

यत् । अद्य । कर्हि । कर्हि । चित् । शुश्रूयातम् । इमम् । हवम् ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥५॥

**अश्विना यामहूतमा नेदिष्ठं याम्याप्यम् ।**
**अन्ति षद्भूतु वामवः ॥६।**
अश्विना । यामऽहूतमा । नेदिष्ठम् । यामि । आप्यम् ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥६॥

**अवन्तमत्रये गृहं कृणुतं युवमश्विना ।**
**अन्ति षद्भूतु वामवः ॥७॥**
अवन्तम् । अत्रये । गृहम् । कृणुतम् । युवम् । अश्विना ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥७॥

**वरेथे ऽअग्निमातपो वदते वल्ग्वत्रये ।**
**अन्ति षद्भूतु वामवः ॥८॥**
वरेथे । अग्निम् । आऽतपः । वदते । वल्गु । अत्रये ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥८॥

**प्र सप्तवध्रिराशसा धारामग्नेरशायत ।**
**अन्ति षद्भूतु वामवः ॥९॥**
प्र । सप्तऽवध्रिः । आऽशसा । धाराम् । अग्नेः । अशायत ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥९॥

**इहा गतं वृषण्वसू शृणुतं म ऽइमं हवम् ।**
**अन्ति षद्भूतु वामवः ॥१०॥ ( १९ )**

इह । आ । गतम् । वृषण्ऽवसू इति वृषण्ऽवसू । शृणुतम् । मे । इमम् । हवम् ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१०॥

**किमिदं वां पुराणवज्जरतोरिव शस्यते ।**
**अन्ति षद्भूतु वामवः ॥११॥**
किम् । इदम् । वाम् । पुराण्ऽवत् । जरतोःऽइव । शस्यते ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥११॥

**समानं वां सजात्यं समानो बन्धुरश्विना ।**
**अन्ति षद्भूतु वामवः ॥१२॥**
समानम् । वाम् । सऽजात्यम् । समानः । बन्धुः । अश्विना ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१२॥

**यो वां रजांस्यश्विना रथो वियाति रोदसी ।**
**अन्ति षद्भूतु वामवः ॥१३॥**
यः । वाम् । रजांसि । अश्विना । रथः । विऽयाति । रोदसी इति ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१३॥

**आ नो गव्येभिरश्व्यैः सहस्रैरुप गच्छतम् ।**
**अन्ति षद्भूतु वामवः ॥१४॥**
आ । नः । गव्येभिः । अश्व्यैः । सहस्रैः । उप । गच्छतम् ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१४॥

**मा नो गव्येभिरश्व्यैः सहस्रेभिरति ख्यतम् ।**
**अन्ति षद्भूतु वामवः ॥१३॥**

मा । नः । गव्येभिः । अश्व्यैः । सहस्रेभिः । अति । ख्यतम् ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१५॥

**अरुणप्सुरुषा ऽअभूदकर्ज्योतिर्ऋतावरी ।**
**अन्ति षद्भूतु वामवः ॥१६॥**
अरुण॰प्सुः । उषाः । अभूत् । अकः । ज्योतिः । ऋत॰वरी ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१६॥

**अश्विना सु विचाकशद्वृक्षं परशुमाँइव ।**
**अन्ति षद्भूतु वामवः ॥१७॥**
अश्विना । सु । वि॰चाकशत् । वृक्षम् । परशुमान्ऽइव ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१७॥

**पुरं न धृष्णवा रुज कृष्णया बाधितो विशा ।**
**अन्ति षद्भूतु वामवः ॥१८॥ (२०)** [ १०३९ ]
पुरम् । न । धृष्णो इति । आ । रुज । कृष्णया । बाधितः । विशा ॥
अन्ति । सत् । भूतु । वाम् । अवः ॥१८॥

# ( ७४ )

**१५ गोपवन आत्रेयः । अग्निः, १३-१५ आर्क्षः श्रुतर्वा । १-१२ अनुष्टुम्मुखः प्रगाथः = (अनुष्टुप् + गायत्र्यौ), १३-१५ अनुष्टुप् ।**

**विशोविशो वो ऽअतिथिं वाजयन्तः पुरुप्रियम् ।**
**अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥१॥**
विशःऽविशः । वः । अतिथिम् । वाज॰यन्तः । पुरु॰प्रियम् ॥
अग्निम् । वः । दुर्यम् । वचः । स्तुषे । शूषस्य । मन्म॰भिः ॥१॥

यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम् ।
प्रशंसन्ति प्रशस्तिभिः ॥२॥
यम् । जनासः । हविष्मन्तः । मित्रम् । न । सर्पिः२आसुतिम् ॥
प्र०शंसन्ति । प्रशस्ति०भिः ॥२॥

पन्यांसं जातवेदसं यो देवतात्युद्यता ।
हव्यान्यैरयद्दिवि ॥३॥
पन्यांसम् । जात०वेदसम् । यः । देव०ताति । उत्०यता ॥
हव्यानि । ऐरयत् । दिवि ॥३॥

आगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
यस्य श्रुतर्वा बृहन्नार्क्षो ऽअनीक ऽएधते ॥४॥
आ । अगन्म । वृत्रहन्०तमम् । ज्येष्ठम् । अग्निम् । आनवम् ॥
यस्य । श्रुतर्वा । बृहन् । आर्क्षः । अनीके । एधते ॥४॥

अमृतं जातवेदसं तिरस्तमांसि दर्शतम् ।
घृताहवनमीड्यम् ॥५॥ ( २१ )
अमृतम् । जात०वेदसम् । तिरः । तमांसि । दर्शतम् ॥
घृत०आहवनम् । ईड्यम् ॥५॥

सबाधो यं जना ऽइमेऽग्निं हव्येभिरीळते ।
जुह्वानासो यतस्रुचः ॥६॥
स०बाधः । यम् । जनाः । इमे । अग्निम् । हव्येभिः । ईळते ॥
जुह्वानासः । यत०स्रुचः ॥६॥

**इयं ते नव्यसी मतिरग्ने ऽअधाय्यस्मदा ।**

**मन्द्र सुजात सुक्रतोऽमूर दस्मातिथे ॥७॥**

इयम् । ते । नव्यसी । मतिः । अग्ने । अधायि । अस्मत् । आ ॥

मन्द्र । सु॰जात । सुक्रतो इति सु॰क्रतो । अमूर । दस्म । अतिथे ॥७॥

**सा ते ऽअग्ने शंतमा चनिष्ठा भवतु प्रिया ।**

**तया वर्द्धस्व सुष्टुतः ॥८॥**

सा । ते । अग्ने । शम्॰तमा । चनिष्ठा । भवतु । प्रिया ॥

तया । वर्द्धस्व । सु॰स्तुतः ॥८॥

**सा द्युम्नैर्द्युम्निनी बृहदुपोप श्रवसि श्रवः ।**

**दधीत वृत्रतूर्ये ॥९॥**

सा । द्युम्नैः । द्युम्निनी । बृहत् । उप॰उप । श्रवसि । श्रवः ॥

दधीत । वृत्र॰तूर्ये ॥९॥

**अश्वमिद्गां रथप्रां त्वेषमिन्द्रं न सत्पतिम् ।**

**यस्य श्रवांसि तूर्वथ पन्यंपन्यं च कृष्टयः ॥१०॥ ( २२ )**

अश्वम् । इत् । गाम् । रथ॰प्राम् । त्वेषम् । इन्द्रम् । न । सत्॰पतिम् ॥

यस्य । श्रवांसि । तूर्वथ । पन्यम्॰पन्यम् । च । कृष्टयः ॥१०॥

**यं त्वा गोपवनो गिरा चनिष्ठदग्ने ऽअङ्गिरः ।**

**स पावक श्रुधी हवम् ॥११॥**

यम् । त्वा । गोपवनः । गिरा । चनिष्ठत् । अग्ने । अङ्गिरः ॥

सः । पावक । श्रुधि । हवम् ॥११॥

यं त्वा जनास ऽईळते सबाधो वाजसातये ।
स बोधि वृत्रतूर्ये ॥१२॥
यम् । त्वा । जनासः । ईळते । स०बाधः । वाज०सातये ॥
सः । बोधि । वृत्र०तूर्ये ॥१२॥

अहं हुवान ऽआर्क्षे श्रुतर्वणि मदच्युति ।
शर्द्धांसीव स्तुकाविनां मृक्षा शीर्षा चतुर्णाम् ॥१३॥
अहम् । हुवानः । आर्क्षे । श्रुतर्वणि । मद०च्युति ॥
शर्द्धांसिऽइव । स्तुका०विनाम् । मृक्षा । शीर्षा । चतुर्णाम् ॥१३॥

मां चत्वार ऽआशवः शविष्ठस्य द्रवित्नवः ।
सुरथासो ऽअभि प्रयो वक्षन्वयो न तुग्र्यम् ॥१४॥
माम् । चत्वारः । आशवः । शविष्ठस्य । द्रवित्नवः ॥
सु०रथासः । अभि । प्रयः । वक्षन् । वयः । न । तुग्र्यम् ॥१४॥

सत्यमित्त्वा महेनदि परुष्ण्यव देदिशम् ।
नेमापो ऽअश्वदातरः शविष्ठादस्ति मर्त्यः ॥१५॥ (२३) [१०५४]
सत्यम् । इत् । त्वा । महे०नदि । परुष्णि । अव । देदिशम् ॥
न । ईम् । आपः । अश्व०दातरः । शविष्ठात् । अस्ति । मर्त्यः ॥१५॥

## (७५)

१६ विरूप आङ्गिरसः । अग्निः । गायत्री ।

युक्ष्वा हि देवहूतमाँ ऽअश्वाँ ऽअग्ने रथीरिव ।
नि होता पूर्व्यः सदः ॥१॥
युक्ष्व । हि । देव०हूतमान् । अश्वान् । अग्ने । रथीःऽइव ॥
नि । होता । पूर्व्यः । सदः ॥१॥

उत नो देव देवाँ ऽअच्छा वोचो विदुष्टरः ।
श्रद्विश्वा वार्या कृधि ॥२॥
उत । नः । देव । देवान् । अच्छ । वोचः । विदुःऽतरः ॥
श्रत् । विश्वा । वार्या । कृधि ॥२॥

त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत ।
ऋतावा यज्ञियो भुवः ॥३॥
त्वम् । ह । यत् । यविष्ठ्य । सहसः । सूनो इति । आऽहुत ॥
ऋतऽवा । यज्ञियः । भुवः ॥३॥

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः ।
मूर्द्धा कवी रयीणाम् ॥४॥
अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ॥
मूर्द्धा । कविः । रयीणाम् ॥४॥

तं नेमिमृभवो यथा नमस्व सहूतिभिः ।
नेदीयो यज्ञमङ्गिरः ॥५॥ ( २४ )
तम् । नेमिम् । ऋभवः । यथा । आ । नमस्व । सहूतिऽभिः ॥
नेदीयः । यज्ञम् । अङ्गिरः ॥५॥

तस्मै नूनमभिद्यवे वाचा विरूप नित्यया ।
वृष्णे चोदस्व सुष्टुतिम् ॥६॥
तस्मै । नूनम् । अभिऽद्यवे । वाचा । विऽरूप । नित्यया ॥
वृष्णे । चोदस्व । सुऽस्तुतिम् ॥६॥

कर्मु ष्विदस्य सेनयाग्नेरपाकचक्षसः ।
पणिं गोषु स्तरामहे ॥७॥
कम् । ऊँ इति । स्वित् । अस्य । सेनया । अग्नेः । अपाक०चक्षसः ॥
पणिम् । गोषु । स्तरामहे ॥७॥

मा नो देवानां विशः प्रस्नातीरिवोस्राः ।
कृशं न हासुरघ्न्याः ॥८॥
मा । नः । देवानाम् । विशः । प्रस्नातीःऽइव । उस्राः ॥
कृशम् । न । हासुः । अघ्न्याः ॥८॥

मा नः समस्य दूढ्यः परिद्वेषसो ऽअंहतिः ।
ऊर्मिर्न नावमा वधीत् ॥९॥
मा । नः । समस्य । दुःऽध्यः । परि०द्वेषसः । अंहतिः ॥
ऊर्मिः । न । नावम् । आ । वधीत् ॥९॥

नमस्ते ऽअग्न ऽओजसे गृणन्ति देव कृष्टयः ।
अमैरमित्रमर्दय ॥१०॥ ( २५ )
नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः ॥
अमैः । अमित्रम् । अर्दय ॥१०॥

कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् ।
उरुकृदुरु णस्कृधि ॥११॥
कुवित् । सु । नः । गो०इष्टये । अग्ने । सम्०वेषिषः । रयिम् ॥
उरु०कृत् । उरु । नः । कृधि ॥११॥

मा नो ऽअस्मिन्महाधने परा वर्ग्भारभृद्यथा ।
संवर्गं सं रयिं जय ॥१२॥
मा । नः । अस्मिन् । महा॰धने । परा । वर्क् । भार॰भृत् । यथा ॥
सम्॰वर्गम् । सम् । रयिम् । जय ॥१२॥

अन्यमस्मद्भिया ऽइयमग्ने सिषक्तु दुच्छुना ।
वर्द्धा नो ऽअमवच्छवः ॥१३॥
अन्यम् । अस्मत् । भिये । इयम् । अग्ने । सिसक्तु । दुच्छुना ॥
वर्द्ध । नः । अम॰वत् । शवः ॥१३॥

यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा ।
तं घेदग्निर्वृधावति ॥१४॥
यस्य । अजुषत् । नमस्विनः । शमीम् । अदुः॰मखस्य । वा ॥
तम् । घ । इत् । अग्निः । वृधा । अवति ॥१४॥

परस्या ऽअधि संवतोऽवराँ ऽअभ्या तर ।
यत्राहमस्मि ताँ ऽअव ॥१५॥
परस्याः । अधि । सम्॰वतः । अवरान् । अभि । आ । तर ॥
यत्र । अहम् । अस्मि । तान् । अव ॥१५॥

विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः ।
अधा ते सुम्नमीमहे ॥१६॥ (२६) [ १०७० ]
विद्म । हि । ते । पुरा । वयम् । अग्ने । पितुः । यथा । अवसः ॥
अध । ते । सुम्नम् । ईमहे ॥१६॥

# ( ७६ )

१२ कुरुसुतिः काण्वः । इन्द्रः । गायत्री ।

**इमं नु मायिनं हुव ऽइन्द्रमीशानमोजसा ।**
**मरुत्वन्तं न वृञ्जसे ॥१॥**

इमम् । नु । मायिनम् । हुवे । इन्द्रम् । ईशानम् । ओजसा ॥
मरुत्वन्तम् । न । वृञ्जसे ॥१॥

**अयमिन्द्रो मरुत्सखा वि वृत्रस्याभिनच्छिरः ।**
**वज्रेण शतपर्वणा ॥२॥**

अयम् । इन्द्रः । मरुत्ऽसखा । वि । वृत्रस्य । अभिनत् । शिरः ॥
वज्रेण । शतऽपर्वणा ॥२॥

**वावृधानो मरुत्सखेन्द्रो वि वृत्रमैरयत् ।**
**सृजन्त्समुद्रिया ऽअपः ॥३॥**

ववृधानः । मरुत्ऽसखा । इन्द्रः । वि । वृत्रम् । ऐरयत् ॥
सृजन् । समुद्रियाः । अपः ॥३॥

**अयं ह येन वा ऽइदं स्वर्मरुत्वता जितम् ।**
**इन्द्रेण सोमपीतये ॥४॥**

अयम् । ह । येन । वै । इदम् । स्वः । मरुत्वता । जितम् ॥
इन्द्रेण । सोमऽपीतये ॥४॥

**मरुत्वन्तमृजीषिणमोजस्वन्तं विरप्शिनम् ।**
**इन्द्रं गीर्भिर्हवामहे ॥५॥**

मरुत्वन्तम् । ऋजीषिणम् । ओजस्वन्तम् । वि०रप्शिनम् ॥
इन्द्रम् । गीः२भिः । हवामहे ॥५॥

**इन्द्रं प्रत्नेन मन्मना मरुत्वन्तं हवामहे ।**
**अस्य सोमस्य पीतये ॥६॥ ( २७ )**
इन्द्रम् । प्रत्नेन । मन्मना । मरुत्वन्तम् । हवामहे ॥
अस्य । सोमस्य । पीतये ॥६॥

**मरुत्वाँ ऽइन्द्र मीढ्वः पिबा सोमं शतक्रतो ।**
**अस्मिन्यज्ञे पुरुष्टुत ॥७॥**
मरुत्वान् । इन्द्र । मीढ्वः । पिब । सोमम् । शतक्रतो इति शत०क्रतो ॥
अस्मिन् । यज्ञे । पुरु०स्तुत ॥७॥

**तुभ्येदिन्द्र मरुत्वते सुताः सोमासो ऽअद्रिवः ।**
**हृदा हूयन्त ऽउक्थिनः ॥८॥**
तुभ्य । इत् । इन्द्र । मरुत्वते । सुताः । सोमासः । अद्रि०वः ॥
हृदा । हूयन्ते । उक्थिनः ॥८॥

**पिबेदिन्द्र मरुत्सखा सुतं सोमं दिविष्टिषु ।**
**वज्रं शिशान ऽओजसा ॥९॥**
पिब । इत् । इन्द्र । मरुत्०सखा । सुतम् । सोमम् । दिविष्टिषु ॥
वज्रम् । शिशानः । ओजसा ॥९॥

**उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे ऽअवेपयः ।**
**सोममिन्द्र चमू सुतम् ॥१०॥**

उत्ऽतिष्ठन् । ओजसा । सह । पीत्वी । शिप्रे इति । अवेपयः ॥
सोमम् । इन्द्र । चमू इति । सुतम् ॥१०॥

**अनु त्वा रोदसी उभे क्रक्षमाणमकृपेताम् ।**
**इन्द्र यद्दस्युहाभवः ॥११॥**
अनु । त्वा । रोदसी इति । उभे इति । क्रक्षमाणम् । अकृपेताम् ॥
इन्द्र । यत् । दस्युऽहा । अभवः ॥११॥

**वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम् ।**
**इन्द्रात्परि तन्वं ममे ॥१२॥ (२८)** [१०८२]
वाचम् । अष्टाऽपदीम् । अहम् । नवऽस्रक्तिम् । ऋतऽस्पृशम् ॥
इन्द्रात् । परि । तन्वम् । ममे ॥१२॥

## ( ७७ )

११ कुरुसुतिः काण्वः । इन्द्रः । गायत्री, १०-११ प्रगाथः = (बृहती, सतोबृहती) ।

**जज्ञानो नु शतक्रतुर्वि पृच्छदिति मातरम् ।**
**क उग्राः के ह शृण्विरे ॥१॥**
जज्ञानः । नु । शतऽक्रतुः । वि । पृच्छत् । इति । मातरम् ॥
के । उग्राः । के । ह । शृण्विरे ॥१॥

**आदीं शवस्यब्रवीदौर्णवाभमहीशुवम् ।**
**ते पुत्र सन्तु निष्टुरः ॥२॥**
आत् । ईम् । शवसी । अब्रवीत् । और्णऽवाभम् । अहीशुवम् ॥
ते । पुत्र । सन्तु । निःऽतुरः ॥२॥

समित्तान्वृत्रहाखिदत्खे ऽअराँइव खेदया ।
प्रवृद्धो दस्युहाभवत् ॥३॥
सम् । इत् । तान् । वृत्र॰हा । अखिदत् । खे । अरान्ऽइव । खेदया ॥
प्र॰वृद्धः । दस्युहा । अभवत् ॥३॥

एकया प्रतिधापिबत्साकं सराँसि त्रिंशतम् ।
इन्द्रः सोमस्य काणुका ॥४॥
एकया । प्रति॰धा । अपिबत् । साकम् । सराँसि । त्रिंशतम् ॥
इन्द्रः । सोमस्य । काणुका ॥४॥

अभि गन्धर्वमतृणदबुध्नेषु रजःस्वा ।
इन्द्रो ब्रह्मभ्य ऽइद्वृधे ॥५॥ ( २९ )
अभि । गन्धर्वम् । अतृणत् । अबुध्नेषु । रजःऽसु । आ ॥
इन्द्रः । ब्रह्म॰भ्यः । इत् । वृधे ॥५॥

निराविध्यद्गिरिभ्य ऽआ धारयत्पक्वमोदनम् ।
इन्द्रो बुन्दं स्वाततम् ॥६॥
निः । अविध्यत् । गिरि॰भ्यः । आ । धारयत् । पक्वम् । ओदनम् ॥
इन्द्रः । बुन्दम् । सु॰आततम् ॥६॥

शतब्रध्न ऽइषुस्तव सहस्रपर्ण ऽएक ऽइत् ।
यमिन्द्र चकृषे युजम् ॥७॥
शत॰ब्रध्नः । इषुः । तव । सहस्र॰पर्णः । एकः । इत् ॥
यम् । इन्द्र । चकृषे । युजम् ॥७॥

तेन॑ स्तो॒तृभ्य॒ ऽआ भ॑र॒ नृभ्यो॒ नारि॑भ्यो॒ ऽअत्त॑वे ।
स॒द्यो जा॒त ऽऋ॑भुष्ठिर ॥८॥
तेन॑ । स्तो॒तृ॰भ्यः॑ । आ । भ॒र॒ । नृ॰भ्यः॑ । नारि॑॰भ्यः । अत्त॑वे ॥
स॒द्यः । जा॒तः । ऋ॒भु॒॰स्थि॒र॒ ॥८॥

ए॒ता च्यौ॒त्नानि॑ ते कृ॒ता वर्षि॑ष्ठानि॒ परी॑णसा ।
हृ॒दा वी॒ड्व॑धारयः ॥९॥
ए॒ता । च्यौ॒त्नानि॑ । ते॒ । कृ॒ता । वर्षि॑ष्ठानि । परी॑णसा ॥
हृ॒दा । वी॒ळु । अ॒धा॒र॒यः॒ ॥९॥

विश्वेत्ता विष्णु॒राभ॑रदुरुक्र॒मस्त्वेषि॑तः ।
श॒तं म॑हि॒षान्क्षी॑रपा॒कमो॑द॒नं व॑रा॒हमिन्द्र॑ एमु॒षम् ॥१०॥
विश्वा॑ । इत् । ता । विष्णुः॑ । आ । अ॒भ॒र॒त् ।
उ॒रु॒॰क्र॒मः । त्वा॰ईषितः ॥ श॒तम् । म॒हि॒षान् ।
क्षी॒र॒॰पा॒कम् । ओ॒द॒नम् । व॒रा॒हम् । इन्द्रः॑ । ए॒मु॒षम् ॥१०॥

तु॒वि॒क्षं ते॒ सुकृ॑तं सू॒मयं॒ धनुः॑ सा॒धुर्बु॑न्दो हि॑र॒ण्ययः॑ ।
उ॒भा तै॑ बा॒हू रण्या॒ सुसं॑स्कृत ऽऋ॒दूपे चि॑दृ॒दू॒वृधा॑ ॥११॥ (३०) [१०९३]
तु॒वि॒॰क्षम् । ते॒ । सु॒॰कृ॑तम् । सु॒॰मय॑म् । धनुः॑ । सा॒धुः ।
बु॒न्दः । हि॒र॒ण्ययः॑ ॥ उ॒भा । ते॒ । बा॒हू इति॑ । रण्या॑ ।
सु॒॰सं॑स्कृता । ऋ॒दु॒॰पे । चि॒त् । ऋ॒दु॒॰वृधा॑ ॥११॥

# ( ७८ )

१० कुरुसुतिः काण्वः । इन्द्रः । गायत्री, १० बृहती ।

पु॒रो॒ळाशं॑ नो॒ ऽअन्ध॑स॒ ऽइन्द्र॑ स॒हस्र॒मा भ॑र ।
श॒ता च॑ शूर॒ गोना॑म् ॥१॥

पुरोळाशम् । नः । अन्धसः । इन्द्र । सहस्रम् । आ । भर ॥
शता । च । शूर । गोनाम् ॥१॥

आ नो भर व्यञ्जनं गामश्वमभ्यञ्जनम् ।
सचा मना हिरण्यया ॥२॥
आ । नः । भर । वि०अञ्जनम् । गाम् । अश्वम् । अभि०अञ्जनम् ॥
सचा । मना । हिरण्यया ॥२॥

उत नः कर्णशोभना पुरूणि धृष्णवा भर ।
त्वं हि शृण्विषे वसो ॥
उत । नः । कर्ण०शोभना । पुरूणि । धृष्णो इति । आ । भर ॥
त्वम् । हि । शृण्विषे । वसो इति ॥३॥

नकीं वृधीक ऽइन्द्र ते न सुषा न सुदा ऽउत ।
नान्यस्त्वच्छूर वाघतः ॥४॥
नकीम् । वृधीकः । इन्द्र । ते । न । सु०साः । न । सु०दाः । उत ॥
न । अन्यः । त्वत् । शूर । वाघतः ॥४॥

नकीमिन्द्रो निकर्त्तवे न शक्रः परिशक्तवे ।
विश्वं शृणोति पश्यति ॥५॥ ( ३१ )
नकीम् । इन्द्रः । नि०कर्त्तवे । न । शक्रः । परि०शक्तवे ॥
विश्वम् । शृणोति । पश्यति ॥५॥

स मन्युं मर्त्यानामदब्धो नि चिकीषते ।
पुरा निदश्चिकीषते ॥६॥

सः । मन्युम् । मर्त्यानाम् । अदब्धः । नि । चिकीषते ॥
पुरा । निदः । चिकीषते ॥६॥

**क्रत्व ऽइत्पूर्णमुदरं तुरस्यास्ति विधतः ।**
**वृत्रघ्नः सोमपाव्नः ॥७॥**
क्रत्वः । इत् । पूर्णम् । उदरम् । तुरस्य । अस्ति । विधतः ॥
वृत्र॰घ्नः । सोम॰पाव्नः ॥७॥

**त्वे वसूनि संगता विश्वा च सोम सौभगा ।**
**सुदात्वपरिह्वृता ॥८॥**
त्वे इति । वसूनि । सम्॰गता । विश्वा । च । सोम । सौभगा ॥
सु॰दातु । अपरि॰ह्वृता ॥८॥

**त्वामिद्यवयुर्मम कामो गव्युर्हिरण्ययुः ।**
**त्वामश्वयुरेषते ॥९॥**
त्वाम् । इत् । यव॰युः । मम । कामः । गव्युः । हिरण्य॰युः ॥
त्वाम् । अश्व॰युः । आ । ईषते ॥९॥

**तवेदिन्द्राहमाशसा हस्ते दात्रं चना ददे ।**
**दिनस्य वा मघवन्त्सम्भृतस्य वा पूर्धि यवस्य काशिना ॥१०॥ ( ३२ ) [ ११०३ ]**
तव । इत् । इन्द्र । अहम् । आ॰शसा । हस्ते । दात्रम् ।
चन । आ । ददे ॥ दिनस्य । वा । मघ॰वन् ।
सम्॰भृतस्य । वा । पूर्धि । यवस्य । काशिना ॥१०॥

# ( ७९ )

१ कृत्नुर्भार्गवः । सोमः । गायत्री, ९ अनुष्टुप् ।

अयं कृत्नुरगृभीतो विश्वजिदुद्भिदित्सोमः ।
ऋषिर्विप्रः काव्येन ॥१॥
अयम् । कृत्नुः । अगृभीतः । विश्व॰जित् । उत्॰भित् । इत् । सोमः ॥
ऋषिः । विप्रः । काव्येन ॥१॥

अभ्यूर्णोति यन्नग्नं भिषक्ति विश्वं यत्तुरम् ।
प्रेमन्धः ख्यन्निः श्रोणो भूत् ॥२॥
अभि । ऊर्णोति । यत् । नग्नम् । भिषक्ति । विश्वम् । यत् । तुरम् ॥
प्र । ईम् । अन्धः । ख्यत् । निः । श्रोणः । भूत् ॥२॥

त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः ।
उरु यन्तासि वरूथम् ॥३॥
त्वम् । सोम । तनूकृत्॰भ्यः । द्वेषः॰भ्यः । अन्य॰कृतेभ्यः ॥
उरु । यन्ता । असि । वरूथम् ॥३॥

त्वं चित्ती तव दक्षैर्दिव ऽआ पृथिव्या ऽऋजीषिन् ।
यावीरघस्य चिद्द्वेषः ॥४॥
त्वम् । चित्ती । तव । दक्षैः । दिवः । आ । पृथिव्याः । ऋजीषिन् ॥
यावीः । अघस्य । चित् । द्वेषः ॥४॥

अर्थिनो यन्ति चेदर्थं गच्छानिद्ददुषो रातिम् ।
ववृज्युस्तृष्यतः कामम् ॥५॥ ( ३३ )

अर्थिनः । यन्ति । च । इत् । अर्थम् । गच्छान् । इत् । ददुषः । रातिम् ॥
ववृज्युः । तृष्यतः । कामम् ॥५॥

**विदद्यत्पूर्व्यं नष्टमुदीमृतायुमीरयत् ।**
**प्रेमायुस्तारीदतीर्णम् ॥६॥**
विदत् । यत् । पूर्व्यम् । नष्टम् । उत् । ईम् । ऋत॰युम् । ईरयत् ॥
प्र । ईम् । आयुः । तारीत् । अतीर्णम् ॥६॥

**सुशेवो नो मृळयाकुरदृप्तक्रतुरवातः ।**
**भवा नः सोम शं हृदे ॥७॥**
सु॰शेवः । नः । मृळयाकुः । अदृप्त॰क्रतुः । अवातः ॥
भव । नः । सोम । शम् । हृदे ॥७॥

**मा नः सोम सं वीविजो मा वि बीभिषथा राजन् ।**
**मा नो हार्दि त्विषा वधीः ॥८॥**
मा । नः । सोम । सम् । वीविजः । मा । वि । बीभिषथा । राजन् ॥
मा । नः । हार्दि । त्विषा । वधीः ॥८॥

**अव यत्स्वे सधस्थे देवानां दुर्मतीरीक्षे ।**
**राजन्नप द्विषः सेध मीढ्वो ऽअप स्रिधः सेध ॥९॥ ( ३४ )** [ ११११२ ]
अव । यत् । स्वे । सध॰स्थे । देवानाम् । दुः॰मतीः । ईक्षे ॥
राजन् । अप । द्विषः । सेध । मीढ्वः । अप । स्रिधः । सेध ॥९॥

# ( ८० )

१० एकद्यूर्नौधसः । इन्द्रः, १० देवाः । गायत्री, १० त्रिष्टुप् ।

नह्यन्यं बळाकरं मर्डितारं शतक्रतो ।
त्वं न इन्द्र मृळय ॥१॥
नहि । अन्यम् । बल । अकरम् । मर्डितारम् । शतक्रतो इति शत०क्रतो ॥
त्वम् । नः । इन्द्र । मृळय ॥१॥

यो नः शश्वत्पुराविथामृध्रो वाजसातये ।
स त्वं न इन्द्र मृळय ॥२॥
यः । नः । शश्वत् । पुरा । आविथ । अमृध्रः । वाज०सातये ॥
सः । त्वम् । नः । इन्द्र । मृळय ॥२॥

किमङ्ग रध्रचोदनः सुन्वानस्यावितेदसि ।
कुवित्स्विन्द्र णः शकः ॥३॥
किम् । अङ्ग । रध्र०चोदनः । सुन्वानस्य । अविता । इत् । असि ॥
कुवित् । सु । इन्द्र । नः । शकः ॥३॥

इन्द्र प्र णो रथमव पश्चाच्चित्सन्तमद्रिवः ।
पुरस्तादेनं मे कृधि ॥४॥
इन्द्र । प्र । नः । रथम् । अव । पश्चात् । चित् । सन्तम् । अद्रि०वः ॥
पुरस्तात् । एनम् । मे । कृधि ॥४॥

हन्तो नु किमाससे प्रथमं नो रथं कृधि ।
उपमं वाजयु श्रवः ॥५॥ ( ३५ )

हन्तो इति । नु । किम् । आससे । प्रथमम् । नः । रथम् । कृधि ॥
उप॰मम् । वाज॰यु । श्रवः ॥५॥

**अर्वा नो वाजयुं रथं सुकरं ते किमित्परि ।**
**अस्मान्त्सु जिग्युषस्कृधि ॥६॥**
अर्व । नः । वाज॰युम् । रथम् । सु॰करम् । ते । किम् । इत् । परि ॥
अस्मान् । सु । जिग्युषः । कृधि ॥६॥

**इन्द्र दृह्यस्व पूरसि भद्रा त ऽएति निष्कृतम् ।**
**इयं धीर्ऋत्वियावती ॥७॥**
इन्द्र । दृह्यस्व । पूः । असि । भद्रा । ते । एति । निः॰कृतम् ॥
इयम् । धीः । ऋत्विय॰वती ॥७॥

**मा सीमवद्य ऽआ भागुर्वी काष्ठा हितं धनम् ।**
**अपावृक्ता ऽअरत्नयः ॥८॥**
मा । सीम् । अवद्ये । आ । भाक् । उर्वी । काष्ठा । हितम् । धनम् ॥
अप॰आवृक्ताः । अरत्नयः ॥८॥

**तुरीयं नाम यज्ञियं यदा करस्तदुश्मसि ।**
**आदित्पतिर्न ऽओहसे ॥९॥**
तुरीयम् । नाम । यज्ञियम् । यदा । करः । तत् । उश्मसि ॥
आत् । इत् । पतिः । नः । ओहसे ॥९॥

**अवीवृधद्वो ऽअमृता ऽअमन्दीदेकद्यूर्देवा ऽउत याश्च देवीः ।**
**तस्मा ऽउ राधः कृणुत प्रशस्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥१०॥ ( ३६ ) [ ११२२ ]**

अवींवृधत् । वः । अमृताः । अमन्दीत् । एकु०द्यूः । देवाः ।
उत । याः । च । देवीः ॥ तस्मै । ऊँ इतिं । राधः । कृणुत ।
प्र०शस्तम् । प्रातः । मक्षु । धिया०वसुः । जगम्यात् ॥१०॥

## ( ८१ ) [ अथ नवमोऽनुवाकः ॥९॥ सूक्तानि ८१-९३

९ कुसीदी काण्वः । इन्द्रः । गायत्री ।

**आ तू न ऽइन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।**
**महाहस्ती दक्षिणेन ॥१॥**
आ । तु । नः । इन्द्र । क्षु०मन्तम् । चित्रम् । ग्राभम् । सम् । गृभय ॥
महा०हस्ती । दक्षिणेन ॥१॥

**विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् ।**
**तुविमात्रमवोभिः ॥२॥**
विद्म । हि । त्वा । तुवि०कूर्मिम् । तुवि०देष्णम् । तुवि०मघम् ॥
तुवि०मात्रम् । अवः०ऽभिः ॥२॥

**नहि त्वा शूर देवा न मर्त्तासो दित्सन्तम् ।**
**भीमं न गां वारयन्ते ॥३॥**
नहि । त्वा । शूर । देवाः । न । मर्त्तासः । दित्सन्तम् ॥
भीमम् । न । गाम् । वारयन्ते ॥३॥

**एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजम् ।**
**न राधसा मर्धिषन्नः ॥४॥**
एतो इतिं । नु । इन्द्रम् । स्तवाम । ईशानम् । वस्वः । स्व०राजम् ॥
न । राधसा । मर्धिषत् । नः ॥४॥

प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानम् ।
अभि राधसा जुगुरत् ॥५॥ ( ३७ )
प्र । स्तोषत् । उप । गासिषत् । श्रवत् । साम । गीयमानम् ।
अभि । राधसा । जुगुरत् ॥५॥

आ नो भर दक्षिणेनाभि सव्येन प्र मृश ।
इन्द्र मा नो वसोर्निर्भाक् ॥६॥
आ । नः । भर । दक्षिणेन । अभि । सव्येन । प्र । मृश ॥
इन्द्र । मा । नः । वसोः । निः । भाक् ॥६॥

उप क्रमस्वा भर धृषता धृष्णो जनानाम् ।
अदाशूष्टरस्य वेदः ॥७॥
उप । क्रमस्व । आ । भर । धृषता । धृष्णो इति । जनानाम् ॥
अदाशूः२तरस्य । वेदः ॥७॥

इन्द्र य ऽउ नु ते ऽअस्ति वाजो विप्रेभिः सनित्वः ।
अस्माभिः सु तं सनुहि ॥८॥
इन्द्र । यः । ऊँ इति । नु । ते । अस्ति । वाजः । विप्रेभिः । सनित्वः ॥
अस्माभिः । सु । तम् । सनुहि ॥८॥

सद्योजुवस्ते वाजा ऽअस्मभ्यं विश्वश्चन्द्राः ।
वशैश्च मक्षू जरन्ते ॥९॥ ( ३८ ) [ ११३१ ]
सद्यः२जुवः । ते । वाजाः । अस्मभ्यम् । विश्व०चन्द्राः ॥
वशैः । च । मक्षु । जरन्ते ॥९॥

॥ इति षष्ठाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

# पञ्चमाध्यायस्य मन्त्रवर्गानुक्रमणी

आ त्वा रथं यथोतये ॥१॥
परोमात्रमृचीषम० ॥२॥
यस्य ते स्वादु सख्यं ॥३॥
सुरथाँ ऽआतिथिग्वे ॥४॥
प्रप्र वस्त्रिष्टुभमिषं ॥५॥
इन्द्राय गाव ऽआशिरं ॥६॥
अपादिन्द्रो ऽअपादग्नि०. ॥७॥
यो राजा चर्षणीनां ॥८॥
आ पप्राथ महिना ॥९॥
अन्यव्रतममानुष० ॥१०॥
त्वं नो ऽअग्ने महोभिः ॥११॥
त्वं रयिं पुरुवीरम० ॥१२॥
अग्निं सूनुं सहसो ॥१३॥
हविष्कृणुध्वमा ॥१४॥
उतो न्वस्य यन्महद० ॥१५॥
अभ्यारमिदद्रयो ॥१६॥
अधुक्षत्पिप्युषी० ॥१७॥
उदीराथामृतायते ॥१८॥
अश्विना यामहूतमा ॥१९॥
किमिदं वां पुराणव० ॥२०॥
विशोविशो वो ऽअतिथिं ॥२१॥
सबाधो यं जना ऽइमे ॥२२॥
यं त्वा गोपवनो ॥२३॥
युक्ष्वा हि देवहूतमाँ ॥२४॥
तस्मै नूनमभिद्यवे ॥२५॥
कुवित्सु नो गविष्टये ॥२६॥
इमं नु मायिनं हुव ॥२७॥
मरुत्वाँ ऽइन्द्र मीढ्वः ॥२८॥
जज्ञानो नु शतक्रतु० ॥२९॥
निराविध्यद्गिरिभ्य ॥३०॥
पुरोळाशं नो ऽअन्धस ॥३१॥
स मन्युं मर्त्यानाम० ॥३२॥
अयं कृत्नुरगृभीतो ॥३३॥
विदद्यत्पूर्व्यं नष्टमु० ॥३४॥
नह्यङ्ग्न्यं बळाकरं ॥३५॥
अवा नो वाजयुं रथं ॥३६॥
आ तू न ऽइन्द्र क्षुमन्तं ॥३७॥
आ नो भर दक्षिणेनाभि ॥३८॥

॥ इति शाङ्खायनसंहितायां षष्ठाष्टके पञ्चमोऽध्यायः ॥
(पञ्चमाध्याये वर्गाः ३८, सूक्तानि १४, ऋचः १९५)

# ॥ षष्ठाष्टके षष्ठोऽध्यायः॥

## अथ षष्ठोऽध्यायः॥६॥ वर्गाः १-३८ ] [ अष्टममण्डले सूक्तानि ८२-९७ ]

## ( ८२ )

१ कुसीदी काण्वः । इन्द्रः । गायत्री ।

आ प्र द्रव परावतोऽर्वावतश्च वृत्रहन् ।
मध्वः प्रति प्रभर्मणि ॥१॥
आ । प्र । द्रव । परा॰वतः । अर्वा॰वतः । च । वृत्र॰हन् ॥
मध्वः । प्रति । प्र॰भर्मणि ॥१॥

तीव्राः सोमास ऽआ गहि सुतासो मादयिष्णवः ।
पिबा दधृग्यथोचिषे ॥२॥
तीव्राः । सोमासः । आ । गहि । सुतासः । मादयिष्णवः ॥
पिब । दधृक् । यथा । ओचिषे ॥२॥

इषा मन्दस्वादु तेऽरं वराय मन्यवे ।
भुवत्त ऽइन्द्र शं हृदे ॥३॥
इषा । मन्दस्व । आत् । ऊँ इति । ते । अरम् । वराय । मन्यवे ॥
भुवत् । ते । इन्द्र । शम् । हृदे ॥३॥

आ त्वशत्रवा गहि न्युक्थानि च हूयसे ।
उपमे रोचने दिवः ॥४॥
आ । तु । अशत्रो इति । आ । गहि । नि । उक्थानि । च । हूयसे ॥
उप॰मे । रोचने । दिवः ॥४॥

**तुभ्यायमद्रिभिः सुतो गोभिः श्रीतो मदाय कम् ।**
**प्र सोम ऽइन्द्र हूयते ॥५॥ (१)**
तुभ्यं । अयम् । अद्रिऽभिः । सुतः । गोभिः । श्रीतः । मदाय । कम् ॥
प्र । सोमः । इन्द्र । हूयते ॥५॥

**इन्द्र श्रुधि सु मे हवमस्मे सुतस्य गोमतः ।**
**वि पीतिं तृप्तिमश्नुहि ॥६॥**
इन्द्र । श्रुधि । सु । मे । हवम् । अस्मे इति । सुतस्य । गोऽमतः ॥
वि । पीतिम् । तृप्तिम् । अश्नुहि ॥६॥

**य ऽइन्द्र चमसेष्वा सोमश्चमूषु ते सुतः ।**
**पिबेदस्य त्वमीशिषे ॥७॥**
यः । इन्द्र । चमसेषु । आ । सोमः । चमूषु । ते । सुतः ॥
पिब । इत् । अस्य । त्वम् । ईशिषे ॥७॥

**यो ऽअप्सु चन्द्रमाइव सोमश्चमूषु ददृशे ।**
**पिबेदस्य त्वमीशिषे ॥८॥**
यः । अप्ऽसु । चन्द्रमाःऽइव । सोमः । चमूषु । ददृशे ॥
पिब । इत् । अस्य । त्वम् । ईशिषे ॥८॥

**यं ते श्येनः पदाभरत्तिरो रजांस्यस्पृतम् ।**
**पिबेदस्य त्वमीशिषे ॥९॥ (२)** [ ११४० ]
यम् । ते । श्येनः । पदा । आ । अभरत् । तिरः । रजांसि । अस्पृतम् ॥
पिब । इत् । अस्य । त्वम् । ईशिषे ॥९॥

# ( ८३ )

१ कुसीदी काण्वः । विश्वे देवाः । गायत्री ।

देवानामिदवो महत्तदा वृणीमहे वयम् ।
वृष्णामस्मभ्यमूतये ॥१॥
देवानाम् । इत् । अवः । महत् । तत् । आ । वृणीमहे । वयम् ॥
वृष्णाम् । अस्मभ्यम् । ऊतये ॥१॥

ते नः सन्तु युजः सदा वरुणो मित्रो ऽअर्यमा ।
वृधासश्च प्रचेतसः ॥२॥
ते । नः । सन्तु । युजः । सदा । वरुणः । मित्रः । अर्यमा ॥
वृधासः । च । प्र०चेतसः ॥२॥

अति नो विष्पिता पुरु नौभिरपो न पर्षथ ।
यूयमृतस्य रथ्यः ॥३॥
अति । नः । विष्पिता । पुरु । नौभिः । अपः । न । पर्षथ ॥
यूयम् । ऋतस्य । रथ्यः ॥३॥

वामं नो ऽअस्त्वर्यमन्वामं वरुण शंस्यम् ।
वामं ह्यावृणीमहे ॥४॥
वामम् । नः । अस्तु । अर्यमन् । वामम् । वरुण । शंस्यम् ॥
वामम् । हि । आ०वृणीमहे ॥४॥

वामस्य हि प्रचेतस ऽईशानाशो रिशादसः ।
नेमादित्या ऽअघस्य यत् ॥५॥ ( ३ )

वामस्य । हि । प्र॰चेतसः । ईशानासः । रिशादसः ॥
न । ईम् । आदित्याः । अघस्य । यत् ॥५॥

**वयमिद्वः सुदानवः क्षियन्तो यान्तो ऽअध्वन्ना ।**
**देवा वृधाय हूमहे ॥६॥**
वयम् । इत् । वः । सु॰दानवः । क्षियन्तः । यान्तः । अध्वन् । आ ॥
देवाः । वृधाय । हूमहे ॥६॥

**अधि न ऽइन्द्रैषां विष्णो सजात्यानाम् ।**
**इता मरुतो ऽअश्विना ॥७॥**
अधि । नः । इन्द्र । एषाम् । विष्णो इति । स॰जात्यानाम् ॥
इत । मरुतः । अश्विना ॥७॥

**प्र भ्रातृत्वं सुदानवोऽध द्विता समान्या ।**
**मातुर्गर्भे भरामहे ॥८॥**
प्र । भ्रातृ॰त्वम् । सु॰दानवः । अध । द्विता । समान्या ॥
मातुः । गर्भे । भरामहे ॥८॥

**यूयं हि ष्ठा सुदानव ऽइन्द्रज्येष्ठा ऽअभिद्यवः ।**
**अधा चिद्व ऽउत ब्रुवे ॥९॥ (४)** [ ११४९ ]
यूयम् । हि । स्थ । सु॰दानवः । इन्द्र॰ज्येष्ठाः । अभि॰द्यवः ॥
अध । चित् । वः । उत । ब्रुवे ॥९॥

## ( ८४ )

९ उशना काव्यः । अग्निः । गायत्री ।

**प्रेष्ठं वो ऽअतिथिं स्तुषे मित्रमिव प्रियम् ।**
**अग्निं रथं न वेद्यम् ॥१॥**

प्रेष्ठम् । वः । अतिथिम् । स्तुषे । मित्रम्ऽइव । प्रियम् ॥
अग्निम् । रथम् । न । वेद्यम् ॥१॥

**कविमिव प्रचेतसं यं देवासो ऽअध द्विता ।**
**नि मर्त्येष्वादधुः ॥२॥**
कविम्ऽइव । प्रऽचेतसम् । यम् । देवासः । अध । द्विता ॥
नि । मर्त्येषु । आऽदधुः ॥२॥

**त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः ।**
**रक्षा तोकमुत त्मना ॥३॥**
त्वम् । यविष्ठ । दाशुषः । नॄन् । पाहि । शृणुधि । गिरः ॥
रक्ष । तोकम् । उत । त्मना ॥३॥

**कया ते ऽअग्ने ऽअङ्गिर ऽऊर्जो नपादुपस्तुतिम् ।**
**वराय देव मन्यवे ॥४॥**
कया । ते । अग्ने । अङ्गिरः । ऊर्जः । नपात् । उपऽस्तुतिम् ॥
वराय । देव । मन्यवे ॥४॥

**दाशेम कस्य मनसा यज्ञस्य सहसो यहो ।**
**कदु वोच ऽइदं नमः॥५॥ (५)**
दाशेम । कस्य । मनसा । यज्ञस्य । सहसः । यहो इति ॥
कत् । ऊँ इति । वोचे । इदम् । नमः ॥५॥

**अधा त्वं हि नस्करो विश्वा ऽअस्मभ्यं सुक्षितीः ।**
**वाजद्रविणसो गिरः ॥६॥**

अध । त्वम् । हि । नः । करः । विश्वाः । अस्मभ्यम् । सुऽक्षितीः ॥
वाजऽद्रविणसः । गिरः ॥६॥

कस्य नूनं परीणसो धियो जिन्वसि दम्पते ।
गोषाता यस्य ते गिरः ॥७॥
कस्य । नूनम् । परीणसः । धियः । जिन्वसि । दम्ऽपते ॥
गोऽसाता । यस्य । ते । गिरः ॥७॥

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु ।
स्वेषु क्षयेषु वाजिनम् ॥८॥
तम् । मर्जयन्त । सुऽक्रतुम् । पुरःऽयावानम् । आजिषु ॥
स्वेषु । क्षयेषु । वाजिनम् ॥८॥

क्षेति क्षेमेभिः साधुभिर्नकिर्यं घ्नन्ति हन्ति यः ।
अग्ने सुवीर एधते ॥९॥ ( ६ ) [ ११५८ ]
क्षेति । क्षेमेभिः । साधुऽभिः । नकिः । यम् । घ्नन्ति । हन्ति । यः ॥
अग्ने । सुऽवीरः । एधते ॥९॥

## ( ८५ )

९ कृष्ण आङ्गिरसः । अश्विनौ । गायत्री ।

आ मे हवं नासत्याश्विना गच्छतं युवम् ।
मध्वः सोमस्य पीतये ॥१॥
आ । मे । हवम् । नासत्या । अश्विना । गच्छतम् । युवम् ॥
मध्वः । सोमस्य । पीतये ॥१॥

इमं मे स्तोममश्विनेमं मे शृणुतं हवम् ।
मध्वः सोमस्य पीतये ॥२॥

इमम् । मे । स्तोमम् । अश्विना । इमम् । मे । शृणुतम् । हवम् ।
मध्वः । सोमस्य । पीतये ॥२॥

**अयं वां कृष्णो ऽअश्विना हवते वाजिनीवसू ।**
**मध्वः सोमस्य पीतये ॥३॥**
अयम् । वाम् । कृष्णः । अश्विना । हवते । वाजिनीवसू इति वाजिनी०वसू ॥
मध्वः । सोमस्य । पीतये ॥३॥

**शृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा ।**
**मध्वः सोमस्य पीतये ॥४॥**
शृणुतम् । जरितुः । हवम् । कृष्णस्य । स्तुवतः । नरा ॥
मध्वः । सोमस्य । पीतये ॥४॥

**छर्दिर्यन्तमदाभ्यं विप्राय स्तुवते नरा ।**
**मध्वः सोमस्य पीतये ॥५॥ (७)**
छर्दिः । यन्तम् । अदाभ्यम् । विप्राय । स्तुवते । नरा ॥
मध्वः । सोमस्य । पीतये ॥५॥

**गच्छतं दाशुषो गृहमित्था स्तुवतो ऽअश्विना ।**
**मध्वः सोमस्य पीतये ॥६॥**
गच्छतम् । दाशुषः । गृहम् । इत्था । स्तुवतः । अश्विना ॥
मध्वः । सोमस्य । पीतये ॥६॥

**युञ्जाथां रासभं रथे वीड्वङ्गे वृषणवसू ।**
**मध्वः सोमस्य पीतये ॥७॥**

युञ्जाथाम् । रासभम् । रथे । वीळु०अङ्गे । वृषण्वसू इति वृषण्०वसू ॥
मध्वः । सोमस्य । पीतये ॥७॥

त्रिवन्धुरेण त्रिवृता रथेना यातमश्विना ।
मध्वः सोमस्य पीतये ॥८॥
त्रि०वन्धुरेण । त्रि०वृता । रथेन । आ । यातम् । अश्विना ॥
मध्वः । सोमस्य । पीतये ॥८॥

नू मे गिरो नासत्याश्विना प्रावतं युवम् ।
मध्वः सोमस्य पीतये ॥९॥ (८) [११६७]
नु । मे । गिरः । नासत्या । अश्विना । प्र । अवतम् । युवम् ॥
मध्वः । सोमस्य । पीतये ॥९॥

## (८६)

५ कृष्ण आङ्गिरसः, विश्वको वा कार्ष्णिः । अश्विनौ । जगती ।

उभा हि दस्रा भिषजा मयोभुवोभा दक्षस्य वचसो बभूवथुः ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् ॥१॥
उभा । हि । दस्रा । भिषजा । मयः२भुवा । उभा । दक्षस्य ।
वचसः । बभूवथुः ॥ ता । वाम् । विश्वकः । हवते ।
तनू०कृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥१॥

कथा नूनं वां विमना ऽउप स्तवद्युवं धियं ददथुर्वस्यइष्टये ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् ॥२॥
कथा । नूनम् । वाम् । वि०मनाः । उप । स्तवत् । युवम् ।
धियम् । ददथुः । वस्यः२इष्टये ॥ ता । वाम् । विश्वकः । हवते ।
तनू०कृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥२॥

युवं हि ष्मा पुरुभुजेममेधतुं विष्णाप्वे ददथुर्वस्यइष्टये ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् ॥३॥
युवम् । हि । स्म । पुरु०भुजा । इमम् । एधतुम् । विष्णाप्वे ।
ददथुः । वस्यः२इष्टये ॥ ता । वाम् । विश्वकः । हवते ।
तनू०कृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥३॥

उत त्यं वीरं धनसामृजीषिणं दूरे चित्सन्तमवसे हवामहे ।
यस्य स्वादिष्ठा सुमतिः पितुर्यथा मा नो वि यौष्टं सख्या मुमोचतम् ॥४॥
उत । त्यम् । वीरम् । धन०साम् । ऋजीषिणम् । दूरे । चित् ।
सन्तम् । अवसे । हवामहे ॥ यस्य । स्वादिष्ठा । सु०मतिः ।
पितुः । यथा । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥४॥

ऋतेन देवः सविता शमायत ऽऋतस्य शृङ्गमुर्विया वि पप्रथे ।
ऋतं सासाह महिं चित्पृतन्यतो मा नो वि यौष्टं सख्या मुमोचतम् ॥५॥ (९) [ ११७२ ]
ऋतेन । देवः । सविता । शम्०आयते । ऋतस्य । शृङ्गम् ।
उर्विया । वि । पप्रथे ॥ ऋतम् । ससाह । महिं । चित् ।
पृतन्यतः । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥५॥

# ( ८७ )

६ कृष्ण आङ्गिरसो, वासिष्ठो वा द्युम्नीकः, प्रियमेध आङ्गिरसो वा । अश्विनौ ।
प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।

द्युम्नी वां स्तोमो ऽअश्विना क्रिविर्न सेक ऽआ गतम् ।
मध्वः सुतस्य स दिवि प्रियो नरा पातं गौराविवेरिणे ॥१॥
द्युम्नी । वाम् । स्तोमः । अश्विना । क्रिविः । न ।
सेके । आ । गतम् ॥ मध्वः । सुतस्य । सः । दिवि ।
प्रियः । नरा । पातम् । गौरौऽइव । इरिणे ॥१॥

पिबतं घर्मं मधुमन्तमश्विना बर्हिः सीदतं नरा ।
ता मन्दसाना मनुषो दुरोण ऽआ नि पातं वेदसा वयः ॥२॥
पिबतम् । घर्मम् । मधुऽमन्तम् । अश्विना । आ ।
बर्हिः । सीदतम् । नरा ॥ ता । मन्दसाना । मनुषः ।
दुरोणे । आ । नि । पातम् । वेदसा । वयः ॥२॥

आ वां विश्वाभिरूतिभिः प्रियमेधा ऽअहूषत ।
ता वर्त्तिर्यातमुप वृक्तबर्हिषो जुष्टं यज्ञं दिविष्टिषु ॥३॥
आ । वाम् । विश्वाभिः । ऊतिऽभिः । प्रियऽमेधाः । अहूषत ॥
ता । वर्त्तिः । यातम् । उप । वृक्तऽबर्हिषः । जुष्टम् । यज्ञम् । दिविष्टिषु ॥३॥

पिबतं सोमं मधुमन्तमश्विना बर्हिः सीदतं सुमत् ।
ता वावृधाना ऽउप सुष्टुतिं दिवो गन्तं गौराविवेरिणम् ॥४॥
पिबतम् । सोमम् । मधुऽमन्तम् । अश्विना । आ । बर्हिः । सीदतम् । सुऽमत् ॥
ता । ववृधानौ । उप । सुऽस्तुतिम् । दिवः । गन्तम् । गौरौऽइव । इरिणम् ॥४॥

आ नूनं यातमश्विनाश्वेभिः प्रुषितप्सुभिः ।
दस्रा हिरण्यवर्त्तनी शुभस्पती पातं सोममृतावृधा ॥५॥
आ । नूनम् । यातम् । अश्विना । अश्वेभिः । प्रुषितप्सुऽभिः ॥
दस्रा । हिरण्यवर्त्तनी इति हिरण्यऽवर्त्तनी । शुभः ।
पती इति । पातम् । सोमम् । ऋतऽवृधा ॥५॥

वयं हि वां हवामहे विपन्यवो विप्रासो वाजसातये ।
ता वल्गू दस्रा पुरुदंससा धियाश्विना श्रुष्ट्या गतम् ॥६॥ (१०) [ ११७८ ]
वयम् । हि । वाम् । हवामहे । विपन्यवः । विप्रासः ।
वाजऽसातये ॥ ता । वल्गू इति । दस्रा । पुरुऽदंससा ।
धिया । अश्विना । श्रुष्टी । आ । गतम् ॥६॥

# (८८)

६ नोधा गौतमः । इन्द्रः । प्रगाथः = (विषमा बृहती, समा सतोबृहती) ।

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥१॥
तम् । वः । दस्मम् । ऋति॰सहम् । वसोः । मन्दानम् ।
अन्धसः ॥ अभि । वत्सम् । न । स्वसरेषु ।
धेनवः । इन्द्रम् । गीः२भिः । नवामहे ॥१॥

द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे ॥२॥
द्युक्षम् । सु॰दानुम् । तविषीभिः । आ॰वृतम् । गिरिम् ।
न । पुरु॰भोजसम् ॥ क्षु॰मन्तम् । वाजम् । शतिनम् ।
सहस्रिणम् । मक्षु । गो॰मन्तम् । ईमहे ॥२॥

न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीळवः ।
यद्दित्ससि स्तुवते मावते वसु नकिष्टदा मिनाति ते ॥३॥
न । त्वा । बृहन्तः । अद्रयः । वरन्ते । इन्द्र । वीळवः ॥
यत् । दित्ससि । स्तुवते । मा॰वते । वसु । नकिः । तत् । आ । मिनाति । ते ॥३॥

योद्धासि क्रत्वा शवसोत दंसना विश्वा जाताभि मज्मना ।
आ त्वायमर्क ऊतये ववर्त्तति यं गोतमा अजीजनन् ॥४॥
योद्धा । असि । क्रत्वा । शवसा । उत । दंसना । विश्वा ।
जाता । अभि । मज्मना ॥ आ । त्वा । अयम् । अर्कः ।
ऊतये । ववर्त्तति । यम् । गोतमाः । अजीजनन् ॥४॥

प्र हि रिरिक्ष ऽओजसा दिवो ऽअन्तेभ्यस्परि ।
न त्वा विव्याच रज ऽइन्द्र पार्थिवमनु स्वधां ववक्षिथ ॥५॥
प्र । हि । रिरिक्षे । ओजसा । दिवः । अन्तेभ्यः । परि ॥
न । त्वा । विव्याच । रजः । इन्द्र । पार्थिवम् । अनु । स्वधाम् । ववक्षिथ ॥५॥

नकिः परिष्टिर्मघवन्मघस्य ते यद्दाशुषे दशस्यसि ।
अस्माकं बोध्युचथस्य चोदिता मंहिष्ठो वाजसातये ॥६॥ ( ११ ) [ ११८४ ]
नकिः । परिष्टिः । मघ०वन् । मघस्य । ते ।
यत् । दाशुषे । दशस्यसि ॥ अस्माकम् । बोधि ।
उचथस्य । चोदिता । मंहिष्ठः । वाज०सातये ॥६॥

# ( ८९ )

७ नृमेध-पुरुमेधावाङ्गिरसौ । इन्द्रः । १-४ प्रगाथः = ( विषमा बृहती, समा सतोबृहती ), ५-६ अनुष्टुप्, ७ बृहती ।

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥१॥
बृहत् । इन्द्राय । गायत । मरुतः । वृत्रहम्०तमम् ॥
येन । ज्योतिः । अजनयन् । ऋत०वृधः । देवम् । देवाय । जागृवि ॥१॥

अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत् ।
देवास्त ऽइन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ॥२॥
अप । अधमत् । अभि०शस्तीः । अशस्ति०हा । अथ । इन्द्रः ।
द्युम्नी । आ । अभवत् ॥ देवाः । ते । इन्द्र । सख्याय ।
येमिरे । बृहद्भानो इति बृहत्०भानो । मरुत्०गण ॥२॥

प्र व ऽइन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥३॥
प्र । वः । इन्द्राय । बृहते । मरुतः । ब्रह्म । अर्चत ॥
वृत्रम् । हनति । वृत्र०हा । शत०क्रतुः । वज्रेण । शत०पर्वणा ॥३॥

अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते ऽअसद्बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥४॥
अभि । प्र । भर । धृषता । धृषत्०मनः । श्रवः । चित् ।
ते । असत् । बृहत् ॥ अर्षन्तु । आपः । जवसा ।
वि । मातरः । हनः । वृत्रम् । जय । स्वः ॥४॥

यज्जायथा ऽअपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना ऽउत द्याम् ॥५॥
यत् । जायथाः । अपूर्व्य । मघ०वन् । वृत्र०हत्याय ॥
तत् । पृथिवीम् । अप्रथयः । तत् । अस्तभ्नाः । उत । द्याम् ॥५॥

तत्ते यज्ञो ऽअजायत तदर्क ऽउत हस्कृतिः ।
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥६॥
तत् । ते । यज्ञः । अजायत । तत् । अर्कः ।
उत । हस्कृतिः ॥ तत् । विश्वम् । अभि०भूः ।
असि । यत् । जातम् । यत् । च । जन्त्वम् ॥६॥

आमासु पक्वमैरय ऽआ सूर्यं रोहयो दिवि ।
घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥७॥ (१२) [११९१]
आमासु । पक्वम् । ऐरयः । आ । सूर्यम् ।
रोहयः । दिवि ॥ घर्मम् । न । सामन् । तपत ।
सुवृक्ति०भिः । जुष्टम् । गिर्वणसे । बृहत् ॥७॥

# ( ९० )

६ नृमेध-पुरुमेधावङ्गिरसौ । इन्द्रः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।

आ नो विश्वासु हव्य ऽइन्द्रः समत्सु भूषतु ।
उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऽऋचीषमः ॥१॥
आ । नः । विश्वासु । हव्यः । इन्द्रः ।
समत्ऽसु । भूषतु ॥ उप । ब्रह्माणि । सवनानि ।
वृत्रऽहा । परमऽज्याः । ऋचीषमः ॥१॥

त्वं दाता प्रथमो राधसामस्यसि सत्य ऽईशानकृत् ।
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥२॥
त्वम् । दाता । प्रथमः । राधसाम् । असि । असि ।
सत्यः । ईशानऽकृत् ॥ तुविऽद्युम्नस्य । युज्या ।
आ । वृणीमहे । पुत्रस्य । शवसः । महः ॥२॥

ब्रह्मा त ऽइन्द्र गिर्वणः क्रियन्ते ऽअनतिद्भुता ।
इमा जुषस्व हर्यश्व योजनेन्द्र या ते ऽअमन्महि ॥३॥
ब्रह्म । ते । इन्द्र । गिर्वणः । क्रियन्ते । अनतिद्भुता ॥
इमा । जुषस्व । हरिऽअश्व । योजना । इन्द्र । या । ते । अमन्महि ॥३॥

त्वं हि सत्यो मघवन्ननानतो वृत्रा भूरि न्यृञ्जसे ।
स त्वं शविष्ठ वज्रहस्त दाशुषेऽर्वाञ्चं रयिमा कृधि ॥४॥
त्वम् । हि । सत्यः । मघऽवन् । अनानतः । वृत्रा ।
भूरि । निऽऋञ्जसे ॥ सः । त्वम् । शविष्ठ । वज्रऽहस्त ।
दाशुषे । अर्वाञ्चम् । रयिम् । आ । कृधि ॥४॥

त्वमिन्द्र यशा ऽअस्यृजीषी शवसस्पते ।
त्वं वृत्राणि हंस्यप्रतीन्येक ऽइदनुत्ता चर्षणीधृता ॥५॥
त्वम् । इन्द्र । यशाः । असि । ऋजीषी । शवसः ।
पते ॥ त्वम् । वृत्राणि । हंसि । अप्रतीनि ।
एकः । इत् । अनुत्ता । चर्षणि॰धृता ॥५॥

तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ।
महीव कृत्तिः शरणा त ऽइन्द्र प्र ते सुम्ना नो ऽअश्नवन् ॥६॥ (१३) [११९७]
तम् । ऊँ इति । त्वा । नूनम् । असुर । प्र॰चेतसम् ।
राधः । भागम्ऽइव । ईमहे ॥ महीऽइव । कृत्तिः । शरणा ।
ते । इन्द्र । प्र । ते । सुम्ना । नः । अश्नवत् ॥६॥

# ( ९१ )

७ आत्रेयी अपाला । इन्द्रः अनुष्टुप्, १-२ पङ्क्तिः ।

कन्याइ वारवायती सोममपि स्रुताविदत् ।
अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा ॥१॥
कन्या । वाः । अव॰यती । सोमम् । अपि ।
स्रुता । अविदत् ॥ अस्तम् । भरन्ती । अब्रवीत् ।
इन्द्राय । सुनवै । त्वा । शक्राय । सुनवै । त्वा ॥१॥

असौ य ऽएषि वीरको गृहंगृहं विचाकशद् ।
इमं जम्भसुतं पिब धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ॥२॥
असौ । यः । एषि । वीरकः । गृहम्॰गृहम् । वि॰चाकशत् ॥
इमम् । जम्भ॰सुतम् । पिब । धाना॰वन्तम् । करम्भिणम् । अपूप॰वन्तम् । उक्थिनम् ॥२॥

आ चन त्वा चिकित्सामोऽधि चन त्वा नेमसि ।
शनैरिव शनकैरिवेन्द्रायेन्दो परि स्रव ॥३॥
आ । चन । त्वा । चिकित्सामः । अधि । चन ।
त्वा । न । इमसि ॥ शनैःऽइव । शनकैःऽइव ।
इन्द्राय । इन्दो इति । परि । स्रव ॥३॥

कुविच्छकत्कुवित्करत्कुविन्नो वस्यसस्करत् ।
कुवित्पतिद्विषो यतीरिन्द्रेण संगमामहै ॥४॥
कुवित् । शकत् । कुवित् । करत् । कुवित् ।
नः । वस्यसः । करत् ॥ कुवित् । पति०द्विषः ।
यतीः । इन्द्रेण । सम्०गमामहै ॥४॥

इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय ।
शिरस्ततस्योर्वरामादिदं म ऽउपोदरे ॥५॥
इमानि । त्रीणि । विष्टपा । तानि । इन्द्र । वि । रोहय ॥
शिरः । ततस्य । उर्वराम् । आत् । इदम् । मे । उप । उदरे ॥५॥

असौ च या न ऽउर्वरादिमां तन्वं१ मम ।
अथो ततस्य यच्छिरः सर्वा ता रोमशा कृधि ॥६॥
असौ । च । या । नः । उर्वरा । आत् । इमाम् ।
तन्वम् । मम ॥ अथो इति । ततस्य । यत् ।
शिरः । सर्वा । ता । रोमशा । कृधि ॥६॥

खे रथस्य खेऽनसः खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम् ॥७॥ (१४) [१२०४]

खे । रथस्य । खे । अनसः । खे । युगस्य ।
शतक्रतो इति शत०क्रतो ॥ अपालाम् । इन्द्र ।
त्रिः । पूत्वी । अकृणोः । सूर्य०त्वचम् ॥७॥

# ( ९२ )

३३ श्रुतकक्षः सुकक्षो वा आङ्गिरसः । इन्द्रः । गायत्री, १ अनुष्टुप् ।

पान्तमा वो ऽअन्धस ऽइन्द्रमभि प्र गायत ।
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥१॥
पान्तम् । आ । वः । अन्धसः । इन्द्रम् ।
अभि । प्र । गायत ॥ विश्व०सहम् ।
शत०क्रतुम् । मंहिष्ठम् । चर्षणीनाम् ॥१॥

पुरुहूतं पुरुष्टुतं गाथान्यं१ सनश्रुतम् ।
इन्द्र ऽइति ब्रवीतन ॥२॥
पुरु०हूतम् । पुरु०स्तुतम् । गाथान्यम् । सन०श्रुतम् ॥
इन्द्रः । इति । ब्रवीतन ॥२॥

इन्द्र ऽइन्नो महानां दाता वाजानां नृतुः ।
महाँ ऽअभिरवा यमत् ॥३॥
इन्द्रः । इत् । नः । महानाम् । दाता । वाजानाम् । नृतुः ॥
महान् । अभि०ज्ञु । आ । यमत् ॥३॥

अपादु शिप्रयन्धसः सुदक्षस्य प्रहोषिणः ।
इन्दोरिन्द्रो यवाशिरः ॥४॥
अपात् । ऊँ इति । शिप्री । अन्धसः । सु०दक्षस्य । प्र०होषिणः ॥
इन्दोः । इन्द्रः । यव०आशिरः ॥४॥

**तम्वभि प्रार्चतेन्द्रं सोमस्य पीतये ।**

**तदिद्ध्यस्य वर्द्धनम् ॥५॥ (१५)**

तम् । ऊँ इति । अभि । प्र । अर्चत । इन्द्रम् । सोमस्य । पीतये ॥

तत् । इत् । हि । अस्य । वर्द्धनम् ॥५॥

**अस्य पीत्वा मदानां देवो देवस्यौजसा ।**

**विश्वाभि भुवना भुवत् ॥६॥**

अस्य । पीत्वा । मदानाम् । देवः । देवस्य । ओजसा ॥

विश्वा । अभि । भुवना । भुवत् ॥६॥

**त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।**

**आ च्यावयस्यूतये ॥७॥**

त्यम् । ऊँ इति । वः । सत्रा०सहम् । विश्वासु । गीर्षु । आ०यतम् ॥

आ । च्यवयसि । ऊतये ॥७॥

**युध्मं सन्तमनर्वाणं सोमपामनपच्युतम् ।**

**नरमवार्यक्रतुम् ॥८॥**

युध्मम् । सन्तम् । अनर्वाणम् । सोम०पाम् । अनप०च्युतम् ॥

नरम् । अवार्य०क्रतुम् ॥८॥

**शिक्षा ण ऽइन्द्र राय ऽआ पुरु विद्वाँ ऽऋचीषम ।**

**अवा नः पार्ये धने ॥९॥**

शिक्ष । नः । इन्द्र । रायः । आ । पुरु । विद्वान् । ऋचीषम ॥

अव । नः । पार्ये । धने ॥९॥

**अतश्चिदिन्द्र ण उपा याहि शतवाजया ।**
**इषा सहस्रवाजया ॥१०॥ ( १६ )**

अतः । चित् । इन्द्र । नः । उप । आ । याहि । शत०वाजया ॥
इषा । सहस्र०वाजया ॥१०॥

**अयाम धीवतो धियोऽर्वद्भिः शक्र गोदरे ।**
**जयेम पृत्सु वज्रिवः ॥११॥**

अयाम । धी०वतः । धियः । अर्वत्०भिः । शक्र । गो०दरे ॥
जयेम । पृत्०सु । वज्रि०वः ॥११॥

**वयमु त्वा शतक्रतो गावो न यवसेष्वा ।**
**उक्थेषु रणयामसि ॥१२॥**

वयम् । ऊँ इति । त्वा । शतक्रतो इति शत०क्रतो । गावः । न । यवसेषु । आ ॥
उक्थेषु । रणयामसि ॥१२॥

**विश्वा हि मर्त्यत्वनानुकामा शतक्रतो ।**
**अगन्म वज्रिन्नाशसः ॥१३॥**

विश्वा । हि । मर्त्य०त्वना । अनु०कामा । शतक्रतो इति शत०क्रतो ॥
अगन्म । वज्रिन् । आ०शसः ॥१३॥

**त्वे सु पुत्र शवसोऽवृत्रन्कामकातयः ।**
**न त्वामिन्द्राति रिच्यते ॥१४॥**

त्वे इति । सु । पुत्र । शवसः । अवृत्रन् । काम०कातयः ॥
न । त्वाम् । इन्द्र । अति । रिच्यते ॥१४॥

स नौ वृषन्त्सनिष्ठया सं घोरया द्रवित्न्वा ।
धियाविड्ढि पुरंध्या ॥१५॥ (१७)
सः । नः । वृषन् । सनिष्ठया । सम् । घोरया । द्रवित्न्वा ॥
धिया । अविड्ढि । पुरम्०ध्या ॥१५॥

यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः ।
तेन नूनं मदे मदेः ॥१६॥
यः । ते । नूनम् । शतक्रतो इति शत०क्रतो । इन्द्र । द्युम्नि०तमः । मदः ॥
तेन । नूनम् । मदे । मदेरिति मदेः ॥१६॥

यस्ते चित्रश्रवस्तमो य ऽइन्द्र वृत्रहन्तमः ।
य ऽओजोदातमो मदः ॥१७॥
यः । ते । चित्रश्रवः२तमः । यः । इन्द्र । वृत्रहन्०तमः ॥
यः । ओजः२दातमः । मदः ॥१७॥

विद्मा हि यस्ते ऽअद्रिवस्त्वादत्तः सत्य सोमपाः ।
विश्वासु दस्म कृष्टिषु ॥१८॥
विद्म । हि । यः । ते । अद्रि०वः । त्वा०दत्तः । सत्य । सोम०पाः ॥
विश्वासु । दस्म । कृष्टिषु ॥१८॥

इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।
अर्कमर्चन्तु कारवः ॥१९॥
इन्द्राय । मद्वने । सुतम् । परि । स्तोभन्तु । नः । गिरः ॥
अर्कम् । अर्चन्तु । कारवः ॥१९॥

**यस्मिन्विश्वा ऽअधि श्रियो रणन्ति सप्त संसदः ।**

**इन्द्रं सुते हवामहे ॥२०॥ (१८)**

यस्मिन् । विश्वाः । अधि । श्रियः । रणन्ति । सप्त । सम्०सदः ॥

इन्द्रम् । सुते । हवामहे ॥२०॥

**त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत ।**

**तमिद्वर्द्धन्तु नो गिरः ॥२१॥**

त्रि०कद्रुकेषु । चेतनम् । देवासः । यज्ञम् । अत्नत ॥

तम् । इत् । वर्द्धन्तु । नः । गिरः ॥२१॥

**आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।**

**न त्वामिन्द्राति रिच्यते ॥२२॥**

आ । त्वा । विशन्तु । इन्दवः । समुद्रम्ऽइव । सिन्धवः ॥

न । त्वाम् । इन्द्र । अति । रिच्यते ॥२२॥

**विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे ।**

**य ऽइन्द्र जठरेषु ते ॥२३॥**

विव्यक्थ । महिना । वृषन् । भक्षम् । सोमस्य । जागृवे ॥

यः । इन्द्र । जठरेषु । ते ॥२३॥

**अरं त ऽइन्द्र कुक्षये सोमो भवतु वृत्रहन् ।**

**अरं धामभ्य ऽइन्दवः ॥२४॥**

अरम् । ते । इन्द्र । कुक्षये । सोमः । भवतु । वृत्र०हन् ॥

अरम् । धाम०भ्यः । इन्दवः ॥२४॥

अरमश्वाय गायति श्रुतकक्षो ऽअरं गवे ।
अरमिन्द्रस्य धाम्ने ॥२५॥
अरम् । अश्वाय । गायति । श्रुत०कक्षः । अरम् । गवे ॥
अरम् । इन्द्रस्य । धाम्ने ॥२५॥

अरं हि ष्म सुतेषु णः सोमेष्विन्द्र भूषसि ।
अरं ते शक्र दावने ॥२६॥ (१९)
अरम् । हि । स्म । सुतेषु । नः । सोमेषु । इन्द्र । भूषसि ॥
अरम् । ते । शक्र । दावने ॥२६॥

पराकात्ताच्चिदद्रिवस्त्वां नक्षन्त नो गिरः ।
अरं गमाम ते वयम् ॥२७॥
पराकात्तात् । चित् । अद्रि०वः । त्वाम् । नक्षन्त । नः । गिरः ॥
अरम् । गमाम । ते । वयम् ॥२७॥

एवा ह्यसि वीरयुरेवा शूर ऽउत स्थिरः ।
एवा ते राध्यं मनः ॥२८॥
एव । हि । असि । वीर०युः । एव । शूरः । उत । स्थिरः ॥
एव । ते । राध्यम् । मनः ॥२८॥

एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः ।
अधा चिदिन्द्र मे सचा ॥२९॥
एव । रातिः । तुवि०मघ । विश्वेभिः । धायि । धातृ०भिः ॥
अध । चित् । इन्द्र । मे । सचा ॥२९॥

मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते ।
मत्स्वा सुतस्य गोमतः ॥३०॥
मो इति । सु । ब्रह्माऽइव । तन्द्रयुः । भुवः । वाजानाम् । पते ॥
मत्स्व । सुतस्य । गोऽमतः ॥३०॥

मा न ऽइन्द्राभ्यादिशः सूरो ऽअक्तुष्वा यमन् ।
त्वा युजा वनेम तत् ॥३१॥
मा । नः । इन्द्र । अभि । आऽदिशः । सूरः । अक्तुषु । आ । यमन् ॥
त्वा । युजा । वनेम । तत् ॥३१॥

त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः ।
त्वमस्माकं तव स्मसि ॥३२॥
त्वया । इत् । इन्द्र । युऽजा । वयम् । प्रति । ब्रुवीमहि । स्पृधः ॥
त्वम् । अस्माकम् । तव । स्मसि ॥३२॥

त्वामिद्धि त्वायवोऽनुनोनुवतश्चरान् ।
सखाय ऽइन्द्र कारवः ॥३३॥ (२०) [१२३७]
त्वाम् । इत् । हि । त्वाऽयवः । अनुऽनोनुवतः । चरान् ॥
सखायः । इन्द्र । कारवः ॥३३॥

## ( ९३ )

३४ सुकक्ष आङ्गिरसः । इन्द्रः, ३४ इन्द्र-ऋषभश्च । गायत्री ।

उद्घेदभि श्रुतामघं वृषभं नर्यापसम् ।
अस्तारमेषि सूर्य ॥१॥
उत् । घ । इत् । अभि । श्रुतऽमघम् । वृषभम् । नर्यऽअपसम् ॥
अस्तारम् । एषि । सूर्य ॥१॥

नव यो नवतिं पुरो बिभेद बाह्वोजसा ।
अहिं च वृत्रहावधीत् ॥२॥
नव । यः । नवतिम् । पुरः । बिभेद । बाहु०ओजसा ॥
अहिम् । च । वृत्र०हा । अवधीत् ॥२॥

स न ऽइन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ।
उरुधारेव दोहते ॥३॥
सः । नः । इन्द्रः । शिवः । सखा । अश्व०वत् । गो०मत् । यव०मत् ॥
उरुधाराऽइव । दोहते ॥३॥

यदद्य कच्च वृत्रहन्नुदगा ऽअभि सूर्य ।
सर्वं तदिन्द्र ते वशे ॥४॥
यत् । अद्य । कत् । च । वृत्र०हन् । उत्०अगाः । अभि । सूर्य ॥
सर्वम् । तत् । इन्द्र । ते । वशे ॥४॥

यद्वा प्रवृद्ध सत्पते न मरा ऽइति मन्यसे ।
उतो तत्सत्यमित्तव ॥५॥ ( २१ )
यत् । वा । प्र०वृद्ध । सत्०पते । न । मरै । इति । मन्यसे ॥
उतो इति । तत् । सत्यम् । इत् । तव ॥५॥

ये सोमासः परावति ये ऽअर्वावति सुन्विरे ।
सर्वांस्ताँ ऽइन्द्र गच्छसि ॥६॥
ये । सोमासः । परा०वति । ये । अर्वा०वति । सुन्विरे ॥
सर्वान् । तान् । इन्द्र । गच्छसि ॥६॥

**तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।**

**स वृषा वृषभो भुवत् ॥७॥**

तम् । इन्द्रम् । वाजयामसि । महे । वृत्राय । हन्तवे ॥

सः । वृषा । वृषभः । भुवत् ॥७॥

**इन्द्रः स दामने कृत ऽओजिष्ठः स मदे हितः ।**

**द्युम्नी श्लोकी स सोम्यः ॥८॥**

इन्द्रः । सः । दामने । कृतः । ओजिष्ठः । सः । मदे । हितः ॥

द्युम्नी । श्लोकी । सः । सोम्यः ॥८॥

**गिरा वज्रो न सम्भृतः सबलो ऽअनपच्युतः ।**

**ववक्ष ऽऋष्वो ऽअस्तृतः ॥९॥**

गिरा । वज्रः । न । सम्०भृतः । स०बलः । अनप०च्युतः ॥

ववक्षे । ऋष्वः । अस्तृतः ॥९॥

**दुर्गे चिन्नः सुगं कृधि गृणान ऽइन्द्र गिर्वणः ।**

**त्वं च मघवन्वशः ॥१०॥ ( २२ )**

दुः२गे । चित् । नः । सु०गम् । कृधि । गृणानः । इन्द्र । गिर्वणः ॥

त्वम् । च । मघ०वन् । वशः ॥१०॥

**यस्य ते नू चिदादिशं न मिनन्ति स्वराज्यम् ।**

**न देवो नाध्रिगुर्जनः ॥११॥**

यस्य । ते । नु । चित् । आ०दिशम् । न । मिनन्ति । स्व०राज्यम् ॥

न । देवः । न । अध्रि०गुः । जनः ॥११॥

अर्धा ते ऽअप्रतिष्कुतं देवी शुष्मं सपर्यतः ।
उभे सुशिप्र रोदसी ॥१२॥
अर्ध । ते । अप्रति॰स्कुतम् । देवी इति । शुष्मम् । सपर्यतः ॥
उभे इति । सु॰शिप्र । रोदसि इति ॥१२॥

त्वमेतदधारयः कृष्णासु रोहिणीषु च ।
परुष्णीषु रुशत्पयः ॥१३॥
त्वम् । एतत् । अधारयः । कृष्णासु । रोहिणीषु । च ॥
परुष्णीषु । रुशत् । पयः ॥१३॥

वि यदहेरध त्विषो विश्वे देवासो ऽअक्रमुः ।
विदन्मृगस्य ताँ ऽअमः ॥१४॥
वि । यत् । अहेः । अध । त्विषः । विश्वे । देवासः । अक्रमुः ॥
विदत् । मृगस्य । तान् । अमः ॥१४॥

आदु मे निवरो भुवद्वृत्रहादिष्ट पौंस्यम् ।
अजातशत्रुरस्तृतः ॥१५॥ ( २३ )
आत् । ऊँ इति । मे । नि॰वरः । भुवत् । वृत्र॰हा । अदिष्ट । पौंस्यम् ॥
अजात॰शत्रुः । अस्तृतः ॥१५॥

श्रुतं वो वृत्रहन्तमं प्र शर्द्धं चर्षणीनाम् ।
आ शुषे राधसे महे ॥१६॥
श्रुतम् । वः । वृत्रहन्॰तमम् । प्र । शर्द्धम् । चर्षणीनाम् ॥
आ । शुषे । राधसे । महे ॥१६॥

अया धिया च गव्यया पुरुणामन्पुरुष्टुत ।
यत्सोमेसोम ऽआभवः ॥१७॥
अया । धिया । च । गव्य०या । पुरु०नामन् । पुरु०स्तुत ।
यत् । सोमे०सोमे । आ । अभवः ॥१७॥

बोधिन्मना ऽइदस्तु नो वृत्रहा भूर्यासुतिः ।
शृणोतु शक्र ऽआशिषम् ॥१८॥
बोधित्०मनाः । इत् । अस्तु । नः । वृत्र०हा । भूरि०आसुतिः ॥
शृणोतु । शुक्रः । आ०शिषम् ॥१८॥

कया त्वं न ऽऊत्याभि प्र मन्दसे वृषन् ।
कया स्तोतृभ्य ऽआ भर ॥१९॥
कया । त्वम् । नः । ऊत्या । अभि । प्र । मन्दसे । वृषन् ॥
कया । स्तोतृ०भ्यः । आ । भर ॥१९॥

कस्य वृषा सुते सचा नियुत्वान्वृषभो रणत् ।
वृत्रहा सोमपीतये ॥२०॥ ( २४ )
कस्य । वृषा । सुते । सचा । नियुत्वान् । वृषभः । रणत् ॥
वृत्र०हा । सोम०पीतये ॥२०॥

अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम् ।
प्रयन्ता बोधि दाशुषे ॥२१॥
अभि । सु । नः । त्वम् । रयिम् । मन्दसानः । सहस्रिणम् ॥
प्र०यन्ता । बोधि । दाशुषे ॥२१॥

पत्नींवन्तः सुता ऽइम ऽउशन्तो यन्ति वीतये ।
अपां जग्मिर्निचुम्पुणः ॥२२॥
पत्नीं०वन्तः । सुताः । इमे । उशन्तः । यन्ति । वीतये ॥
अपाम् । जग्मिः । नि०चुम्पुणः ॥२२॥

इष्टा होत्रा ऽअसृक्षतेन्द्रं वृधासो ऽअध्वरे ।
अच्छावभृथमोजसा ॥२३॥
इष्टाः । होत्राः । असृक्षत । इन्द्रम् । वृधासः । अध्वरे ॥
अच्छ । अव०भृथम् । ओजसा ॥२३॥

इह त्या सधमाद्या हरी हिरण्यकेश्या ।
वोळ्हामभि प्रयो हितम् ॥२४॥
इह । त्या । सध०माद्या । हरी इति । हिरण्य०केश्या ॥
वोळ्हाम् । अभि । प्रयः । हितम् ॥२४॥

तुभ्यं सोमाः सुता ऽइमे स्तीर्णं बर्हिर्विभावसो ।
स्तोतृभ्य ऽइन्द्रमा वह ॥२५॥ ( २५ )
तुभ्यम् । सोमाः । सुताः । इमे । स्तीर्णम् । बर्हिः । विभावसो इति विभा०वसो ॥
स्तोतृ०भ्यः । इन्द्रम् । आ । वह ॥२५॥

आ ते दक्षं वि रोचना दधद्रत्ना वि दाशुषे ।
स्तोतृभ्य ऽइन्द्रमर्चत ॥२६॥
आ । ते । दक्षम् । वि । रोचना । दधत् । रत्ना । वि । दाशुषे ॥
स्तोतृ०भ्यः । इन्द्रम् । अर्चत ॥२६॥

आ ते दधामीन्द्रियमुक्था विश्वा शतक्रतो ।
स्तोतृभ्य ऽइन्द्र मृळय ॥२७॥
आ । ते । दधामि । इन्द्रियम् । उक्था । विश्वा । शतक्रतो इति शत०क्रतो ॥
स्तोतृ०भ्यः । इन्द्र । मृळय ॥२७॥

भद्रंभद्रं न ऽआ भरेषमूर्जं शतक्रतो ।
यदिन्द्र मृळयासि नः ॥२८॥
भद्रम्०भद्रम् । नः । आ । भर । इषम् । ऊर्जम् । शतक्रतो इति शत०क्रतो ॥
यत् । इन्द्र । मृळयासि । नः ॥२८॥

स नो विश्वान्या भर सुवितानि शतक्रतो ।
यदिन्द्र मृळयासि नः ॥२९॥
सः । नः । विश्वानि । आ । भर । सुवितानि । शतक्रतो इति शत०क्रतो ॥
यत् । इन्द्र । मृळयासि । नः ॥२९॥

त्वामिद्वृत्रहन्तम सुतावन्तो हवामहे ।
यदिन्द्र मृळयासि नः ॥३०॥ ( २६ )
त्वाम् । इत् । वृत्रहन्०तम । सुत०वन्तः । हवामहे ॥
यत् । इन्द्र । मृळयासि । नः ॥३०॥

उप नो हरिभिः सुतं याहि मदानां पते ।
उप नो हरिभिः सुतम् ॥३१॥
उप । नः । हरि०भिः । सुतम् । याहि । मदानाम् । पते ॥
उप । नः । हरि०भिः । सुतम् ॥३१॥

द्विता यो वृत्रहन्तमो विद ऽइन्द्रः शतक्रतुः ।
उप नो हरिभिः सुतम् ॥३२॥
द्विता । यः । वृत्रहन्०तमः । विदे । इन्द्रः । शत०क्रतुः ॥
उप । नः । हरि०भिः । सुतम् ॥३२॥

त्वं हि वृत्रहन्नेषां पाता सोमानामसि ।
उप नो हरिभिः सुतम् ॥३३॥
त्वम् । हि । वृत्र०हन् । एषाम् । पाता । सोमानाम् । असि ॥
उप । नः । हरि०भिः । सुतम् ॥३३॥

इन्द्र ऽइषे ददातु न ऽऋभुक्षणमृभुं रयिम् ।
वाजी ददातु वाजिनम् ॥३४॥ ( २७ ) [ १२७१ ]
इन्द्रः । इषे । ददातु । नः । ऋभुक्षणम् । ऋभुम् । रयिम् ॥
वाजी । ददातु । वाजिनम् ॥३४॥

## ( ९४ ) [ अथ दशमोऽनुवाकः ॥१०॥ सूक्तानि ९४-१०३

१२ बिन्दुः पूतदक्षो वा आङ्गिरसः । मरुतः । गायत्री ।

गौर्धयति मरुतां श्रवस्युर्माता मघोनाम् ।
युक्ता वह्नी रथानाम् ॥१॥
गौः । धयति । मरुताम् । श्रवस्युः । माता । मघोनाम् ॥
युक्ता । वह्निः । रथानाम् ॥१॥

यस्या देवा ऽउपस्थे व्रता विश्वे धारयन्ते ।
सूर्यामासा दृशे कम् ॥२॥
यस्याः । देवाः । उप०स्थे । व्रता । विश्वे । धारयन्ते ॥
सूर्यामासा । दृशे । कम् ॥२॥

**तत्सु नो विश्वे ऽअर्य ऽआ सदा गृणन्ति कारवः ।**
**मरुतः सोमपीतये ॥३॥**
तत् । सु । नः । विश्वे । अर्यः । आ । सदा । गृणन्ति । कारवः ॥
मरुतः । सोम॰पीतये ॥३॥

**अस्ति सोमो ऽअयं सुतः पिबन्त्यस्य मरुतः ।**
**उत स्वराजो ऽअश्विना ॥४॥**
अस्ति । सोमः । अयम् । सुतः । पिबन्ति । अस्य । मरुतः ॥
उत । स्व॰राजः । अश्विना ॥४॥

**पिबन्ति मित्रो ऽअर्यमा तना पूतस्य वरुणः ।**
**त्रिषधस्थस्य जावतः ॥५॥**
पिबन्ति । मित्रः । अर्यमा । तना । पूतस्य । वरुणः ॥
त्रि॰सधस्थस्य । जा॰वतः ॥५॥

**उतो न्वस्य जोषमाँ ऽइन्द्रः सुतस्य गोमतः ।**
**प्रातर्होतेव मत्सति ॥६॥ ( २८ )**
उतो इति । नु । अस्य । जोषम् । आ । इन्द्रः । सुतस्य । गो॰मतः ॥
प्रातः । होताऽइव । मत्सति ॥६॥

**कदत्विषन्त सूरयस्तिर ऽआपइव स्रिधः ।**
**अर्षन्ति पूतदक्षसः ॥७॥**
कत् । अत्विषन्त । सूरयः । तिरः । आपःऽइव । स्रिधः ॥
अर्षन्ति । पूत॰दक्षसः ॥७॥

**कद्वो ऽअद्य महानां देवानामवो वृणे ।**

**त्मना च दस्मवर्चसाम् ॥८॥**

कत् । वः । अद्य । महानाम् । देवानाम् । अवः । वृणे ॥

त्मना । च । दस्म०वर्चसाम् ॥८॥

**आ ये विश्वा पार्थिवानि पप्रथन्नोचना दिवः ।**

**मरुतः सोमपीतये ॥९॥**

आ । ये । विश्वा । पार्थिवानि । पप्रथन् । रोचना । दिवः ॥

मरुतः । सोम०पीतये ॥९॥

**त्यान्नु पूतदक्षसो दिवो वो मरुतो हुवे ।**

**अस्य सोमस्य पीतये ॥१०॥**

त्यान् । नु । पूत०दक्षसः । दिवः । वः । मरुतः । हुवे ॥

अस्य । सोमस्य । पीतये ॥१०॥

**त्यान्नु ये वि रोदसी तस्तभुर्मरुतो हुवे ।**

**अस्य सोमस्य पीतये ॥११॥**

त्यान् । नु । ये । वि । रोदसी इति । तस्तभुः । मरुतः । हुवे ॥

अस्य । सोमस्य । पीतये ॥११॥

**त्यं नु मारुतं गणं गिरिष्ठां वृषणं हुवे ।**

**अस्य सोमस्य पीतये ॥१२॥ (२९)** **[ १२९३ ]**

त्यम् । नु । मारुतम् । गणम् । गिरि०स्थाम् । वृषणम् । हुवे ॥

अस्य । सोमस्य । पीतये ॥१२॥

# ( ९५ )

९ तिरश्चीराङ्गिरसः । इन्द्रः । अनुष्टुप् ।

आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषतेन्द्र वत्सं न मातरः ॥१॥
आ । त्वा । गिरः । रथीःऽइव । अस्थुः । सुतेषु । गिर्वणः ॥
अभि । त्वा । सम् । अनूषत । इन्द्र । वत्सम् । न । मातरः ॥१॥

आ त्वा शुक्रा ऽअचुच्यवुः सुतास ऽइन्द्र गिर्वणः ।
पिबा त्वस्यान्धस ऽइन्द्र विश्वासु ते हितम् ॥२॥
आ । त्वा । शुक्राः । अचुच्यवुः । सुतासः । इन्द्र । गिर्वणः ॥
पिब । तु । अस्य । अन्धसः । इन्द्र । विश्वासु । ते । हितम् ॥२॥

पिबा सोमं मदाय कमिन्द्र श्येनाभृतं सुतम् ।
त्वं हि शश्वतीनां पती राजा विशामसि ॥३॥
पिब । सोमम् । मदाय । कम् । इन्द्र । श्येन०आभृतम् । सुतम् ॥
त्वम् । हि । शश्वतीनाम् । पतिः । राजा । विशाम् । असि ॥३॥

श्रुधी हवं तिरश्च्या ऽइन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्द्धि महाँ ऽअसि ॥४॥
श्रुधि । हवम् । तिरश्च्याः । इन्द्र । यः । त्वा । सपर्यति ॥
सु०वीर्यस्य । गो०मतः । रायः । पूर्द्धि । महान् । असि ॥४॥

इन्द्र यस्ते नवीयसीं गिरं मन्द्रामजीजनत् ।
चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥५॥ ( ३० )

इन्द्र । यः । ते । नवीयसीम् । गिरम् । मन्द्राम् । अजीजनत् ॥
चिकित्वित्ऽमनसम् । धियम् । प्रत्नाम् । ऋतस्य । पिप्युषीम् ॥५॥

तमु ष्टवाम यं गिर ऽइन्द्रमुक्थानि वावृधुः ।
पुरूण्यस्य पौंस्या सिषासन्तो वनामहे ॥६॥
तम् । ऊँ इति । स्तवाम । यम् । गिरः । इन्द्रम् । उक्थानि । ववृधुः ॥
पुरूणि । अस्य । पौंस्या । सिसासन्तः । वनामहे ॥६॥

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्ध ऽआशीर्वान्ममत्तु ॥७॥
एतो इति । नु । इन्द्रम् । स्तवाम । शुद्धम् । शुद्धेन । साम्ना ॥
शुद्धैः । उक्थैः । ववृध्वांसम् । शुद्धः । आशीःऽवान् । ममत्तु ॥७॥

इन्द्र शुद्धो न ऽआ गहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥८॥
इन्द्र । शुद्धः । नः । आ । गहि । शुद्धः । शुद्धाभिः । ऊतिऽभिः ॥
शुद्धः । रयिम् । नि । धारय । शुद्धः । ममद्धि । सोम्यः ॥८॥

इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥९॥ ( ३१ )   [ १२९२ ]
इन्द्र । शुद्धः । हि । नः । रयिम् । शुद्धः । रत्नानि । दाशुषे ॥
शुद्धः । वृत्राणि । जिघ्नसे । शुद्धः । वाजम् । सिसाससि ॥९॥

# ( ९६ )

२१ तिरश्चीराङ्गिरसो, द्युतानो वा मारुतः । इन्द्रः । १४ इन्द्रामरुतः, १५ इन्द्राबृहस्पती ।
त्रिष्टुप्, ४ विराट्, २१ पुरस्ताज्ज्योतिः ।

**अस्मा ऽउषास ऽआतिरन्त याममिन्द्राय नक्तमूर्म्याः सुवाचः ।**
**अस्मा ऽआपो मातरः सप्त तस्थुर्नृभ्यस्तराय सिन्धवः सुपाराः ॥१॥**
अस्मै । उषसः । आ । अतिरन्त । यामम् । इन्द्राय ।
नक्तम् । ऊर्म्याः । सु॰वाचः ॥ अस्मै । आपः । मातरः ।
सप्त । तस्थुः । नृ॰भ्यः । तराय । सिन्धवः । सु॰पाराः ॥१॥

**अतिविद्धा विथुरेणा चिदस्त्रा त्रिः सप्त सानु संहिता गिरीणाम् ।**
**न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥२॥**
अति॰विद्धा । विथुरेण । चित् । अस्त्रा । त्रिः । सप्त ।
सानु । सम्॰हिता । गिरीणाम् ॥ न । तत् । देवः । न ।
मर्त्यः । तुतुर्यात् । यानि । प्र॰वृद्धः । वृषभः । चकार ॥२॥

**इन्द्रस्य वज्र ऽआयसो निमिश्ल ऽइन्द्रस्य बाह्वोर्भूयिष्ठमोजः ।**
**शीर्षन्निन्द्रस्य क्रतवो निरेक ऽआसन्नेषन्त श्रुत्या ऽउपाके ॥३॥**
इन्द्रस्य । वज्रः । आयसः । नि॰मिश्लः । इन्द्रस्य । बाह्वोः ।
भूयिष्ठम् । ओजः ॥ शीर्षन् । इन्द्रस्य । क्रतवः ।
निरेके । आसन् । आ । ईषन्त । श्रुत्यै । उपाके ॥३॥

**मन्ये त्वा यज्ञियं यज्ञियानां मन्ये त्वा च्यवनमच्युतानाम् ।**
**मन्ये त्वा सत्वनामिन्द्र केतुं मन्ये त्वा वृषभं चर्षणीनाम् ॥४॥**
मन्ये । त्वा । यज्ञियम् । यज्ञियानाम् । मन्ये । त्वा ।
च्यवनम् । अच्युतानाम् ॥ मन्ये । त्वा । सत्वनाम् ।
इन्द्र । केतुम् । मन्ये । त्वा । वृषभम् । चर्षणीनाम् ॥४॥

आ यद्वज्रं बाह्वोरिन्द्र धत्से मदच्युतमहये हन्तवा ऽउ ।
प्र पर्वता ऽअनवन्त प्र गावः प्र ब्रह्माणो ऽअभिनक्षन्त ऽइन्द्रम् ॥५॥ ( ३२ )
आ । यत् । वज्रम् । बाह्वोः । इन्द्र । धत्से । मद०च्युतम् ।
अहये । हन्तवै । ऊँ इति ॥ प्र । पर्वताः । अनवन्त ।
प्र । गावः । प्र । ब्रह्माणः । अभि०नक्षन्तः । इन्द्रम् ॥५॥

तमु ष्टवाम य ऽइमा जजान विश्वा जातान्यवराण्यस्मात् ।
इन्द्रेण मित्रं दिधिषेम गीर्भिरुपो नमोभिर्वृषभं विशेम ॥६॥
तम् । ऊँ इति । स्तवाम । यः । इमा । जजान । विश्वा ।
जातानि । अवराणि । अस्मात् ॥ इन्द्रेण । मित्रम् । दिधिषेम ।
गीःऽभिः । उपो इति । नमःऽभिः । वृषभम् । विशेम ॥६॥

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा ऽअजहुर्ये सखायः ।
मरुद्भिरिन्द्र सख्यं ते ऽअस्त्वथेमा विश्वाः पृतना जयासि ॥७॥
वृत्रस्य । त्वा । श्वसथात् । ईषमाणाः । विश्वे । देवाः ।
अजहुः । ये । सखायः ॥ मरुत्०भिः । इन्द्र । सख्यम् ।
ते । अस्तु । अथ । इमाः । विश्वाः । पृतनाः । जयासि ॥७॥

त्रिः षष्टिस्त्वा मरुतो वावृधाना ऽउस्राऽइव राशयो यज्ञियासः ।
उप त्वेमः कृधि नो भागधेयं शुष्मं त ऽएना हविषा विधेम ॥८॥
त्रिः । षष्टिः । त्वा । मरुतः । ववृधानाः । उस्राःऽइव ।
राशयः । यज्ञियासः ॥ उप । त्वा । आ । इमः । कृधि ।
नः । भाग०धेयम् । शुष्मम् । ते । एना । हविषा । विधेम ॥८॥

तिग्ममायुधं मरुतामनीकं कस्त ऽइन्द्र प्रति वज्रं दधर्ष ।
अनायुधासो ऽअसुरा ऽअदेवाश्चक्रेण ताँ ऽअप वप ऽऋजीषिन् ॥९॥

तिग्मम् । आयुधम् । मरुताम् । अनीकम् । कः । ते ।
इन्द्र । प्रति । वज्रम् । दधर्ष ॥ अनायुधासः । असुराः ।
अदेवाः । चक्रेण । तान् । अप । वप । ऋजीषिन् ॥९॥

**मह ऽउग्राय तवसे सुवृक्तिम् प्रेरय शिवतमाय पश्वः ।**
**गिर्वाहसे गिर ऽइन्द्राय पूर्वीर्धेहि तन्वे कुविदङ्ग वेदत् ॥१०॥ ( ३३ )**
महे । उग्राय । तवसे । सु०वृक्तिम् । प्र । ईरय ।
शिव०तमाय । पश्वः ॥ गिर्वाहसे । गिरः । इन्द्राय ।
पूर्वीः । धेहि । तन्वे । कुवित् । अङ्ग । वेदत् ॥१०॥

**उक्थवाहसे विभ्वे मनीषां द्रुणा न पारमीरया नदीनाम् ।**
**नि स्पृश धिया तन्वि श्रुतस्य जुष्टतरस्य कुविदङ्ग वेदत् ॥११॥**
उक्थ०वाहसे । वि०भ्वे । मनीषाम् । द्रुणा । न । पारम् ।
ईरय । नदीनाम् ॥ नि । स्पृश । धिया । तन्वि ।
श्रुतस्य । जुष्ट०तरस्य । कुवित् । अङ्ग । वेदत् ॥११॥

**तद्विविड्ढि यत्त ऽइन्द्रो जुजोषत्स्तुहि सुष्टुतिं नमसा विवास ।**
**उप भूष जरितर्मा रुवण्यः श्रावया वाचं कुविदङ्ग वेदत् ॥१२॥**
तत् । विविड्ढि । यत् । ते । इन्द्रः । जुजोषत् । स्तुहि ।
सु०स्तुतिम् । नमसा । आ । विवास ॥ उप । भूष । जरितः ।
मा । रुवण्यः । श्रवय । वाचम् । कुवित् । अङ्ग । वेदत् ॥१२॥

**अव द्रप्सो ऽअंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः ।**
**आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा ऽअधत्त ॥१३॥**
अव । द्रप्सः । अंशु०मतीम् । अतिष्ठत् । इयानः । कृष्णः ।
दश०भिः । सहस्रैः ॥ आवत् । तम् । इन्द्रः । शच्या ।
धमन्तम् । अप । स्नेहितीः । नृ०मनाः । अधत्त ॥१३॥

द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो ऽअंशुमत्याः ।
नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ॥१४॥
द्रप्सम् । अपश्यम् । विषुणे । चरन्तम् । उप०ह्वरे । नद्यः ।
अंशु०मत्याः ॥ नभः । न । कृष्णम् । अवतस्थि०वांसम् ।
इष्यामि । वः । वृषणः । युध्यत । आजौ ॥१४॥

अध द्रप्सो ऽअंशुमत्या ऽउपस्थेऽधारयत्तन्वं तित्विषाणः ।
विशो ऽअदेवीरभ्याइचरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे ॥१५॥ (३४)
अध । द्रप्सः । अंशु०मत्याः । उप०स्थे । अधारयत् ।
तन्वम् । तित्विषाणः ॥ विशः । अदेवीः । अभि ।
आ०चरन्तीः । बृहस्पतिना । युजा । इन्द्रः । ससहे ॥१५॥

त्वं ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो ऽअभवः शत्रुरिन्द्र ।
गूळ्हे द्यावापृथिवी ऽअन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥१६॥
त्वम् । ह । त्यत् । सप्त०भ्यः । जायमानः । अशत्रु०भ्यः ।
अभवः । शत्रुः । इन्द्र ॥ गूळ्हे इति । द्यावापृथिवी इति । अनु ।
अविन्दः । विभुमत्०भ्यः । भुवनेभ्यः । रणम् । धाः ॥१६॥

त्वं ह त्यदप्रतिमानमोजो वज्रेण वज्रिन्धृषितो जघन्थ ।
त्वं शुष्णस्यावातिरो वधत्रैस्त्वं गा ऽइन्द्र शच्येदविन्दः॥१७॥
त्वम् । ह । त्यत् । अप्रति०मानम् । ओजः । वज्रेण । वज्रिन् ।
धृषितः । जघन्थ ॥ त्वम् । शुष्णस्य । अव । अतिरः ।
वधत्रैः । त्वम् । गाः । इन्द्र । शच्या । इत् । अविन्दः ॥१७॥

त्वं ह त्यद्वृषभ चर्षणीनां घनो वृत्राणां तविषो बभूथ ।
त्वं सिन्धूँरसृजस्तस्तभानान्त्वमपो ऽअजयो दासपत्नीः ॥१८॥

त्वम् । ह । त्यत् । वृषभ । चर्षणीनाम् । घनः । वृत्राणाम् ।
तविषः । बभूथ ॥ त्वम् । सिन्धून् । असृजः । तस्तभानान् ।
त्वम् । अपः । अजयः । दास॰पत्नीः ॥१८॥

**स सुक्रतू रणिता यः सुतेष्वनुत्तमन्युर्यो ऽअहेव रेवान् ।**
**य ऽएक ऽइन्नर्यपांसि कर्त्ता स वृत्रहा प्रतीदन्यमाहुः ॥१९॥**
सः । सु॰क्रतुः । रणिता । यः । सुतेषु । अनुत्त॰मन्युः । यः ।
अहाऽइव । रेवान् ॥ यः । एकः । इत् । नरि । अपांसि ।
कर्त्ता । सः । वृत्र॰हा । प्रति । इत् । अन्यम् । आहुः ॥१९॥

**स वृत्रहेन्द्रश्चर्षणीधृत्तं सुष्टुत्या हव्यं हुवेम ।**
**स प्राविता मघवा नोऽधिवक्ता स वाजस्य श्रवस्यस्य दाता ॥२०॥**
सः । वृत्र॰हा । इन्द्रः । चर्षणि॰धृत् । तम् । सु॰स्तुत्या ।
हव्यम् । हुवेम ॥ सः । प्र॰अविता । मघ॰वा । नः ।
अधि॰वक्ता । सः । वाजस्य । श्रवस्यस्य । दाता ॥२०॥

**स वृत्रहेन्द्र ऽऋभुक्षाः सद्यो जज्ञानो हव्यो बभूव ।**
**कृण्वन्नपांसि नर्या पुरूणि सोमो न पीतो हव्यः सखिभ्यः ॥२१॥ ( ३५ ) [ १३१३ ]**
सः । वृत्र॰हा । इन्द्रः । ऋभुक्षाः । सद्यः । जज्ञानः ।
हव्यः । बभूव ॥ कृण्वन् । अपांसि । नर्या । पुरूणि ।
सोमः । न । पीतः । हव्यः । सखि॰भ्यः ॥२१॥

# ( ९७ )

१५ रेभः काश्यपः । इन्द्रः । बृहती, १०, १३ अतिजगती, ११-१२ उपरिष्टाद्बृहती,
१४ त्रिष्टुप्, १५ जगती ।

**या ऽइन्द्र भुज ऽआभरः स्वर्वाँ ऽअसुरेभ्यः ।**
**स्तोतारमिन्मघवन्नस्य वर्द्धय ये च त्वे वृक्तबर्हिषः ॥१॥**

याः । इन्द्र । भुजः । आ । अभरः । स्वः२वान् ।
असुरेभ्यः ॥ स्तोतारम् । इत् । मघ०वन् । अस्य ।
वर्द्धय । ये । च । त्वे इति । वृक्त०बर्हिषः ॥१॥

यमिन्द्र दधिषे त्वमश्वं गां भागमव्ययम् ।
यजमाने सुन्वति दक्षिणावति तस्मिन्तं धेहि मा पणौ ॥२॥
यम् । इन्द्र । दधिषे । त्वम् । अश्वम् । गाम् ।
भागम् । अव्ययम् ॥ यजमाने । सुन्वति । दक्षिणा०वति ।
तस्मिन् । तम् । धेहि । मा । पणौ ॥२॥

य ऽइन्द्र सस्त्यव्रतोऽनुष्वापमदेवयुः ।
स्वैः ष ऽएवैर्मुमुरत्पोष्यं रयिं सनुतर्धेहि तं ततः ॥३॥
यः । इन्द्र । सस्ति । अव्रतः । अनु०स्वापम् ।
अदेव०युः ॥ स्वैः । सः । एवैः । मुमुरत् ।
पोष्यम् । रयिम् । सनुतः । धेहि । तम् । ततः ॥३॥

यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ ऽआ विवासति ॥४॥
यत् । शक्र । असि । परा०वति । यत् । अर्वा०वति ।
वृत्र०हन् ॥ अतः । त्वा । गीः२भिः । द्यु०गत् ।
इन्द्र । केशि०भिः । सुत०वान् । आ । विवासति ॥४॥

यद्वासि रोचने दिवः समुद्रस्याधि विष्टपि ।
यत्पार्थिवे सदने वृत्रहन्तम यदन्तरिक्ष ऽआ गहि ॥५॥ ( ३६ )
यत् । वा । असि । रोचने । दिवः । समुद्रस्य ।
अधि । विष्टपि ॥ यत् । पार्थिवे । सदने ।
वृत्रहन्०तम । यत् । अन्तरिक्षे । आ । गहि ॥५॥

स नः सोमेषु सोमपाः सुतेषु शवसस्पते ।
मादयस्व राधसा सूनृतावतेन्द्र राया परीणसा ॥६॥
सः । नः । सोमेषु । सोम०पाः । सुतेषु । शवसः । पते ॥
मादयस्व । राधसा । सूनृता०वता । इन्द्र । राया । परीणसा ॥६॥

मा न इन्द्र परा वृणग्भवा नः सधमाद्यः ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परा वृणक् ॥७॥
मा । नः । इन्द्र । परा । वृणक् । भव । नः ।
सध०माद्यः ॥ त्वम् । नः । ऊती । त्वम् । इत् ।
नः । आप्यम् । मा । नः । इन्द्र । परा । वृणक् ॥७॥

अस्मे इन्द्र सचा सुते नि षदा पीतये मधु ।
कृधी जरित्रे मघवन्नवो महदस्मे इन्द्र सचा सुते ॥८॥
अस्मे इति । इन्द्र । सचा । सुते । नि । सद ।
पीतये । मधु ॥ कृधि । जरित्रे । मघ०वन् । अवः ।
महत् । अस्मे इति । इन्द्र । सचा । सुते ॥८॥

न त्वा देवास आशत न मर्त्यासो अद्रिवः ।
विश्वा जातानि शवसाभिभूरसि न त्वा देवास आशत ॥९॥
न । त्वा । देवासः । आशत । न । मर्त्यासः ।
अद्रि०वः ॥ विश्वा । जातानि । शवसा । अभि०भूः ।
असि । न । त्वा । देवासः । आशत ॥९॥

विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
क्रत्वा वरिष्ठं वर आमुरिमुतोग्रमोजिष्ठं तवसं तरस्विनम् ॥१०॥ (३७)

विश्वाः । पृतनाः । अभि॰भूतरम् । नरम् । स॰जूः । ततक्षुः ।
इन्द्रम् । जजनुः । च । राजसे ॥ क्रत्वा । वरिष्ठम् । वरे ।
आ॰मुरिम् । उत । उग्रम् । ओजिष्ठम् । तवसम् । तरस्विनम् ॥१०॥

समीं रेभासो ऽअस्वरन्निन्द्रं सोमस्य पीतये ।
स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा समूतिभिः ॥११॥
सम् । ईम् । रेभासः । अस्वरन् । इन्द्रम् । सोमस्य ।
पीतये ॥ स्वः॰पतिम् । यत् । ईम् । वृधे । धृत॰व्रतः ।
हि । ओजसा । सम् । ऊति॰भिः ॥११॥

नेमिं नमन्ति चक्षसा मेषं विप्रा ऽअभिस्वरा ।
सुदीतयो वो ऽअद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥१२॥
नेमिम् । नमन्ति । चक्षसा । मेषम् । विप्राः ।
अभि॰स्वरा ॥ सु॰दीतयः । वः । अद्रुहः । अपि ।
कर्णे । तरस्विनः । सम् । ऋक्व॰भिः ॥१२॥

तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं शवांसि ।
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्त्तद्राये नो विश्वा सुपथा कृणोतु वज्री ॥१३॥
तम् । इन्द्रम् । जोहवीमि । मघ॰वानम् । उग्रम् । सत्रा । दधानम् ।
अप्रति॰स्कुतम् । शवांसि ॥ मंहिष्ठः । गीःऽभिः । आ । च । यज्ञियः ।
ववर्त्तत् । राये । नः । विश्वा । सु॰पथा । कृणोतु । वज्री ॥१३॥

त्वं पुर ऽइन्द्र चिकिदेना व्योजसा शविष्ठ शक्र नाशयध्यै ।
त्वद्विश्वानि भुवनानि वज्रिन्द्यावा रेजेते पृथिवी च भीषा ॥१४॥
त्वम् । पुरः । इन्द्र । चिकित् । एनाः । वि । ओजसा ।
शविष्ठ । शक्र । नाशयध्यै ॥ त्वत् । विश्वानि । भुवनानि ।
वज्रिन् । द्यावा । रेजेते इति । पृथिवी इति । च । भीषा ॥१४॥

तन्मं ऽऋतमिन्द्र शूर चित्र पात्वपो न वज्रिन्दुरितार्ति पर्षि भूरि ।
कदा नं ऽइन्द्र राय ऽआ दशस्येर्विश्वप्स्न्यस्य स्पृहयाय्यस्य राजन् ॥१५॥ ( ३८ ) [ १३२८ ]
तत् । मा । ऋतम् । इन्द्र । शूर । चित्र । पातु । अपः । न ।
वज्रिन् । दुःऽइता । अति । पर्षि । भूरि ॥ कदा । नः । इन्द्र ।
रायः । आ । दशस्येः । विश्वऽप्स्न्यस्य । स्पृहयाय्यस्य । राजन् ॥१५॥

॥ इति षष्ठाष्टके षष्ठोऽध्यायः ॥ ६ ॥

# षष्ठाध्यायस्य मन्त्रवर्गानुक्रमणी

आ प्र द्रव परावतो ॥१॥

इन्द्र श्रुधि सु मे हवम॰ ॥२॥

देवानामिदवो महत्तदा ॥३॥

वयमिद्रः सुदानवः ॥४॥

प्रेष्ठं वो ऽअतिथिं ॥५॥

अधा त्वं हि नस्करो ॥६॥

आ मे हवं नासत्या ॥७॥

गच्छतं दाशुषो गृहमि॰ ॥८॥

उभा हि दस्रा भिषजा ॥९॥

द्युम्नी वां स्तोमो ऽअश्विना ॥१०॥

तं वो दस्ममृतीषहं ॥११॥

बृहदिन्द्राय गायत ॥१२॥

आ नो विश्वासु हव्य ॥१३॥

कन्याइ वारवायती ॥१४॥

पान्तमा वो ऽअन्धस ॥१५॥

अस्य पीत्वा मदानां ॥१६॥

अयाम धीवतो धियो ॥१७॥

यस्ते नूनं शतक्रत ॥१८॥

त्रिकद्रुकेषु चेतनं ॥१९॥

पराकात्ताच्चिदद्रिव॰ ॥२०॥

उद्घेदभि श्रुतामघं ॥२१॥

ये सोमासः परावति ॥२२॥

यस्य ते नू चिदादिशं ॥२३॥

श्रुतं वो वृत्रहन्तमं ॥२४॥

अभी षु णस्त्वं रयिं ॥२५॥

आ ते दक्षं वि रोचना ॥२६॥

उप नो हरिभिः सुतं ॥२७॥

गौर्धयति मरुतां ॥२८॥

कदत्विषन्त सूरय॰ ॥२९॥

आ त्वा गिरो रथीरिवा ॥३०॥

तमु ष्टवाम यं गिर ॥३१॥

अस्मा ऽउषास ऽआतिरन्त ॥३२॥

तमु ष्टवाम य इमा जजान ॥३३॥

उक्थवाहसे विभ्वे ॥३४॥

त्वं ह त्यत्सप्तभ्यो जायमानो ॥३५॥

या ऽइन्द्र भुज ऽआभरः ॥३६॥

स नः सोमेषु सोमपाः ॥३७॥

समीं रेभासो ऽअस्वरन्निन्द्रं ॥३८॥

॥ इति शाङ्खायनसंहितायां षष्ठाष्टके षष्ठोऽध्यायः ॥

( षष्ठाध्याये वर्गाः ३८, सूक्तानि १६, ऋचः १९७ )

# ॥ षष्ठाष्टके सप्तमोऽध्यायः॥

**अथ सप्तमोऽध्यायः॥७॥ वर्गाः १-३९ ] [ अष्टममण्डले सूक्तानि ९८-१०३;**

**नवममण्डले च सूक्तानि १-१२**

## ( ९८ )

**१२ नृमेध आङ्गिरसः । इन्द्रः । उष्णिक्, ७, १०-११ ककुप्, ९, १२ पुरउष्णिक् ।**

**इन्द्राय साम गायत विप्राय बृहते बृहत् ।**

**धर्मकृते विपश्चिते पनस्यवे ॥१॥**

इन्द्राय । साम । गायत । विप्राय । बृहते । बृहत् ॥

धर्म॰कृते । विपः॰चिते । पनस्यवे ॥१॥

**त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः ।**

**विश्वकर्मा विश्वदेवो महाँ ऽअसि ॥२॥**

त्वम् । इन्द्र । अभि॰भूः । असि । त्वम् । सूर्यम् । अरोचयः ॥

विश्व॰कर्मा । विश्व॰देवः । महान् । असि ॥२॥

**विभ्राजञ्ज्योतिषा स्वरगच्छो रोचनं दिवः ।**

**देवास्त ऽइन्द्र सख्याय येमिरे ॥३॥**

वि॰भ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः ॥

देवाः । ते । इन्द्र । सख्याय । येमिरे ॥३॥

**एन्द्र नो गधि प्रियः सत्राजिदगोह्यः ।**

**गिरिर्न विश्वतस्पृथुः पतिर्दिवः ॥४॥**

आ । इन्द्र । नः । गधि । प्रियः । सत्रा॰जित् । अगोह्यः ॥

गिरिः । न । विश्वतः । पृथुः । पतिः । दिवः ॥४॥

अभि हि सत्य सोमपा ऽउभे बभूथ रोदसी ।
इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥५॥
अभि । हि । सत्य । सोम॰पाः । उभे इति । बभूथ । रोदसी इति ॥
इन्द्र । असि । सुन्वतः । वृधः । पतिः । दिवः ॥५॥

त्वं हि शश्वतीनामिन्द्र दर्त्ता पुरामसि ।
हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥६॥ (१)
त्वम् । हि । शश्वतीनाम् । इन्द्र । दर्त्ता । पुराम् । असि ॥
हन्ता । दस्योः । मनोः । वृधः । पतिः । दिवः ॥६॥

अधा हीन्द्र गिर्वण ऽउप त्वा कामान्महः ससृज्महे ।
उदेव यन्त ऽउदभिः ॥७॥
अध । हि । इन्द्र । गिर्वणः । उप । त्वा । कामान् । महः । ससृज्महे ॥
उदाऽइव । यन्तः । उद॰भिः ॥७॥

वार्ण त्वा यव्याभिर्वर्द्धन्ति शूर ब्रह्माणि ।
वावृध्वांसं चिदद्रिवो दिवेदिवे ॥८॥
वाः । न । त्वा । यव्याभिः । वर्द्धन्ति । शूर । ब्रह्माणि ॥
ववृध्वांसम् । चित् । अद्रि॰वः । दिवे॰दिवे ॥८॥

युञ्जन्ति हरी ऽइषिरस्य गाथयोरौ रथ ऽउरुयुगे ।
इन्द्रवाहा वचोयुजा ॥९॥
युञ्जन्ति । हरी इति । इषिरस्य । गाथया । उरौ । रथे । उरु॰युगे ॥
इन्द्र॰वाहा । वचः॰युजा ॥९॥

त्वं न॑ ऽइन्द्रा भ॑रँ ऽओजो॑ नृम्णं श॑तक्रतो विचर्षणे ।
आ वीरं पृ॑तनाषह॑म् ॥१०॥
त्वम् । नः । इन्द्र । आ । भर । ओजः । नृम्णम् । शतक्रतो इति॑ शत॰क्रतो । वि॰चर्षणे ॥
आ । वीरम् । पृतना॰सह॑म् ॥१०॥

त्वं हि नः॑ पिता व॑सो त्वं माता श॑तक्रतो बभूवि॑थ ।
अधा॑ ते सुम्नमी॑महे ॥११॥
त्वम् । हि । नः । पिता । वसो इति॑ । त्वम् । माता । शतक्रतो इति॑ शत॰क्रतो । बभूवि॑थ ॥
अध॑ । ते । सुम्नम् । ईमहे ॥११॥

त्वां शु॑ष्मिन्पुरुहूत वाजयन्तमुप॑ ब्रुवे शतक्रतो ।
स नो॑ रास्व सुवीर्य॑म् ॥१२॥ (२) [ १३४० ]
त्वाम् । शुष्मिन् । पुरु॰हूत । वाजयन्त॑म् । उप॑ । ब्रुवे । शतक्रतो इति॑ शत॰क्रतो ॥
सः । नः । रास्व । सु॰वीर्य॑म् ॥१२॥

# ( ९९ )

८ नृमेध आङ्गिरसः । इन्द्रः । प्रगाथः = ( विषमा बृहती, समा सतोबृहती ) ।

त्वामिदा ह्यो नरोऽपी॑प्यन्वज्रिन्भूर्ण॑यः ।
स ऽइन्द्र स्तोम॑वाहसामिह श्रुध्युप स्वस॑रमा ग॑हि ॥१॥
त्वाम् । इदा । ह्यः । नरः । अपी॑प्यन् । वज्रिन् । भूर्ण॑यः ॥
सः । इन्द्र । स्तोम॑॰वाहसाम् । इह । श्रुधि । उप॑ । स्वस॑रम् । आ । गहि ॥१॥

मत्स्वा॑ सुशिप्र हरिवस्तदी॑महे त्वे ऽआ भू॑षन्ति वेधस॑ः ।
तव श्रवां॑स्युपमान्युक्थ्या॑ सुतेष्वी॑न्द्र गिर्वणः ॥२॥
मत्स्व॑ । सु॰शिप्र । हरि॰वः । तत् । ईमहे । त्वे इति॑ । आ । भूषन्ति । वेधस॑ः ॥
तव॑ । श्रवां॑सि । उप॰मानि॑ । उक्थ्या॑ । सुतेषु । इन्द्र । गिर्वणः ॥२॥

श्रायन्तइव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमान ऽओजसा प्रति भागं न दीधिम ॥३॥
श्रायन्तःऽइव । सूर्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत ॥
वसूनि । जाते । जनमाने । ओजसा । प्रति । भागम् । न । दीधिम ॥३॥

अनर्शरातिं वसुदामुप स्तुहि भद्रा ऽइन्द्रस्य रातयः ।
सो ऽअस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥४॥
अनर्श०रातिम् । वसु०दाम् । उप । स्तुहि । भद्राः । इन्द्रस्य । रातयः ॥
सः । अस्य । कामम् । विधतः । न । रोषति । मनः । दानाय । चोदयन् ॥४॥

त्वमिन्द्र प्रतूर्त्तिष्वभि विश्वा ऽअसि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥५॥
त्वम् । इन्द्र । प्र०तूर्त्तिषु । अभि । विश्वाः । असि । स्पृधः ॥
अशस्ति०हा । जनिता । विश्व०तूः । असि । त्वम् । तूर्य । तरुष्यतः ॥५॥

अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥६॥
अनु । ते । शुष्मम् । तुरयन्तम् । ईयतुः । क्षोणी इति ।
शिशुम् । न । मातरा ॥ विश्वाः । ते । स्पृधः ।
श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि ॥६॥

इत ऽऊती वो ऽअजरं प्रहेतारमप्रहितम् ।
आशुं जेतारं हेतारं रथीतममतूर्त्तं तुग्र्यावृधम् ॥७॥
इतः । ऊती । वः । अजरम् । प्र०हेतारम् । अप्र०हितम् ॥
आशुम् । जेतारम् । हेतारम् । रथि०तमम् । अतूर्त्तम् । तुग्र्य०वृधम् ॥७॥

इष्कर्त्तारमनिष्कृतं सहस्कृतं शतमूतिं शतक्रतुम् ।
समानमिन्द्रमवसे हवामहे वसवानं वसूजुवम् ॥८॥ (३) [ १३४८ ]
इष्कर्त्तारम् । अनिः२कृतम् । सहः२कृतम् । शतम्०ऊतिम् । शत०क्रतुम् ॥
समानम् । इन्द्रम् । अवसे । हवामहे । वसवानम् । वसु०जुवम् ॥८॥

## ( १०० )

(१२) १-३, ६-१२ नेमो भार्गवः, ४-५ इन्द्रः । इन्द्रः, ८ सुपर्ण, ९ वज्रो वा, १०-११ वाक् । त्रिष्टुप्, ६ जगती, ७-९ अनुष्टुप् ।

अयं त ऽएमि तन्वा पुरस्ताद्विश्वे देवा ऽअभि मा यन्ति पश्चात् ।
यदा मह्यं दीधरो भागमिन्द्रादिन्मया कृणवो वीर्याणि ॥१॥
अयम् । ते । एमि । तन्वा । पुरस्तात् । विश्वे । देवाः । अभि ।
मा । यन्ति । पश्चात् ॥ यदा । मह्यम् । दीधरः । भागम् ।
इन्द्र । आत् । इत् । मया । कृणवः । वीर्याणि ॥१॥

दधामि ते मधुनो भक्षमग्रे हितस्ते भागः सुतो ऽअस्तु सोमः ।
असश्च त्वं दक्षिणतः सखा मे ऽधा वृत्राणि जङ्घनाव भूरि ॥२॥
दधामि । ते । मधुनः । भक्षम् । अग्रे । हितः । ते । भागः ।
सुतः । अस्तु । सोमः ॥ असः । च । त्वम् । दक्षिणतः ।
सखा । मे । अध । वृत्राणि । जङ्घनाव । भूरि ॥२॥

प्र सु स्तोमं भरत वाजयन्त ऽइन्द्राय सत्यं यदि सत्यमस्ति ।
नेन्द्रो ऽअस्तीति नेम ऽउ त्व ऽआह क ऽईं ददर्श कमभि ष्टवाम ॥३॥
प्र । सु । स्तोमम् । भरत । वाज०यन्तः । इन्द्राय । सत्यम् । यदि ।
सत्यम् । अस्ति ॥ न । इन्द्रः । अस्ति । इति । नेमः । ऊँ इति ।
त्वः । आह । कः । ईम् । ददर्श । कम् । अभि । स्तवाम ॥३॥

अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना ।
ऋतस्य मा प्रदिशो वर्द्धयन्त्यादर्दिरो भुवना दर्दरीमि ॥४॥
अयम् । अस्मि । जरितरिति । पश्य । मा । इह । विश्वा ।
जातानि । अभि । अस्मि । मह्ना ॥ ऋतस्य । मा ।
प्र०दिशः । वर्द्धयन्ति । आ०दर्दिरः । भुवना । दर्दरीमि ॥४॥

आ यन्मा वेना ऽअरुहन्नृतस्यँ ऽएकमासीनं हर्यतस्य पृष्ठे ।
मनश्चिन्मे हृद ऽआ प्रत्यवोचदचिक्रदञ्छिशुमन्तः सखायः ॥५॥
आ । यत् । मा । वेनाः । अरुहन् । ऋतस्य । एकम् ।
आसीनम् । हर्यतस्य । पृष्ठे ॥ मनः । चित् । मे । हृदे ।
आ । प्रति । अवोचत् । अचिक्रदन् । शिशु०मन्तः । सखायः ॥५॥

विश्वेत्ता ते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते ।
पारावतं यत्पुरुसंभृतं वस्वपावृणोः शरभाय ऽऋषिबन्धवे ॥६॥ (४)
विश्वा । इत् । ता । ते । सवनेषु । प्र०वाच्या । या । चकर्थ ।
मघ०वन् । इन्द्र । सुन्वते ॥ पारावतम् । यत् । पुरु०संभृतम् ।
वसु । अप०अवृणोः । शरभाय । ऋषि०बन्धवे ॥६॥

प्र नूनं धावता पृथङ्नेह यो वो ऽअवावरीत् ।
नि षीं वृत्रस्य मर्मणि वज्रमिन्द्रो ऽअपीपतत् ॥७॥
प्र । नूनम् । धावत । पृथक् । न । इह । यः ।
वः । अवावरीत् ॥ नि । सीम् । वृत्रस्य ।
मर्मणि । वज्रम् । इन्द्रः । अपीपतत् ॥७॥

मनोजवा ऽअयमान ऽआयसीमतरत्पुरम् ।
दिवं सुपर्णो गत्वाय सोमं वज्रिण ऽआभरत् ॥८॥

मनः॰जवाः । अयमानः । आयसीम् । अतरत् । पुरम् ॥
दिवम् । सु॰पर्णः । गत्वाय । सोमम् । वज्रिणः । आ । अभरत् ॥८॥

**समुद्रे ऽअन्तः शयत ऽउद्गा वज्रो ऽअभीवृतः ।**
**भरन्त्यस्मै संयतः पुरःप्रस्रवणा बलिम् ॥९॥**
समुद्रे । अन्तरिति । शयते । उद्गा । वज्रः । अभि॰वृतः ॥
भरन्ति । अस्मै । सम्॰यतः । पुरः॰प्रस्रवणाः । बलिम् ॥९॥

**यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।**
**चतस्र ऽऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥१०॥**
यत् । वाक् । वदन्ती । अवि॰चेतनानि । राष्ट्री । देवानाम् ।
नि॰ससाद । मन्द्रा ॥ चतस्रः । ऊर्जम् । दुदुहे । पयांसि ।
क्व । स्वित् । अस्याः । परमम् । जगाम ॥१०॥

**देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।**
**सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥११॥**
देवीम् । वाचम् । अजनयन्त । देवाः । ताम् । विश्व॰रूपाः ।
पशवः । वदन्ति ॥ सा । नः । मन्द्रा । इषम् । ऊर्जम् । दुहाना ।
धेनुः । वाक् । अस्मान् । उप । सु॰स्तुता । आ । एतु ॥११॥

**सखे विष्णो वितरं वि क्रमस्व द्यौर्देहि लोकं वज्राय विष्कभे ।**
**हनाव वृत्रं रिणचाव सिन्धूनिन्द्रस्य यन्तु प्रसवे विसृष्टाः ॥१२॥ (५) [१३६०]**
सखे । विष्णो इति । वि॰तरम् । वि । क्रमस्व । द्यौः । देहि ।
लोकम् । वज्राय । वि॰स्कभे ॥ हनाव । वृत्रम् । रिणचाव ।
सिन्धून् । इन्द्रस्य । यन्तु । प्र॰सवे । वि॰सृष्टाः ॥१२॥

# ( १०१ )

१६ जमदग्निर्भार्गवः । मित्रावरुणौ, ५ मित्रावरुणादित्याः, ६ आदित्याः, ७-८ अश्विनौ, ९-१० वायुः, ११-१२ सूर्यः, १३ उषाः सूर्यप्रभावा, १४ पवमानः, १५-१६ गौः। १-२ प्रगाथः = (बृहती, सतोबृहती), ३ गायत्री, ४ सतोबृहती, ५-१३ प्रगाथः = (विषमा बृहती, समा सतोबृहती), १४-१६ त्रिष्टुप्।

ऋधगित्था स मर्त्यः शशमे देवतातये ।
यो नूनं मित्रावरुणावभिष्टय ऽआचक्रे हव्यदातये ॥१॥
ऋधक् । इत्था । सः । मर्त्यः । शशमे ।
देव०तातये ॥ यः । नूनम् । मित्रावरुणौ ।
अभिष्टये । आ०चक्रे । हव्य०दातये ॥१॥

वर्षिष्ठक्षत्रा ऽउरुचक्षसा नरा राजाना दीर्घश्रुत्तमा ।
ता बाहुता न दंसना रथर्यतः साकं सूर्यस्य रश्मिभिः ॥२॥
वर्षिष्ठ०क्षत्रौ । उरु०चक्षसा । नरा । राजाना ।
दीर्घश्रुत्०तमा ॥ ता । बाहुता । न । दंसना ।
रथर्यतः । साकम् । सूर्यस्य । रश्मि०भिः ॥२॥

प्र यो वां मित्रावरुणाजिरो दूतो ऽअद्रवत् ।
अयःशीर्षा मदेरघुः ॥३॥
प्र । यः । वाम् । मित्रावरुणा । अजिरः । दूतः । अद्रवत् ॥
अयः०शीर्षा । मदे०रघुः ॥३॥

न यः सम्पृच्छे न पुनर्हवीतवे न संवादाय रमते ।
तस्मान्नो ऽअद्य समृतेरुरुष्यतं बाहुभ्यां न ऽउरुष्यतम् ॥३॥

न । यः । सम्ऽपृच्छे । न । पुनः । हवीतवे । न ।
सम्ऽवादाय । रमते ॥ तस्मात् । नः । अद्य । सम्ऽऋतेः ।
उरुष्यतम् । बाहुऽभ्याम् । नः । उरुष्यतम् ॥४॥

**प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।**
**वरूथ्यं१ वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥५॥ (६)**
प्र । मित्राय । प्र । अर्यम्णे । सचथ्यम् ।
ऋतवसो इत्यृतऽवसो ॥ वरूथ्यम् । वरुणे ।
छन्द्यम् । वचः । स्तोत्रम् । राजऽसु । गायत ॥५॥

**ते हिन्विरे ऽअरुणं जेन्यं वस्वेकं पुत्रं तिसृणाम् ।**
**ते धामान्यमृता मर्त्यानामदब्धा ऽअभि चक्षते ॥६॥**
ते । हिन्विरे । अरुणम् । जेन्यम् । वसु । एकम् ।
पुत्रम् । तिसृणाम् ॥ ते । धामानि । अमृताः ।
मर्त्यानाम् । अदब्धाः । अभि । चक्षते ॥६॥

**आ मे वचांस्युद्यता द्युमत्तमानि कर्त्वा ।**
**उभा यातं नासत्या सजोषसा प्रति हव्यानि वीतये ॥७॥**
आ । मे । वचांसि । उत्ऽयता । द्युमत्ऽतमानि ।
कर्त्वा ॥ उभा । यातम् । नासत्या ।
सऽजोषसा । प्रति । हव्यानि । वीतये ॥७॥

**रातिं यद्वामरक्षसं हवामहे युवाभ्यां वाजिनीवसू ।**
**प्राचीं होत्रां प्रतिरन्तावितं नरा गृणाना जमदग्निना ॥८॥**
रातिम् । यत् । वाम् । अरक्षसम् । हवामहे । युवाभ्याम् ।
वाजिनीवसू इति वाजिनीऽवसू ॥ प्राचीम् । होत्राम् ।
प्रऽतिरन्तौ । इतम् । नरा । गृणाना । जमत्ऽअग्निना ॥८॥

आ नो यज्ञं दिविस्पृशं वायो याहि सुमन्मभिः ।
अन्तः पवित्र उपरि श्रीणानोऽयं शुक्रो अयामि ते ॥९॥
आ । नः । यज्ञम् । दिवि०स्पृशम् । वायो इति ।
याहि । सुमन्म०भिः ॥ अन्तरिति । पवित्रे । उपरि ।
श्रीणानः । अयम् । शुक्रः । अयामि । ते ॥९॥

वेत्यध्वर्युः पथिभी रजिष्ठैः प्रति हव्यानि वीतये ।
अधा नियुत्व उभयस्य नः पिब शुचिं सोमं गवाशिरम् ॥१०॥ (७)
वेति । अध्वर्युः । पथि०भिः । रजिष्ठैः । प्रति ।
हव्यानि । वीतये ॥ अध । नियुत्वः । उभयस्य ।
नः । पिब । शुचिम् । सोमम् । गो०आशिरम् ॥१०॥

बण्महाँ असि सूर्य बळादित्य महाँ असि ।
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असि ॥११॥
बट् । महान् । असि । सूर्य । बट् । आदित्य ।
महान् । असि ॥ महः । ते । सतः । महिमा ।
पनस्यते । अद्धा । देव । महान् । असि ॥११॥

बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥१२॥
बट् । सूर्य । श्रवसा । महान् । असि । सत्रा । देव ।
महान् । असि ॥ मह्ना । देवानाम् । असुर्यः ।
पुरः२हितः । वि०भु । ज्योतिः । अदाभ्यम् ॥१२॥

इयं या नीच्यर्किणी रूपा रोहिण्या कृता ।
चित्रेव प्रत्यदर्श्यायत्यन्तर्दशसु बाहुषु ॥१३॥

इयम् । या । नीचीं । अर्किणीं । रूपा ।
रोहिण्या । कृता ॥ चित्राऽइंव । प्रतिं । अदर्शि ।
आ०यती । अन्तः । दश०सु । बाहुषु ॥१३॥

प्रजा हं तिस्रो ऽअत्यायमीयुर्न्यंन्या ऽअर्कमभितो विविश्रे ।
बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित ऽआ विवेश ॥१४॥
प्र०जाः । ह । तिस्रः । अति०आयम् । ईयुः । नि । अन्याः ।
अर्कम् । अभितः । विविश्रे ॥ बृहत् । ह । तस्थौ । भुवनेषु ।
अन्तरिति । पवमानः । हरितः । आ । विवेश ॥१४॥

माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥१५॥
माता । रुद्राणाम् । दुहिता । वसूनाम् । स्वसा । आदित्यानाम् ।
अमृतस्य । नाभिः ॥ प्र । नु । वोचम् । चिकितुषे ।
जनाय । मा । गाम् । अनागाम् । अदितिम् । वधिष्ट ॥१५॥

वचोविदं वाचमुदीरयन्तीं विश्वाभिर्धीभिरुपतिष्ठमानाम् ।
देवीं देवेभ्यः पर्येयुषीं गामा मावृक्त मर्त्यो दभ्रचेताः ॥१६॥ (८) [ १३७६ ]
वचः२विदम् । वाचम् । उत्०ईरयन्तीम् । विश्वाभिः । धीभिः ।
उप०तिष्ठमानाम् ॥ देवीम् । देवेभ्यः । परि । आ०ईयुषीम् ।
गाम् । आ । मा । अवृक्त । मर्त्यः । दभ्र०चेताः ॥१६॥

## ( १०२ )

२२ भार्गवः प्रयोगः, अग्निर्बार्हस्पत्यः, पावको वा, सहसः पुत्रौ गृहपति-यविष्ठौ तयोर्वान्यतरः । अग्निः । गायत्री ।

त्वमग्ने बृहद्वयो दधासि देव दाशुषे ।
कविर्गृहपतिर्युवा ॥१॥

त्वम् । अग्ने । बृहत् । वयः । दधासि । देव । दाशुषे ॥
कविः । गृह॰पतिः । युवा ॥१॥

**स न ऽईळानया सह देवाँ ऽअग्ने दुवस्युवा ।**
**चिकिद्विभानवा वह ॥२॥**
सः । नः । ईळानया । सह । देवान् । अग्ने । दुवस्युवा ॥
चिकित् । विभानो इति वि॰भानो । आ । वह ॥२॥

**त्वया ह स्विद्युजा वयं चोदिष्ठेन यविष्ठ्य ।**
**अभि ष्मो वाजसातये ॥३॥**
त्वया । ह । स्वित् । युजा । वयम् । चोदिष्ठेन । यविष्ठ्य ॥
अभि । स्मः । वाज॰सातये ॥३॥

**और्वभृगुवच्छुचिमप्नवानवदा हुवे ।**
**अग्निं समुद्रवाससम् ॥४॥**
और्वभृगु॰वत् । शुचिम् । अप्नवान॰वत् । आ । हुवे ॥
अग्निम् । समुद्र॰वाससम् ॥४॥

**हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः ।**
**अग्निं समुद्रवाससम् ॥५॥ ( ९ )**
हुवे । वात॰स्वनम् । कविम् । पर्जन्य॰क्रन्द्यम् । सहः ।
अग्निम् । समुद्र॰वाससम् ॥५॥

**आ सवं सवितुर्यथा भगस्येव भुजिं हुवे ।**
**अग्निं समुद्रवाससम् ॥६॥**

आ । सवम् । सवितुः । यथा । भर्गस्यऽइव । भुजिम् । हुवे ॥
अग्निम् । समुद्र०वाससम् ॥६॥

**अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।**
**अच्छा नप्त्रे सहस्वते ॥७॥**
अग्निम् । वः । वृधन्तम् । अध्वराणाम् । पुरु०तमम् ॥
अच्छ । नप्त्रे । सहस्वते ॥७॥

**अयं यथा न ऽआभुवत्त्वष्टा रूपेव तक्ष्या ।**
**अस्य क्रत्वा यशस्वतः ॥८॥**
अयम् । यथा । नः । आ०भुवत् । त्वष्टा । रूपाऽइव । तक्ष्या ॥
अस्य । क्रत्वा । यशस्वतः ॥८॥

**अयं विश्वा ऽअभि श्रियोऽग्नि र्देवेषु पत्यते ।**
**आ वाजैरुप नो गमत् ॥९॥**
अयम् । विश्वाः । अभि । श्रियः । अग्निः । देवेषु । पत्यते ॥
आ । वाजैः । उप । नः । गमत् ॥९॥

**विश्वेषामिह स्तुहि होतॄणां यशस्तमम् ।**
**अग्निं यज्ञेषु पूर्व्यम् ॥१०॥ (१०)**
विश्वेषाम् । इह । स्तुहि । होतॄणाम् । यशःऽतमम् ॥
अग्निम् । यज्ञेषु । पूर्व्यम् ॥१०॥

**शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा ।**
**दीदाय दीर्घश्रुत्तमः ॥११॥**

शीरम् । पावक०शोचिषम् । ज्येष्ठः । यः । दमेषु । आ ॥
दीदाय । दीर्घश्रुत्०तमः ॥११॥

**तमर्वन्तं न सानसिं गृणीहि विप्र शुष्मिणम् ।**
**मित्रं न यातयज्जनम् ॥१२॥**
तम् । अर्वन्तम् । न । सानसिम् । गृणीहि । विप्र । शुष्मिणम् ॥
मित्रम् । न । यातयत्०जनम् ॥१२॥

**उप त्वा जामयो गिरो देदिशती र्हविष्कृतः ।**
**वायोरनीके ऽअस्थिरन् ॥१३॥**
उप । त्वा । जामयः । गिरः । देदिशतीः । हविः२कृतः ॥
वायोः । अनीके । अस्थिरन् ॥१३॥

**यस्य त्रिधात्ववृतं बर्हिस्तस्थावसंदिनम् ।**
**आपश्चिन्नि दधा पदम् ॥१४॥**
यस्य । त्रि०धातु । अवृतम् । बर्हिः । तस्थौ । असम्०दिनम् ॥
आपः । चित् । नि । दध । पदम् ॥१४॥

**पदं देवस्य मीळ्हुषोऽनाधृष्टाभिरूतिभिः ।**
**भद्रा सूर्यइवोपदृक् ॥१५॥ ( ११ )**
पदम् । देवस्य । मीळ्हुषः । अनाधृष्टाभिः । ऊति०भिः ॥
भद्रा । सूर्यःऽइव । उप०दृक् ॥१५॥

**अग्ने घृतस्य धीतिभिस्तेपानो देव शोचिषा ।**
**आ देवान्वक्षि यक्षि च ॥१६॥**

अग्ने । घृतस्य । धीति०भिः । तेपानः । देव । शोचिषा ॥
आ । देवान् । वक्षि । यक्षि । च ॥१६॥

**तं त्वाजनन्त मातरः कविं देवासो ऽअङ्गिरः ।**
**हव्यवाहममर्त्यम् ॥१७॥**
तम् । त्वा । अजनन्त । मातरः । कविम् । देवासः । अङ्गिरः ॥
हव्य०वाहम् । अमर्त्यम् ॥१७॥

**प्रचेतसं त्वा कवेऽग्ने दूतं वरेण्यम् ।**
**हव्यवाहं नि षेदिरे ॥१८॥**
प्र०चेतसम् । त्वा । कवे । अग्ने । दूतम् । वरेण्यम् ॥
हव्य०वाहम् । नि । सेदिरे ॥१८॥

**नहि मे ऽअस्त्यन्या न स्वधितिर्वनन्वति ।**
**अथैतादृग्भरामि ते ॥१९॥**
नहि । मे । अस्ति । अन्या । न । स्व०धितिः । वनन्०वति ॥
अथ । एतादृक् । भरामि । ते ॥१९॥

**यदग्ने कानि कानि चिदा ते दारूणि दध्मसि ।**
**ता जुषस्व यविष्ठ्य ॥२०॥**
यत् । अग्ने । कानि । कानि । चित् । आ । ते । दारूणि । दध्मसि ॥
ता । जुषस्व । यविष्ठ्य ॥२०॥

**यदत्त्युपजिह्विका यद्वम्रो ऽअतिसर्पति ।**
**सर्वं तदस्तु ते घृतम् ॥२१॥**

यत् । अत्ति । उप॰जिह्विका । यत् । वम्रः । अति॰सर्पति ॥
सर्वम् । तत् । अस्तु । ते । घृतम् ॥२१॥

**अग्निमिन्धानो मनसा धियं सचेत मर्त्यः ।**
**अग्निमीधे विवस्वभिः ॥२२॥ (१२)**　　[ १३९८ ]
अग्निम् । इन्धानः । मनसा । धियम् । सचेत । मर्त्यः ॥
अग्निम् । ईधे । विवस्व॰भिः ॥२२॥

# ( १०३ )

**१४ सोमरिः काण्वः । अग्निः, १४ अग्नामरुतः । बृहती, ५ विराड्रूपा, ७, ९, ११, १३ सतोबृहती, ८, १२ ककुप्, १० ह्रसीयसी, १४ अनुष्टुप् ।**

**अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।**
**उपो षु जातमार्यस्य वर्द्धनमग्निं नक्षन्त नो गिरः ॥१॥**
अदर्शि । गातुवित्॰तमः । यस्मिन् । व्रतानि ।
आ॰दधुः ॥ उपो इति । सु । जातम् । आर्यस्य ।
वर्द्धनम् । अग्निम् । नक्षन्त । नः । गिरः ॥१॥

**प्र दैवोदासो ऽअग्निर्देवाँ ऽअच्छा न मज्मना ।**
**अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ॥२॥**
प्र । दैवः२दासः । अग्निः । देवान् । अच्छ ।
न । मज्मना ॥ अनु । मातरम् । पृथिवीम् ।
वि । ववृते । तस्थौ । नाकस्य । सानवि ॥२॥

**यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।**
**सहस्रसां मेधसाताविव त्मनाग्निं धीभिः सपर्यत ॥३॥**

यस्मात् । रेजन्त । कृष्टयः । चर्कृत्यानि ।
कृण्वतः ॥ सहस्र०साम् । मेधसातौऽइव ।
त्मना । अग्निम् । धीभिः । सपर्यत ॥३॥

**प्र यं राये निनीषसि मर्तो यस्ते वसो दाशत् ।**
**स वीरं धत्ते ऽअग्न ऽउक्थशंसिनं त्मना सहस्रपोषिणम् ॥४॥**
प्र । यम् । राये । निनीषसि । मर्तः । यः । ते ।
वसो इति । दाशत् ॥ सः । वीरम् । धत्ते । अग्ने ।
उक्थ०शंसिनम् । त्मना । सहस्र०पोषिणम् ॥४॥

**स दृळ्हे चिदभि तृणत्ति वाजमर्वता स धत्ते ऽअक्षिति श्रवः ।**
**त्वे देवत्रा सदा पुरूवसो विश्वा वामानि धीमहि ॥५॥ (१३)**
सः । दृळ्हे । चित् । अभि । तृणत्ति । वाजम् । अर्वता ।
सः । धत्ते । अक्षिति । श्रवः ॥ त्वे इति । देव०त्रा । सदा ।
पुरुवसो इति पुरु०वसो । विश्वा । वामानि । धीमहि ॥५॥

**यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।**
**मधो न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्यग्नये ॥६॥**
यः । विश्वा । दयते । वसु । होता । मन्द्रः ।
जनानाम् ॥ मधोः । न । पात्रा । प्र०थमानि ।
अस्मै । प्र । स्तोमाः । यन्ति । अग्नये ॥६॥

**अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यन्ते देवयवः ।**
**उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥७॥**
अश्वम् । न । गीःऽभिः । रथ्यम् । सु०दानवः ।
मर्मृज्यन्ते । देव०यवः ॥ उभे इति । तोके इति ।
तनये । दस्म । विश्पते । पर्षि । राधः । मघोनाम् ॥७॥

**प्र मंहिष्ठाय गायत ऽऋताव्नें बृहते शुक्रशोचिषे ।**

**उपस्तुतासो ऽअग्नयें ॥८॥**

प्र । मंहिष्ठाय । गायत । ऋत॰व्नें । बृहते । शुक्र॰शोचिषे ॥

उप॰स्तुतासः । अग्नयें ॥८॥

**आ वंसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।**

**कुविन्नों ऽअस्य सुमतिर्नवीयस्यच्छा वाजेभिरागमत् ॥९॥**

आ । वंसते । मघ॰वा । वीर॰वत् । यशः । सम्॰इद्धः ।

द्युम्नी । आ॰हुतः ॥ कुवित् । नः । अस्य । सु॰मतिः ।

नवीयसी । अच्छ । वाजेभिः । आ॰गमत् ॥९॥

**प्रेष्ठमु प्रियाणां स्तुह्यासावातिथिम् ।**

**अग्निं रथानां यमम् ॥१०॥ (१४)**

प्रेष्ठम् । ऊँ इति । प्रियाणाम् । स्तुहि । आसाव । अतिथिम् ॥

अग्निम् । रथानाम् । यमम् ॥१०॥

**उदिता यो निदिता वेदिता वस्वा यज्ञियो ववर्त्तति ।**

**दुष्टरा यस्य प्रवणे नोर्मयो धिया वाजं सिषासतः ॥११॥**

उत्॰ईता । यः । नि॰दिता । वेदिता । वसु । आ ।

यज्ञियः । ववर्त्तति ॥ दुस्तराः । यस्य । प्रवणे ।

न । ऊर्मयः । धिया । वाजम् । सिसासतः ॥११॥

**मा नो हृणीतामतिथिर्वसुरग्निः पुरुप्रशस्त ऽएषः ।**

**यः सुहोता स्वध्वरः ॥१२॥**

मा । नः । हृणीताम् । अतिथिः । वसुः । अग्निः । पुरु॰प्रशस्तः । एषः ॥

यः । सु॰होता । सु॰अध्वरः ॥१२॥

मो ते रिषन्ये ऽअच्छोक्तिभिर्वसोऽग्ने केभिश्चिदेवैः ।
कीरिश्चिद्धि त्वामीट्टे दूत्याय रातहव्यः स्वध्वरः ॥१३॥
मो इति । ते । रिषन् । ये । अच्छोक्तिऽभिः । वसो इति ।
अग्ने । केभिः । चित् । एवैः ॥ कीरिः । चित् । हि ।
त्वाम् । ईट्टे । दूत्याय । रातऽहव्यः । सुऽअध्वरः ॥१३॥

आग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये ।
सोभर्या ऽउप सुष्टुतिं मादयस्व स्वर्णरे ॥१४॥ (१५) [ १४१२ ]
आ । अग्ने । याहि । मरुत्ऽसखा । रुद्रेभिः । सोमऽपीतये ॥
सोभर्याः । उप । सुऽस्तुतिम् । मादयस्व । स्वःऽनरे ॥१४॥

॥ इत्यष्टमं मण्डलम् ॥

# ॥ अथ नवमं मण्डलम् ॥

(१) [ अथ प्रथमोऽनुवाकः ॥१॥ सूक्तानि १-२४

१० मधुच्छन्दा वैश्वामित्रः । पवमानः सोमः । गायत्री ।

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।**

**इन्द्राय पातवे सुतः ॥१॥**

स्वादिष्ठया । मदिष्ठया । पवस्व । सोम । धारया ॥

इन्द्राय । पातवे । सुतः ॥१॥

**रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् ।**

**द्रुणा सधस्थमासदत् ॥२॥**

रक्षः२हा । विश्व०चर्षणिः । अभि । योनिम् । अयः२हतम् ॥

द्रुणा । सध०स्थम् । आ । असदत् ॥२॥

**वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः ।**

**पर्षि राधो मघोनाम् ॥३॥**

वरिवः२धातमः । भव । मंहिष्ठः । वृत्रहन्०तमः ॥

पर्षि । राधः । मघोनाम् ॥३॥

**अभ्यर्ष महानां देवानां वीतिमन्धसा ।**

**अभि वाजमुत श्रवः ॥४॥**

अभि । अर्ष । महानाम् । देवानाम् । वीतिम् । अन्धसा ॥

अभि । वाजम् । उत । श्रवः ॥४॥

**त्वामच्छा चरामसि तदिदर्थं दिवेदिवे ।**

**इन्दो त्वे न ऽआशसः ॥५॥ (१६)**

त्वाम् । अच्छ॑ । च॒रा॒म॒सि॒ । तत् । इत् । अर्थ॑म् । दि॒वे॒ऽदि॑वे ॥
इन्दो॒ इति॑ । त्वे इति॑ । न॒ः । आ॒ऽशस॑ः ॥५॥

पु॒नाति॑ ते परि॒स्रुत॒ं सोम॒ं सूर्य॑स्य दुहि॒ता ।
वारे॑ण॒ शश्व॑ता॒ तना॑ ॥६॥
पु॒नाति॑ । ते॒ । प॒रि॒ऽस्रुत॑म् । सोम॑म् । सूर्य॑स्य । दु॒हि॒ता ॥
वारे॑ण । शश्व॑ता । तना॑ ॥६॥

त॒मी॒मण्वी॑ः स॒मर्य ऽआ गृ॒भ्णन्ति॒ योष॑णो॒ दश॑ ।
स्वसा॑र॒ः पार्ये॑ दि॒वि ॥७॥
तम् । ई॒म् । अ॒ण्वी॑ः । स॒ऽम॒र्ये । आ । गृ॒भ्णन्ति॑ । योष॑णः । दश॑ ॥
स्वसा॑रः । पार्ये॑ । दि॒वि ॥७॥

तमी॑ हिन्वन्त्य॒ग्रुवो॒ धम॑न्ति बाकु॒रं दृति॑म् ।
त्रि॒धातु॑ वा॒र॒णं मधु॑ ॥८॥
तम् । ई॒म् । हि॒न्व॒न्ति॒ । अ॒ग्रुव॑ः । धम॑न्ति । बा॒कुर॑म् । दृति॑म् ॥
त्रि॒ऽधातु॑ । वा॒र॒णम् । मधु॑ ॥८॥

अ॒भी॒३॒॑मम॑घ्न्या ऽउ॒त श्री॒णन्ति॑ धे॒नव॑ः॒ शिशु॑म् ।
सोम॒मिन्द्रा॑य॒ पात॑वे ॥९॥
अ॒भि । इ॒मम् । अघ्न्या॑ः । उ॒त । श्री॒णन्ति॑ । धे॒नव॑ः । शिशु॑म् ॥
सोम॑म् । इन्द्रा॑य । पात॑वे ॥९॥

अ॒स्येदिन्द्रो॒ मदे॒ष्वा विश्वा॑ वृ॒त्राणि॑ जिघ्नते ।
शूरो॑ म॒घा च॑ मंहते ॥१०॥ (१७) [ १४२२ ]

अस्य । इत् । इन्द्रः । मदेषु । आ । विश्वा । वृत्राणि । जिघ्नते ॥
शूरः । मघा । च । मंहते ॥१०॥

# ( २ )

**१० मेधातिथिः काण्वः । पवमानः सोमः । गायत्री ।**

**पवस्व देववीरति पवित्रं सोम रंह्या ।**
**इन्द्रमिन्दो वृषा विश ॥१॥**
पवस्व । देव॰वीः । अति । पवित्रम् । सोम । रंह्या ॥
इन्द्रम् । इन्दो इति । वृषा । आ । विश ॥१॥

**आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः ।**
**आ योनिं धर्णसिः सदः ॥२॥**
आ । वच्यस्व । महि । प्सरः । वृषा । इन्दो इति । द्युम्नवत्॰तमः ॥
आ । योनिम् । धर्णसिः । सदः ॥२॥

**अधुक्षत प्रियं मधु धारा सुतस्य वेधसः ।**
**अपो वसिष्ट सुक्रतुः ॥३॥**
अधुक्षत । प्रियम् । मधु । धारा । सुतस्य । वेधसः ॥
अपः । वसिष्ट । सु॰क्रतुः ॥३॥

**महान्तं त्वा महीरन्वापो ऽअर्षन्ति सिन्धवः ।**
**यद्गोभिर्वासयिष्यसे ॥४॥**
महान्तम् । त्वा । महीः । अनु । आपः । अर्षन्ति । सिन्धवः ॥
यत् । गोभिः । वासयिष्यसे ॥४॥

**समुद्रो ऽअप्सु मामृजे विष्टम्भो धरुणो दिवः ।**

**सोमः पवित्रे ऽअस्मयुः ॥५॥ ( १८ )**

समुद्रः । अप्ऽसु । ममृजे । विष्टम्भः । धरुणः । दिवः ॥

सोमः । पवित्रे । अस्मऽयुः ॥५॥

**अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।**

**सं सूर्येण रोचते ॥६॥**

अचिक्रदत् । वृषा । हरिः । महान् । मित्रः । न । दर्शतः ॥

सम् । सूर्येण । रोचते ॥६॥

**गिरस्त ऽइन्द ऽओजसा मर्मृज्यन्ते ऽअपस्युवः ।**

**याभिर्मदाय शुम्भसे ॥७॥**

गिरः । ते । इन्दो इति । ओजसा । मर्मृज्यन्ते । अपस्युवः ॥

याभिः । मदाय । शुम्भसे ॥७॥

**तं त्वा मदाय घृष्वय ऽउ लोककृत्नुमीमहे ।**

**तव प्रशस्तयो महीः ॥८॥**

तम् । त्वा । मदाय । घृष्वये । ऊँ इति । लोकऽकृत्नुम् । ईमहे ॥

तव । प्रऽशस्तयः । महीः ॥८॥

**अस्मभ्यमिन्दविन्द्रयुर्मध्वः पवस्व धारया ।**

**पर्जन्यो वृष्टिमाँइव ॥९॥**

अस्मभ्यम् । इन्दो इति । इन्द्रऽयुः । मध्वः । पवस्व । धारया ॥

पर्जन्यः । वृष्टिमान्ऽइव ॥९॥

गोषा ऽइन्दो नृषा ऽअस्यश्वसा वाजसा ऽउत ।
आत्मा यज्ञस्य पूर्व्यः ॥१०॥ (१९) [ १४३२ ]
गो॰साः । इन्दो इति । नृ॰साः । असि । अश्व॰साः । वाज॰साः । उत ॥
आत्मा । यज्ञस्य । पूर्व्यः ॥१०॥

# ( ३ )

१० आजीगर्तिः शुनः शेपः, कृत्रिमो वैश्वामित्रे देवरातः । पवमानः सोमः । गायत्री ।

एष देवो ऽअमर्त्त्यः पर्णवीरिव दीयति ।
अभि द्रोणान्यासदम् ॥१॥
एषः । देवः । अमर्त्त्यः । पर्णवीःऽइव । दीयति ॥
अभि । द्रोणानि । आ॰सदम् ॥१॥

एष देवो विपा कृतोऽति ह्वरांसि धावति ।
पवमानो ऽअदाभ्यः ॥२॥
एषः । देवः । विपा । कृतः । अति । ह्वरांसि । धावति ॥
पवमानः । अदाभ्यः ॥२॥

एष देवो विपन्युभिः पवमान ऽऋतायुभिः ।
हरि वाजाय मृज्यते ॥३॥
एषः । देवः । विपन्यु॰भिः । पवमानः । ऋतयु॰भिः ॥
हरिः । वाजाय । मृज्यते ॥३॥

एष विश्वानि वार्या शूरो यन्निव सत्वभिः ।
पवमानः सिषासति ॥४॥
एषः । विश्वानि । वार्या । शूरः । यन्॰इव । सत्व॰भिः ॥
पवमानः । सिसासति ॥४॥

**एष देवो रथर्यति पवमानो दशस्यति ।**
**आविष्कृणोति वग्वनुम् ॥५॥ ( २० )**
एषः । देवः । रथर्यति । पवमानः । दशस्यति ॥
आविः । कृणोति । वग्वनुम् ॥५॥

**एष विप्रैरभिष्टुतोऽपो देवो वि गाहते ।**
**दधद्रत्नानि दाशुषे ॥६॥**
एषः । विप्रैः । अभि॰स्तुतः । अपः । देवः । वि । गाहते ॥
दधत् । रत्नानि । दाशुषे ॥६॥

**एष दिवं वि धावति तिरो रजांसि धारया ।**
**पवमानः कनिक्रदत् ॥७॥**
एषः । दिवम् । वि । धावति । तिरः । रजांसि । धारया ॥
पवमानः । कनिक्रदत् ॥७॥

**एष दिवं व्यासरत्तिरो रजांस्यस्पृतः ।**
**पवमानः स्वध्वरः ॥८॥**
एषः । दिवम् । वि । आ । असरत् । तिरः । रजांसि । अस्पृतः ॥
पवमानः । सु॰अध्वरः ॥८॥

**एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।**
**हरिः पवित्रे अर्षति ॥९॥**
एषः । प्रत्नेन । जन्मना । देवः । देवेभ्यः । सुतः ॥
हरिः । पवित्रे । अर्षति ॥९॥

एष ऽउ स्य पुरुव्रतो जज्ञानो जनयन्निषः ।
धारया पवते सुतः ॥१०॥ (२१) [१४४२]

एषः । ऊँ इति । स्यः । पुरु॰व्रतः । जज्ञानः । जनयन् । इषः ॥
धारया । पवते । सुतः ॥१०॥

# (४)

१० हिरण्यस्तूप आङ्गिरसः । पवमानः सोमः । गायत्री ।

सना च सोम जेषि च पवमान महि श्रवः ।
अथा नो वस्यसस्कृधि ॥१॥
सना । च । सोम । जेषि । च । पवमान । महि । श्रवः ॥
अथ । नः । वस्यसः । कृधि ॥१॥

सना ज्योतिः सना स्व१र्विश्वा च सोम सौभगा ।
अथा नो वस्यसस्कृधि ॥२॥
सना । ज्योतिः । सना । स्वः । विश्वा । च । सोम । सौभगा ॥
अथ । नः । वस्यसः । कृधि ॥२॥

सना दक्षमुत क्रतुमप सोम मृधो जहि ।
अथा नो वस्यसस्कृधि ॥३॥
सना । दक्षम् । उत । क्रतुम् । अप । सोम । मृधः । जहि ॥
अथ । नः । वस्यसः । कृधि ॥३॥

पवीतारः पुनीतन सोममिन्द्राय पातवे ।
अथा नो वस्यसस्कृधि ॥४॥
पवीतारः । पुनीतन । सोमम् । इन्द्राय । पातवे ॥
अथ । नः । वस्यसः । कृधि ॥४॥

त्वं सूर्ये न ऽआ भज तव क्रत्वा तवोतिभिः ।
अथा नो वस्यसस्कृधि ॥५॥ ( २२ )
त्वम् । सूर्ये । नः । आ । भज । तव । क्रत्वा । तव । ऊति०भिः ॥
अथ । नः । वस्यसः । कृधि ॥५॥

तव क्रत्वा तवोतिभिर्ज्योक् पश्येम सूर्यम् ।
अथा नो वस्यसस्कृधि ॥६॥
तव । क्रत्वा । तव । ऊति०भिः । ज्योक् । पश्येम । सूर्यम् ॥
अथ । नः । वस्यसः । कृधि ॥६॥

अभ्यर्ष स्वायुध सोम द्विबर्हसं रयिम् ।
अथा नो वस्यसस्कृधि ॥७॥
अभि । अर्ष । सु०आयुध । सोम । द्वि०बर्हसम् । रयिम् ॥
अथ । नः । वस्यसः । कृधि ॥७॥

अभ्यर्षानपच्युतो रयिं समत्सु सासहिः ।
अथा नो वस्यसस्कृधि ॥८॥
अभि । अर्ष । अनप०च्युतः । रयिम् । समत्०सु । ससहिः ॥
अथ । नः । वस्यसः । कृधि ॥८॥

त्वां यज्ञैरवीवृधन्पवमान विधर्मणि ।
अथा नो वस्यसस्कृधि ॥९॥
त्वाम् । यज्ञैः । अवीवृधन् । पवमान । वि०धर्मणि ॥
अथ । नः । वस्यसः । कृधि ॥९॥

रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर ।
अथा नो वस्यसस्कृधि ॥१०॥ (२३) [ १४५२ ]
रयिम् । नः । चित्रम् । अश्विनम् । इन्दो इति । विश्व०आयुम् । आ । भर ॥
अथ । नः । वस्यसः । कृधि ॥१०॥

# ( ५ )

११ काश्यपोऽसितो देवलो वा । आप्रीसूक्तं = ( १ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयः । गायत्री, ८-११ अनुष्टुप् ।

समिद्धो विश्वतस्पतिः पवमानो वि राजति ।
प्रीणन्वृषा कनिक्रदत् ॥१॥
सम्०इद्धः । विश्वतः । पतिः । पवमानः । वि । राजति ॥
प्रीणन् । वृषा । कनिक्रदत् ॥१॥

तनूनपात्पवमानः शृङ्गे शिशानो ऽअर्षति ।
अन्तरिक्षेण रारजत् ॥२॥
तनूनपात् । पवमानः । शृङ्गे इति । शिशानः । अर्षति ॥
अन्तरिक्षेण । रारजत् ॥२॥

ईळेन्यः पवमानो रयिर्वि राजति द्युमान् ।
मधोर्धाराभिरोजसा ॥३॥
ईळेन्यः । पवमानः । रयिः । वि । राजति । द्यु०मान् ॥
मधोः । धाराभिः । ओजसा ॥३॥

बर्हिः प्राचीनमोजसा पवमानः स्तृणन्हरिः ।
देवेषु देव ऽईयते ॥४॥

बर्हिः । प्राचीनम् । ओजसा । पर्वमानः । स्तृणन् । हरिः ॥
देवेषु । देवः । ईयते ॥४॥

**उदातैर्जिहते बृहद् द्वारो देवीर्हिरण्ययीः ।**
**पर्वमानेन सुष्टुताः ॥५॥ ( २४ )**
उत् । आतैः । जिहते । बृहत् । द्वारः । देवीः । हिरण्ययीः ॥
पर्वमानेन । सु०स्तुताः ॥५॥

**सुशिल्पे बृहती मही पर्वमानो वृषण्यति ।**
**नक्तोषासा न दर्शते ॥६॥**
सुशिल्पे इति सु०शिल्पे । बृहती इति । मही इति । पर्वमानः । वृषण्यति ॥
नक्तोषसा । न । दर्शते इति ॥६॥

**उभा देवा नृचक्षसा होतारा दैव्या हुवे ।**
**पर्वमान ऽइन्द्रो वृषा ॥७॥**
उभा । देवा । नृ०चक्षसा । होतारा । दैव्या । हुवे ॥
पर्वमानः । इन्द्रः । वृषा ॥७॥

**भारती पर्वमानस्य सरस्वतीळा मही ।**
**इमं नो यज्ञमा गमन्तिस्रो देवीः सुपेशसः ॥८॥**
भारती । पर्वमानस्य । सरस्वती । इळा । मही ॥
इमम् । नः । यज्ञम् । आ । गमन् । तिस्रः । देवीः । सु०पेशसः ॥८॥

**त्वष्टारमग्रजां गोपां पुरोयावानमा हुवे ।**
**इन्दुरिन्द्रो वृषा हरिः पर्वमानः प्रजापतिः ॥९॥**

त्वष्टारम् । अग्र॰जाम् । गोपाम् । पुरः॰यावानम् । आ । हुवे ॥
इन्दुः । इन्द्रः । वृषा । हरिः । पवमानः । प्रजा॰पतिः ॥९॥

**वनस्पतिं पवमान मध्वा समङ्ग्धि धारया ।**
**सहस्रवल्शं हरितं भ्राजमानं हिरण्ययम् ॥१०॥**
वनस्पतिम् । पवमान । मध्वा । सम् । अङ्ग्धि । धारया ॥
सहस्र॰वल्शम् । हरितम् । भ्राजमानम् । हिरण्ययम् ॥१०॥

**विश्वे देवाः स्वाहाकृतिं पवमानस्या गत ।**
**वायुर्बृहस्पतिः सूर्योऽग्निरिन्द्रः सजोषसः ॥११॥ (२५)** [ १४६३ ]
विश्वे । देवाः । स्वाहा॰कृतिम् । पवमानस्य । आ । गत ॥
वायुः । बृहस्पतिः । सूर्यः । अग्निः । इन्द्रः । सजोषसः ॥११॥

## ( ६ )

९ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

**मन्द्रया सोम धारया वृषा पवस्व देवयुः ।**
**अव्यो वारेष्वस्मयुः ॥१॥**
मन्द्रया । सोम । धारया । वृषा । पवस्व । देव॰युः ॥
अव्यः । वारेषु । अस्म॰युः ॥१॥

**अभि त्यं मद्यं मदमिन्दविन्द्र इति क्षर ।**
**अभि वाजिनो अर्वतः ॥२॥**
अभि । त्यम् । मद्यम् । मदम् । इन्दो इति । इन्द्रः । इति । क्षर ॥
अभि । वाजिनः । अर्वतः ॥२॥

**अभि त्यं पूर्व्यं मदं सुवानो ऽअर्ष पवित्र ऽआ ।**
**अभि वाजमुत श्रवः ॥३॥**
अभि । त्यम् । पूर्व्यम् । मदम् । सुवानः । अर्ष । पवित्रे । आ ॥
अभि । वाजम् । उत । श्रवः ॥३॥

**अनु द्रप्सास ऽइन्दव ऽआपो न प्रवतासरन् ।**
**पुनाना ऽइन्द्रमाशत ॥४॥**
अनु । द्रप्सासः । इन्दवः । आपः । न । प्रवता । असरन् ॥
पुनानाः । इन्द्रम् । आशत ॥४॥

**यमत्यमिव वाजिनं मृजन्ति योषणो दश ।**
**वने क्रीळन्तमत्यविम् ॥५॥ ( २६ )**
यम् । अत्यम्ऽइव । वाजिनम् । मृजन्ति । योषणः । दश ॥
वने । क्रीळन्तम् । अति॰अविम् ॥५॥

**तं गोभिर्वृषणं रसं मदाय देववीतये ।**
**सुतं भराय सं सृज ॥६॥**
तम् । गोभिः । वृषणम् । रसम् । मदाय । देव॰वीतये ॥
सुतम् । भराय । सम् । सृज ॥६॥

**देवो देवाय धारयेन्द्राय पवते सुतः ।**
**पयो यदस्य पीपयत् ॥७॥**
देवः । देवाय । धारया । इन्द्राय । पवते । सुतः ॥
पयः । यत् । अस्य । पीपयत् ॥७॥

आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः ।
प्रत्नं नि पाति काव्यम् ॥८॥
आत्मा । यज्ञस्य । रंह्या । सुस्वाणः । पवते । सुतः ॥
प्रत्नम् । नि । पाति । काव्यम् ॥८॥

एवा पुनान ऽइन्द्रयुर्मदं मदिष्ठ वीतये ।
गुहा चिद्दधिषे गिरः ॥९॥ (२७) [ १४७२ ]
एव । पुनानः । इन्द्र०युः । मदम् । मदिष्ठ । वीतये ॥
गुहा । चित् । दधिषे । गिरः ॥९॥

## ( ७ )

९ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः ।
विदाना ऽअस्य योजनम् ॥१॥
असृग्रम् । इन्दवः । पथा । धर्मन् । ऋतस्य । सु०श्रियः ॥
विदानाः । अस्य । योजनम् ॥१॥

प्र धारा मध्वो ऽअग्रियो महीरपो वि गाहते ।
हविर्हविष्षु वन्द्यः ॥२॥
प्र । धारा । मध्वः । अग्रियः । महीः । अपः । वि । गाहते ॥
हविः । हविष्षु । वन्द्यः ॥२॥

प्र युजो वाचो ऽअग्रियो वृषाव चक्रदद्वने ।
सद्माभि सत्यो ऽअध्वरः ॥३॥
प्र । युजः । वाचः । अग्रियः । वृषा । अव । चक्रदत् । वने ॥
सद्म । अभि । सत्यः । अध्वरः ॥३॥

परि यत्काव्या कविर्नृम्णा वसानो ऽअर्षति ।
स्वर्वाजी सिषासति ॥४॥
परि । यत् । काव्या । कविः । नृम्णा । वसानः । अर्षति ॥
स्वः । वाजी । सिसासति ॥४॥

पवमानो ऽअभि स्पृधो विशो राजेव सीदति ।
यदीमृण्वन्ति वेधसः ॥५॥ ( २८ )
पवमानः । अभि । स्पृधः । विशः । राजाऽइव । सीदति ॥
यत् । ईम् । ऋण्वन्ति । वेधसः ॥५॥

अव्यो वारे परि प्रियो हरिर्वनेषु सीदति ।
रेभो वनुष्यते मती ॥६॥
अव्यः । वारे । परि । प्रियः । हरिः । वनेषु । सीदति ॥
रेभः । वनुष्यते । मती ॥६॥

स वायुमिन्द्रमश्विना साकं मदेन गच्छति ।
रणा यो ऽअस्य धर्मभिः ॥७॥
सः । वायुम् । इन्द्रम् । अश्विना । साकम् । मदेन । गच्छति ॥
रण । यः । अस्य । धर्म॰भिः ॥७॥

आ मित्रावरुणा भगं मध्वः पवन्त ऽऊर्मयः ।
विदाना ऽअस्य शक्मभिः ॥८॥
आ । मित्रावरुणा । भगम् । मध्वः । पवन्ते । ऊर्मयः ॥
विदानाः । अस्य । शक्म॰भिः ॥८॥

अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये ।
श्रवो वसूनि सं जितम् ॥९॥ ( २९ ) [ १४८१ ]
अस्मभ्यम् । रोदसी इति । रयिम् । मध्वः । वाजस्य । सातये ॥
श्रवः । वसूनि । सम् । जितम् ॥९॥

# ( ८ )

९ काश्यपोऽसितोदेवलो वा । पवमानः सोमः । गायत्री ।

एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् ।
वर्द्धन्तो अस्य वीर्यम् ॥१॥
एते । सोमाः । अभि । प्रियम् । इन्द्रस्य । कामम् । अक्षरन् ॥
वर्द्धन्तः । अस्य । वीर्यम् ॥१॥

पुनानासश्चमूषदो गच्छन्तो वायुमश्विना ।
ते नो धान्तु सुवीर्यम् ॥२॥
पुनानासः । चमू०सदः । गच्छन्तः । वायुम् । अश्विना ॥
ते । नः । धान्तु । सु०वीर्यम् ॥२॥

इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय ।
ऋतस्य योनिमासदम् ॥३॥
इन्द्रस्य । सोम । राधसे । पुनानः । हार्दि । चोदय ॥
ऋतस्य । योनिम् । आ०सदम् ॥३॥

मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः ।
अनु विप्रा अमादिषुः ॥४॥
मृजन्ति । त्वा । दश । क्षिपः । हिन्वन्ति । सप्त । धीतयः ॥
अनु । विप्राः । अमादिषुः ॥४॥

**देवेभ्यस्त्वा मदाय कं सृजानमति मेष्यः ।**

**सं गोभिर्वासयामसि ॥५॥ ( ३० )**

देवेभ्यः । त्वा । मदाय । कम् । सृजानम् । अति । मेष्यः ॥

सम् । गोभिः । वासयामसि ॥५॥

**पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः ।**

**परि गव्यान्यव्यत ॥६॥**

पुनानः । कलशेषु । आ । वस्त्राणि । अरुषः । हरिः ॥

परि । गव्यानि । अव्यत ॥६॥

**मघोन ऽआ पवस्व नो जहि विश्वा ऽअप द्विषः ।**

**इन्दो सखायमा विश ॥७॥**

मघोनः । आ । पवस्व । नः । जहि । विश्वाः । अप । द्विषः ॥

इन्दो इति । सखायम् । आ । विश ॥७॥

**वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या ऽअधि ।**

**सहो नः सोम पृत्सु धाः ॥८॥**

वृष्टिम् । दिवः । परि । स्रव । द्युम्नम् । पृथिव्याः । अधि ॥

सहः । नः । सोम । पृत्ऽसु । धाः ॥८॥

**नृचक्षसं त्वा वयमिन्द्रपीतं स्वर्विदम् ।**

**भक्षीमहि प्रजामिषम् ॥९॥ ( ३१ )** [ १४९० ]

नृऽचक्षसम् । त्वा । वयम् । इन्द्रऽपीतम् । स्वःऽविदम् ॥

भक्षीमहि । प्रऽजाम् । इषम् ॥९॥

# ( ९ )

१ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः ।
सुवानो याति कविक्रतुः ॥१॥
परि । प्रिया । दिवः । कविः । वयांसि । नप्त्योः । हितः ॥
सुवानः । याति । कवि०क्रतुः ॥१॥

प्रप्र क्षयाय पन्यसे जनाय जुष्टो ऽअद्रुहे ।
वीत्यर्ष चनिष्ठया ॥२॥
प्र०प्र । क्षयाय । पन्यसे । जनाय । जुष्टः । अद्रुहे ॥
वीती । अर्ष । चनिष्ठया ॥२॥

स सूनुर्मातरा शुचिर्जातो जाते ऽअरोचयत् ।
महान्मही ऽऋतावृधा ॥३॥
सः । सूनुः । मातरा । शुचिः । जातः । जाते इति । अरोचयत् ॥
महान् । मही । ऋत०वृधा ॥३॥

स सप्त धीतिभिर्हितो नद्यो ऽअजिन्वदद्रुहः ।
या ऽएकमक्षि वावृधुः ॥४॥
सः । सप्त । धीति०भिः । हितः । नद्यः । अजिन्वत् । अद्रुहः ॥
याः । एकम् । अक्षि । ववृधुः ॥४॥

ता ऽअभि सन्तमस्तृतं महे युवानमा दधुः ।
इन्दुमिन्द्र तव व्रते ॥५॥ ( ३२ )

ताः । अभि । सन्तम् । अस्तृतम् । महे । युवानम् । आ । दधुः ॥
इन्दुम् । इन्द्र । तव । व्रते ॥५॥

अभि वह्निरमर्त्यः सप्त पश्यति वावहिः ।
क्रिविर्देवीरतर्पयत् ॥६॥
अभि । वह्निः । अमर्त्यः । सप्त । पश्यति । वावहिः ॥
क्रिविः । देवीः । अतर्पयत् ॥६॥

अवा कल्पेषु नः पुमस्तमांसि सोम योध्या ।
तानि पुनान जङ्घनः ॥७॥
अव । कल्पेषु । नः । पुमः । तमांसि । सोम । योध्या ॥
तानि । पुनान । जङ्घनः ॥७॥

नू नव्यसे नवीयसे सूक्ताय साधया पथः ।
प्रत्नवद्रोचया रुचः ॥८॥
नु । नव्यसे । नवीयसे । सु०उक्ताय । साधय । पथः ॥
प्रत्न०वत् । रोचय । रुचः ॥८॥

पवमान महि श्रवो गामश्वं रासि वीरवत् ।
सना मेधां सना स्वः ॥९॥ ( ३३ ) [ १४९९ ]
पवमान । महि । श्रवः । गाम् । अश्वम् । रासि । वीर०वत् ॥
सन । मेधाम् । सन । स्वः ॥९॥

# ( १० )

९ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

प्र स्वानासो रथाइवार्वन्तो न श्रवस्यवः ।
सोमासो राये ऽअक्रमुः ॥१॥

प्र । स्वानासः । रथाःऽइव । अर्वन्तः । न । श्रवस्यवः ॥
सोमासः । राये । अक्रमुः ॥१॥

हिन्वानासो रथाइव दधन्विरे गभस्त्योः ।
भरासः कारिणामिव ॥२॥
हिन्वानासः । रथाःऽइव । दधन्विरे । गभस्त्योः ॥
भरासः । कारिणाम्ऽइव ॥२॥

राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते ।
यज्ञो न सप्त धातृभिः ॥३॥
राजानः । न । प्रशस्तिऽभिः । सोमासः । गोभिः । अञ्जते ॥
यज्ञः । न । सप्त । धातृऽभिः ॥३॥

परि सुवानास ऽइन्दवो मदाय बर्हणा गिरा ।
सुता ऽअर्षन्ति धारया ॥४॥
परि । सुवानासः । इन्दवः । मदाय । बर्हणा । गिरा ॥
सुताः । अर्षन्ति । धारया ॥४॥

आपानासो विवस्वतो जनन्त ऽउषसो भगम् ।
सूरा ऽअण्वं वि तन्वते ॥५॥ ( ३४ )
आपानासः । विवस्वतः । जनन्तः । उषसः । भगम् ॥
सूराः । अण्वम् । वि । तन्वते ॥५॥

अप द्वारा मतीनां प्रत्ना ऽऋण्वन्ति कारवः ।
वृष्णो हरस ऽआयवः ॥६॥

अप । द्वारा । मतीनाम् । प्रत्नाः । ऋण्वन्ति । कारवः ॥
वृष्णः । हरसे । आयवः ॥६॥

**समीचीनास ऽआसते होतारः सप्तजामयः ।**
**पदमेकस्य पिप्रतः ॥७॥**
समीचीनासः । आसते । होतारः । सप्त॰जामयः ॥
पदम् । एकस्य । पिप्रतः ॥७॥

**नाभा नाभिं न ऽआ ददे चक्षुश्चित्सूर्ये सचा ।**
**कवेरपत्यमा दुहे ॥८॥**
नाभा । नाभिम् । नः । आ । ददे । चक्षुः । चित् । सूर्ये । सचा ॥
कवेः । अपत्यम् । आ । दुहे ॥८॥

**अभि प्रिया दिवस्पदमध्वर्युभिर्गुहा हितम् ।**
**सूरः पश्यति चक्षसा ॥९॥ (३५)** [१५०८]
अभि । प्रिया । दिवः । पदम् । अध्वर्यु॰भिः । गुहा । हितम् ॥
सूरः । पश्यति । चक्षसा ॥९॥

# ( ११ )

**९ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।**

**उपास्मै गायता नरः पवमानायेन्दवे ।**
**अभि देवाँ ऽइयक्षते ॥१॥**
उप । अस्मै । गायत । नरः । पवमानाय । इन्दवे ॥
अभि । देवान् । इयक्षते ॥१॥

अभि ते मधुना पयोऽथर्वाणो ऽअशिश्रयुः ।
देवं देवाय देवयु ॥२॥
अभि । ते । मधुना । पयः । अथर्वाणः । अशिश्रयुः ॥
देवम् । देवाय । देव०यु ॥२॥

स नः पवस्व शं गवे शं जनाय शमर्वते ।
शं राजन्नोषधीभ्यः ॥३॥
सः । नः । पवस्व । शम् । गवे । शम् । जनाय । शम् । अर्वते ॥
शम् । राजन् । ओषधीभ्यः ॥३॥

बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे ।
सोमाय गाथमर्चत ॥४॥
बभ्रवे । नु । स्व०तवसे । अरुणाय । दिवि०स्पृशे ॥
सोमाय । गाथम् । अर्चत ॥४॥

हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन ।
मधावा धावता मधु ॥५॥ ( ३६ )
हस्त०च्युतेभिः । अद्रि०भिः । सुतम् । सोमम् । पुनीतन ॥
मधौ । आ । धावत । मधु ॥५॥

नमसेदुप सीदत दध्नेदभि श्रीणीतन ।
इन्दुमिन्द्रे दधातन ॥६॥
नमसा । इत् । उप । सीदत । दध्ना । इत् । अभि । श्रीणीतन ॥
इन्दुम् । इन्द्रे । दधातन ॥६॥

**अमित्रहा विचर्षणिः पवस्व सोम शं गवे ।**
**देवेभ्यो ऽअनुकामकृत् ॥७॥**
अमित्र०हा । वि०चर्षणिः । पवस्व । सोम । शम् । गवे ॥
देवेभ्यः । अनुकाम०कृत् ॥७॥

**इन्द्राय सोम पातवे मदाय परि षिच्यसे ।**
**मनश्चिन्मनसस्पतिः ॥८॥**
इन्द्राय । सोम । पातवे । मदाय । परि । सिच्यसे ॥
मनःश्चित् । मनसः । पतिः ॥८॥

**पवमान सुवीर्यं रयिं सोम रिरीहि नः ।**
**इन्दविन्द्रेण नो युजा ॥९॥ ( ३७ )** [ १५१७ ]
पवमान । सु०वीर्यम् । रयिम् । सोम । रिरीहि । नः ॥
इन्दो इति । इन्द्रेण । नः । युजा ॥९॥

## ( १२ )

**९ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।**

**सोमा ऽअसृग्रमिन्दवः सुता ऽऋतस्य सादने ।**
**इन्द्राय मधुमत्तमाः ॥१॥**
सोमाः । असृग्रम् । इन्दवः । सुताः । ऋतस्य । सदने ॥
इन्द्राय । मधुमत्०तमाः ॥१॥

**अभि विप्रा ऽअनूषत गावो वत्सं न मातरः ।**
**इन्द्रं सोमस्य पीतये ॥२॥**
अभि । विप्राः । अनूषत । गावः । वत्सम् । न । मातरः ॥
इन्द्रम् । सोमस्य । पीतये ॥२॥

मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् ।
सोमो गौरी ऽअधि श्रितः ॥३॥
मद०च्युत् । क्षेति । सदने । सिन्धोः । ऊर्मा । विपः२चित् ॥
सोमः । गौरी इति । अधि । श्रितः ॥३॥

दिवो नाभा विचक्षणोऽव्यो वारे महीयते ।
सोमो यः सुक्रतुः कविः ॥४॥
दिवः । नाभा । वि०चक्षणः । अव्यः । वारे । महीयते ॥
सोमः । यः । सु०क्रतुः । कविः ॥४॥

यः सोमः कलशेष्वाँ ऽअन्तः पवित्र ऽआहितः ।
तमिन्दुः परि षस्वजे ॥५॥ (३८)
यः । सोमः । कलशेषु । आ । अन्तरिति । पवित्रे । आ०हितः ॥
तम् । इन्दुः । परि । सस्वजे ॥५॥

प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि ।
जिन्वन्कोशं मधुश्चुतम् ॥६॥
प्र । वाचम् । इन्दुः । इष्यति । समुद्रस्य । अधि । विष्टपि ॥
जिन्वन् । कोशम् । मधु०श्चुतम् ॥६॥

नित्यस्तोत्रो वनस्पतिर्धीनामन्तः सबर्दुघः ।
हिन्वानो मानुषा युगा ॥७॥
नित्य०स्तोत्रः । वनस्पतिः । धीनाम् । अन्तरिति । सबः२दुघः ॥
हिन्वानः । मानुषा । युगा ॥७॥

**अभि प्रिया दिवस्पदा सोमो हिन्वानो ऽअर्षति ।**
**विप्रस्य धारया कविः ॥८॥**

अभि । प्रिया । दिवः । पदा । सोमः । हिन्वानः । अर्षति ॥
विप्रस्य । धारया । कविः ॥८॥

**आ पवमान धारय रयिं सहस्रवर्चसम् ।**
**अस्मे ऽइन्दो स्वाभुवम् ॥९॥ ( ३९ )** [ १५२६ ]

आ । पवमान । धारय । रयिम् । सहस्र॰वर्चसम् ॥
अस्मे इति । इन्दो इति । सु॰आभुवम् ॥९॥

॥ इति षष्ठाष्टके सप्तमोऽध्यायः ॥ ७ ॥

# सप्तमाध्यायस्य मन्त्रवर्गानुक्रमणी



॥ इति शाङ्खायनसंहितायां षष्ठाष्टके सप्तमोऽध्यायः ॥
(सप्तमाध्याये वर्गाः ३९, सूक्तानि १८, ऋचः १९८)

# ॥ षष्ठाष्टकेऽष्टमोऽध्यायः॥

**अथाष्टमोऽध्यायः॥८॥ वर्गाः १-३३ ]** [ नवममण्डले सूक्तानि १३-४३ ]

## ( १३ )

९ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

**सोमः पुनानो अर्षति सहस्रधारो अत्यविः ।**
**वायोरिन्द्रस्य निष्कृतम् ॥१॥**
सोमः । पुनानः । अर्षति । सहस्रऽधारः । अतिऽअविः ॥
वायोः । इन्द्रस्य । निःऽकृतम् ॥१॥

**पवमानमवस्यवो विप्रमभि प्र गायत ।**
**सुष्वाणं देववीतये ॥२॥**
पवमानम् । अवस्यवः । विप्रम् । अभि । प्र । गायत ॥
सुस्वानम् । देवऽवीतये ॥२॥

**पवन्ते वाजसातये सोमाः सहस्रपाजसः ।**
**गृणाना देववीतये ॥३॥**
पवन्ते । वाजऽसातये । सोमाः । सहस्रऽपाजसः ॥
गृणानाः । देवऽवीतये ॥३॥

**उत नो वाजसातये पवस्व बृहतीरिषः ।**
**द्युमदिन्दो सुवीर्यम् ॥४॥**
उत । नः । वाजऽसातये । पवस्व । बृहतीः । इषः ॥
द्युऽमत् । इन्दो इति । सुऽवीर्यम् ॥४॥

ते नः सहस्रिणं रयिं पवन्तामा सुवीर्यम् ।
सुवाना देवास ऽइन्दवः ॥५॥ (१)
ते । नः । सहस्रिणम् । रयिम् । पवन्ताम् । आ । सु०वीर्यम् ॥
सुवानाः । देवासः । इन्दवः ॥५॥

अत्या हियाना न हेतृभिरसृग्रं वाजसातये ।
वि वारमव्यमाशवः ॥६॥
अत्याः । हियानाः । न । हेतृ०भिः । असृग्रम् । वाज०सातये ॥
वि । वारम् । अव्यम् । आशवः ॥६॥

वाश्रा ऽअर्षन्तीन्दवोऽभि वत्सं न धेनवः ।
दधन्विरे गभस्त्योः ॥७॥
वाश्राः । अर्षन्ति । इन्दवः । अभि । वत्सम् । न । धेनवः ॥
दधन्विरे । गभस्त्योः ॥७॥

जुष्ट ऽइन्द्राय मत्सरः पवमान कनिक्रदत् ।
विश्वा ऽअप द्विषो जहि ॥८॥
जुष्टः । इन्द्राय । मत्सरः । पवमान । कनिक्रदत् ॥
विश्वाः । अप । द्विषः । जहि ॥८॥

अपघ्नन्तो ऽअराव्णः पवमानाः स्वर्दृशः ।
योनावृतस्य सीदत ॥९॥ (२) [१५३५]
अप०घ्नन्तः । अराव्णः । पवमानाः । स्वः२दृशः ॥
योनौ । ऋतस्य । सीदत ॥९॥

# ( १४ )

८ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

**परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः ।**

**कारं बिभ्रत्पुरुस्पृहम् ॥१॥**

परि । प्र । असिस्यदत् । कविः । सिन्धोः । ऊर्मौ । अधि । श्रितः ॥

कारम् । बिभ्रत् । पुरु॰स्पृहम् ॥१॥

**गिरा यदी सबन्धवः पञ्च व्राता ऽअपस्यवः ।**

**परिष्कृण्वन्ति धर्णसिम् ॥२॥**

गिरा । यदि । स॰बन्धवः । पञ्च । व्राताः । अपस्यवः ॥

परि॰कृण्वन्ति । धर्णसिम् ॥२॥

**आदस्य शुष्मिणो रसे विश्वे देवा ऽअमत्सत ।**

**यदी गोभिर्वसायते ॥३॥**

आत् । अस्य । शुष्मिणः । रसे । विश्वे । देवाः । अमत्सत ॥

यदि । गोभिः । वसायते ॥३॥

**निरिणानो वि धावति जहच्छर्याणि तान्वा ।**

**अत्रा सं जिघ्नते युजा ॥४॥**

नि॰रिणानः । वि । धावति । जहत् । शर्याणि । तान्वा ॥

अत्र । सम् । जिघ्नते । युजा ॥४॥

**नप्तीभिर्यो विवस्वतः शुभ्रो न मामृजे युवा ।**

**गाः कृण्वानो न निर्णिजम् ॥५॥ ( ३ )**

नप्तीभिः । यः । विवस्वतः । शुभ्रः । न । ममृजे । युवा ॥
गाः । कृण्वानः । न । निःऽनिर्जम् ॥५॥

अति श्रिती तिरश्चता गव्या जिगात्यण्व्या ।
वग्नुमियर्त्ति यं विदे ॥६॥
अति । श्रिती । तिरश्चता । गव्या । जिगाति । अण्व्या ॥
वग्नुम् । इयर्त्ति । यम् । विदे ॥६॥

अभि क्षिपः समग्मत मर्जयन्ती रिषस्पतिम् ।
पृष्ठा गृभ्णत वाजिनः ॥७॥
अभि । क्षिपः । सम् । अग्मत । मर्जयन्तीः । इषः । पतिम् ॥
पृष्ठा । गृभ्णत । वाजिनः ॥७॥

परि दिव्यानि मर्मृशद्विश्वानि सोम पार्थिवा ।
वसूनि याह्यस्मयुः ॥८॥ (४) [ १५४३ ]
परि । दिव्यानि । मर्मृशत् । विश्वानि । सोम । पार्थिवा ॥
वसूनि । याहि । अस्मऽयुः ॥८॥

## ( १५ )

८ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

एष धिया यात्यण्व्या शूरो रथेभिराशुभिः ।
गच्छन्निन्द्रस्य निष्कृतम् ॥१॥
एषः । धिया । याति । अण्व्या । शूरः । रथेभिः । आशुऽभिः ॥
गच्छन् । इन्द्रस्य । निःऽकृतम् ॥१॥

एष पुरू धियायते बृहते देवतातये ।
यत्रामृतास ऽआसते ॥२॥
एषः । पुरु । धिया॰यते । बृहते । देव॰तातये ॥
यत्र । अमृतासः । आसते ॥२॥

एष हितो वि नीयतेऽन्तः शुभ्रावता पथा ।
यदी तुञ्जन्ति भूर्णयः ॥३॥
एषः । हितः । वि । नीयते । अन्तरिति । शुभ्र॰वता । पथा ॥
यदि । तुञ्जन्ति । भूर्णयः ॥३॥

एष शृङ्गाणि दोधुवच्छिशीते यूथ्योऽ३ वृषा ।
नृम्णा दधान ऽओजसा ॥४॥
एषः । शृङ्गाणि । दोधुवत् । शिशीते । यूथ्यः । वृषा ॥
नृम्णा । दधानः । ओजसा ॥४॥

एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः ।
पतिः सिन्धूनां भवन् ॥५॥
एषः । रुक्मि॰भिः । ईयते । वाजी । शुभ्रेभिः । अंशु॰भिः ॥
पतिः । सिन्धूनाम् । भवन् ॥५॥

एष वसूनि पिब्दना परुषा ययिवाँ ऽअति ।
अव शादेषु गच्छति ॥६॥
एषः । वसूनि । पिब्दना । परुषा । ययि॰वान् । अति ॥
अव । शादेषु । गच्छति ॥६॥

एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः ।
प्रचक्राणं महीरिषः ॥७॥
एतम् । मृजन्ति । मर्ज्यम् । उप । द्रोणेषु । आयवः ॥
प्र०चक्राणम् । महीः । इषः ॥७॥

एतमु त्यं दश क्षिपो मृजन्ति सप्त धीतयः ।
स्वायुधं मदिन्तमम् ॥८॥ (५) [ १५५१ ]
एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति । सप्त । धीतयः ॥
सु०आयुधम् । मदिन्०तमम् ॥८॥

# ( १६ )

८ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

प्र ते सोतारं ओण्योऽ३ रसं मदाय घृष्वये ।
सर्गो न तक्त्येतशः ॥१॥
प्र । ते । सोतारः । ओण्योः । रसम् । मदाय । घृष्वये ॥
सर्गः । न । तक्ति । एतशः ॥१॥

क्रत्वा दक्षस्य रथ्यमपो वसानमन्धसा ।
गोषामण्वेषु सश्चिम ॥२॥
क्रत्वा । दक्षस्य । रथ्यम् । अपः । वसानम् । अन्धसा ॥
गो०साम् । अण्वेषु । सश्चिम ॥२॥

अनप्तमप्सु दुष्टरं सोमं पवित्र ऽआ सृज ।
पुनीहीन्द्राय पातवे ॥३॥
अनप्तम् । अप्०सु । दुस्तरम् । सोमम् । पवित्रे । आ । सृज ॥
पुनीहि । इन्द्राय । पातवे ॥३॥

**प्र पुनानस्य चेतसा सोमः पवित्रे ऽअर्षति ।**
**क्रत्वा सधस्थमासदत् ॥४॥**
प्र । पुनानस्य । चेतसा । सोमः । पवित्रे । अर्षति ॥
क्रत्वा । सध०स्थम् । आ । असदत् ॥४॥

**प्र त्वा नमोभिरिन्दव ऽइन्द्र सोमा ऽअसृक्षत ।**
**महे भराय कारिणः ॥५॥**
प्र । त्वा । नमः२भिः । इन्दवः । इन्द्र । सोमाः । असृक्षत ॥
महे । भराय । कारिणः ॥५॥

**पुनानो रूपे ऽअव्यये विश्वा ऽअर्षन्नभि श्रियः ।**
**शूरो न गोषु तिष्ठति ॥६॥**
पुनानः । रूपे । अव्यव्यै । विश्वाः । अर्षन् । अभि । श्रियः ॥
शूरः । न । गोषु । तिष्ठति ॥६॥

**दिवो न सानु पिप्युषी धारा सुतस्य वेधसः ।**
**वृथा पवित्रे ऽअर्षति ॥७॥**
दिवः । न । सानु । पिप्युषी । धारा । सुतस्य । वेधसः ॥
वृथा । पवित्रे । अर्षति ॥७॥

**त्वं सोम विपश्चितं तना पुनान ऽआयुषु ।**
**अव्यो वारं वि धावसि ॥८॥ ( ६ )** [ १५५९ ]
त्वम् । सोम । विपः२चितम् । तना । पुनानः । आयुषु ॥
अव्यः । वारम् । वि । धावसि ॥८॥

# ( १७ )

८ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

प्र निम्नेनेव सिन्धवो घ्नन्तो वृत्राणि भूर्णयः ।
सोमा ऽअसृग्रमाशवः ॥
प्र । निम्नेनऽइव । सिन्धवः । घ्नन्तः । वृत्राणि । भूर्णयः ॥
सोमाः । असृग्रम् । आशवः ॥१॥

अभि सुवानास ऽइन्दवो वृष्टयः पृथिवीमिव ।
इन्द्रं सोमासो ऽअक्षरन् ॥२॥
अभि । सुवानासः । इन्दवः । वृष्टयः । पृथिवीम्ऽइव ॥
इन्द्रम् । सोमासः । अक्षरन् ॥२॥

अत्यूर्मिर्मत्सरो मदः सोमः पवित्रे ऽअर्षति ।
विघ्नन्रक्षांसि देवयुः ॥३॥
अति०ऊर्मिः । मत्सरः । मदः । सोमः । पवित्रे । अर्षति ॥
वि०घ्नन् । रक्षांसि । देव०युः ॥३॥

आ कलशेषु धावति पवित्रे परि षिच्यते ।
उक्थैर्यज्ञेषु वर्द्धते ॥४॥
आ । कलशेषु । धावति । पवित्रे । परि । सिच्यते ॥
उक्थैः । यज्ञेषु । वर्द्धते ॥४॥

अति त्री सोम रोचना रोहन्न भ्राजसे दिवम् ।
इष्णन्सूर्यं न चोदयः ॥५॥

अति । त्री । सोम । रोचना । रोहन् । न । भ्राजसे । दिवम् ॥
इष्णन् । सूर्यम् । न । चोदयः ॥५॥

अभि विप्रा ऽअनूषत मूर्द्धन्यज्ञस्य कारवः ।
दधानाश्चक्षसि प्रियम् ॥६॥
अभि । विप्राः । अनूषत । मूर्द्धन् । यज्ञस्य । कारवः ॥
दधानाः । चक्षति । प्रियम् ॥६॥

तमु त्वा वाजिनं नरो धीभिर्विप्रा ऽअवस्यवः ।
मृजन्ति देवतातये ॥७॥
तम् । ऊँ इति । त्वा । वाजिनम् । नरः । धीभिः । विप्राः । अवस्यवः ॥
मृजन्ति । देव०तातये ॥७॥

मधोर्धारामनु क्षर तीव्रः सधस्थमासदः ।
चारुर्ऋताय पीतये ॥८॥ (७) [१५६७]
मधोः । धाराम् । अनु । क्षर । तीव्रः । सध०स्थम् । आ । असदः ॥
चारुः । ऋताय । पीतये ॥८॥

# ( १८ )

७ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

परि सुवानो गिरिष्ठाः पवित्रे सोमो ऽअक्षाः ।
मदेषु सर्वधा ऽअसि ॥१॥
परि । सुवानः । गिरि०स्थाः । पवित्रे । सोमः । अक्षारिति ॥
मदेषु । सर्व०धाः । असि ॥१॥

**त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः ।**

**मदेषु सर्वधा ऽअसि ॥२॥**

त्वम् । विप्रः । त्वम् । कविः । मधु । प्र । जातम् । अन्धसः ॥

मदेषु । सर्व॰धाः । असि ॥२॥

**तव विश्वे सजोषसो देवासः पीतिमाशत ।**

**मदेषु सर्वधा ऽअसि ॥३॥**

तव । विश्वे । स॰जोषसः । देवासः । पीतिम् । आशत ॥

मदेषु । सर्व॰धाः । असि ॥३॥

**आ यो विश्वानि वार्या वसूनि हस्तयोर्दधे ।**

**मदेषु सर्वधा ऽअसि ॥४॥**

आ । यः । विश्वानि । वार्या । वसूनि । हस्तयोः । दधे ॥

मदेषु । सर्व॰धाः । असि ॥४॥

**य ऽइमे रोदसी मही सं मातरेव दोहते ।**

**मदेषु सर्वधा ऽअसि ॥५॥**

यः । इमे इति । रोदसी इति । मही इति । सम् । मातराऽइव । दोहते ॥

मदेषु । सर्व॰धाः । असि ॥५॥

**परि यो रोदसी ऽउभे सद्यो वाजेभिरर्षति ।**

**मदेषु सर्वधा ऽअसि ॥६॥**

परि । यः । रोदसी इति । उभे इति । सद्यः । वाजेभिः । अर्षति ॥

मदेषु । सर्व॰धाः । असि ॥६॥

स शुष्मी कलशेष्वा पुनानो ऽअचिक्रदत् ।
मदेषु सर्वधा ऽअसि ॥७॥ (८) [ १५७४ ]
सः । शुष्मी । कलशेषु । आ । पुनानः । अचिक्रदत् ॥
मदेषु । सर्व०धाः । असि ॥७॥

# ( १९ )

७ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु ।
तन्नः पुनान आ भर ॥१॥
यत् । सोम । चित्रम् । उक्थ्यम् । दिव्यम् । पार्थिवम् । वसु ॥
तत् । नः । पुनानः । आ । भर ॥१॥

युवं हि स्थः स्वर्पती ऽइन्द्रश्च सोम गोपती ।
ईशाना पिप्यतं धियः ॥२
युवम् । हि । स्थः । स्वर्पती इति स्वः२पती । इन्द्रः। च। सोम। गोपती इति गो०पती ॥
ईशाना । पिप्यतम् । धियः ॥२॥

वृषा पुनान ऽआयुषु स्तनयन्नधि बर्हिषि ।
हरिः सन्योनिमासदत् ॥३॥
वृषा । पुनानः । आयुषु । स्तनयन् । अधि । बर्हिषि ॥
हरिः । सन् । योनिम् । आ । असदत् ॥३॥

अवावशन्त धीतयो वृषभस्याधि रेतसि ।
सूनो वत्सस्य मातरः ॥४॥
अवावशन्त । धीतयः । वृषभस्य । अधि । रेतसि ॥
सूनोः । वत्सस्य । मातरः ॥४॥

कुविद् वृषण्यन्तीभ्यः पुनानो गर्भमादधत् ।
याः शुक्रं दुहते पर्यः ॥५॥
कुवित् । वृषन्यन्तीभ्यः । पुनानः । गर्भम् । आ०दर्धत् ॥
याः । शुक्रम् । दुहते । पर्यः ॥५॥

उप शिक्षापतस्थुषो भियसमा धेहि शत्रुषु ।
पवमान विदा रयिम् ॥६॥
उप । शिक्ष । अप०तस्थुषः । भियसम् । आ । धेहि । शत्रुषु ॥
पवमान । विदाः । रयिम् ॥६॥

नि शत्रोः सोम वृष्ण्यं नि शुष्मं नि वयस्तिर ।
दूरे वा सतो ऽअन्ति वा ॥७॥ (९) [ १५८१ ]
नि । शत्रोः । सोम । वृष्ण्यम् । नि । शुष्मम् । नि । वयः । तिर ॥
दूरे । वा । सतः । अन्ति । वा ॥७॥

## ( २० )

७ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

प्र कविर्देववीतयेऽव्यो वारेभिरर्षति ।
साह्वान्विश्वा ऽअभि स्पृधः ॥१॥
प्र । कविः । देव०वीतये । अव्यः । वारेभिः । अर्षति ॥
सह्वान् । विश्वाः । अभि । स्पृधः ॥१॥

स हि ष्मा जरितृभ्य ऽआ वाजं गोमन्तमिन्वति ।
पवमानः सहस्रिणम् ॥२॥
सः । हि । स्म । जरितृ०भ्यः । आ । वाजम् । गो०मन्तम् । इन्वति ॥
पवमानः । सहस्रिणम् ॥२॥

परि विश्वानि चेतसा मृशसे पवसे मती ।
स नः सोम श्रवो विदः ॥३॥
परि । विश्वानि । चेतसा । मृशसे । पवसे । मती ॥
सः । नः । सोम । श्रवः । विदः ॥३॥

अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिम् ।
इषं स्तोतृभ्य ऽआ भर ॥४॥
अभि । अर्ष । बृहत् । यशः । मघवत्०भ्यः । ध्रुवम् । रयिम् ॥
इषम् । स्तोतृ०भ्यः । आ । भर ॥४॥

त्वं राजेव सुव्रतो गिरः सोमा विवेशिथ ।
पुनानो वह्ने ऽअद्भुत ॥५॥
त्वम् । राजाऽइव । सु०व्रतः । गिरः । सोम । आ । विवेशिथ ॥
पुनानः । वह्ने । अद्भुत ॥५॥

स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः ।
सोमश्चमूषु सीदति ॥६॥
सः । वह्निः । अप्०सु । दुस्तरः । मृज्यमानः । गभस्त्योः ॥
सोमः । चमूषु । सीदति ॥६॥

क्रीळुर्मखो न मंहयुः पवित्रं सोम गच्छसि ।
दधत्स्तोत्रे सुवीर्यम् ॥७॥ (१०) [ १५८८ ]
क्रीळुः । मखः । न । मंहयुः । पवित्रम् । सोम । गच्छसि ॥
दधत् । स्तोत्रे । सु०वीर्यम् ॥७॥

# ( २१ )

७ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

एते धावन्तीन्दवः सोमा ऽइन्द्राय घृष्वयः ।
मत्सरासः स्वर्विदः ॥१॥
एते । धावन्ति । इन्दवः । सोमाः । इन्द्राय । घृष्वयः ॥
मत्सरासः । स्वः२विदः ॥१॥

प्रवृण्वन्तो ऽअभियुजः सुष्वये वरिवोविदः ।
स्वयं स्तोत्रे वयस्कृतः ॥२॥
प्र०वृण्वन्तः । अभि०युजः । सुस्वये । वरिवः२विदः ॥
स्वयम् । स्तोत्रे । वयः२कृतः ॥२॥

वृथा क्रीळन्त ऽइन्दवः सधस्थमभ्येकमित् ।
सिन्धोरूर्मा व्यक्षरन् ॥३॥
वृथा । क्रीळन्तः । इन्दवः । सध०स्थम् । अभि । एकम् । इत् ॥
सिन्धोः । ऊर्मा । वि । अक्षरन् ॥३॥

एते विश्वानि वार्या पवमानास ऽआशत ।
हिता न सप्तयो रथे ॥४॥
एते । विश्वानि । वार्या । पवमानासः । आशत ॥
हिताः । न । सप्तयः । रथे ॥४॥

आस्मिन्पिशङ्गमिन्दवो दधाता वेनमादिशे ।
यो ऽअस्मभ्यमरावा ॥५॥

आ । अस्मिन् । पिशङ्गम् । इन्दवः । दधात । वेनम् । आ०दिशे ॥
यः । अस्मभ्यम् । अरावा ॥५॥

**ऋभुर्न रथ्यं नवं दधाता केतमादिशे ।**
**शुक्राः पवध्वमर्णसा ॥६॥**
ऋभुः । न । रथ्यम् । नवम् । दधात । केतम् । आ०दिशे ॥
शुक्राः । पवध्वम् । अर्णसा ॥६॥

**एत ऽउ त्ये ऽअवीवशन्काष्ठां वाजिनो ऽअक्रत ।**
**सतः प्रासाविषुर्मतिम् ॥७॥ ( ११ )** [ १५९५ ]
एते । ऊँ इति । त्ये । अवीवशन् । काष्ठाम् । वाजिनः । अक्रत ॥
सतः । प्र । असाविषुः । मतिम् ॥७॥

# ( २२ )

**७ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।**

**एते सोमास ऽआशवो रथाइव प्र वाजिनः ।**
**सर्गाः सृष्टा ऽअहेषत ॥१॥**
एते । सोमासः । आशवः । रथाःऽइव । प्र । वाजिनः ॥
सर्गाः । सृष्टाः । अहेषत ॥१॥

**एते वाताइवोरवः पर्जन्यस्येव वृष्टयः ।**
**अग्नेरिव भ्रमा वृथा ॥२॥**
एते । वाताःऽइव । उरवः । पर्जन्यस्यऽइव । वृष्टयः ॥
अग्नेःऽइव । भ्रमाः । वृथा ॥२॥

एते पूता विपश्चितः सोमासो दध्याशिरः ।
विपा व्यानशुर्धियः ॥३॥
एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः ॥
विपा । वि । आनशुः । धियः ॥३॥

एते मृष्टा ऽअमर्त्त्याः ससृवांसो न शश्रमुः ।
इयक्षन्तः पथो रजः ॥४॥
एते । मृष्टाः । अमर्त्त्याः । ससृऽवांसः । न । शश्रमुः ॥
इयक्षन्तः । पथः । रजः ॥४॥

एते पृष्ठानि रोदसोर्विप्रयन्तो व्यानशुः ।
उतेदमुत्तमं रजः ॥५॥
एते । पृष्ठानि । रोदसोः । विऽप्रयन्तः । वि । आनशुः ॥
उत । इदम् । उत्ऽतमम् । रजः ॥५॥

तन्तुं तन्वानमुत्तममनु प्रवत ऽआशत ।
उतेदमुत्तमाय्यम् ॥६॥
तन्तुम् । तन्वानम् । उत्ऽतमम् । अनु । प्रऽवतः । आशत ॥
उत । इदम् । उत्तमाय्यम् ॥६॥

त्वं सोम पणिभ्य ऽआ वसु गव्यानि धारयः ।
ततं तन्तुमचिक्रदः ॥७॥ (१२) [ १६०२ ]
त्वम् । सोम । पणिऽभ्यः । आ । वसु । गव्यानि । धारयः ॥
ततम् । तन्तुम् । अचिक्रदः ॥७॥

# ( २३ )

७ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।

सोमा ऽअसृग्रमाशवो मधोर्मदस्य धारया ।
अभि विश्वानि काव्या ॥१॥
सोमाः । असृग्रम् । आशवः । मधोः । मदस्य । धारया ॥
अभि । विश्वानि । काव्या ॥१॥

अनु प्रत्नास ऽआयवः पदं नवीयो ऽअक्रमुः ।
रुचे जनन्त सूर्यम् ॥२॥
अनु । प्रत्नासः । आयवः । पदम् । नवीयः । अक्रमुः ॥
रुचे । जनन्त । सूर्यम् ॥२॥

आ पवमान नो भरार्यो ऽअदाशुषो गयम् ।
कृधि प्रजावतीरिषः ॥३॥
आ । पवमान । नः । भर । अर्यः । अदाशुषः । गयम् ॥
कृधि । प्रजा०वतीः । इषः ॥३॥

अभि सोमास ऽआयवः पवन्ते मद्यं मदम् ।
अभि कोशं मधुश्चुतम् ॥४॥
अभि । सोमासः । आयवः । पवन्ते । मद्यम् । मदम् ॥
अभि । कोशम् । मधु०श्चुतम् ॥४॥

सोमो ऽअर्षति धर्णसिर्दधान ऽइन्द्रियं रसम् ।
सुवीरो ऽअभिशस्तिपाः ॥५॥

सोम॑ः । अर्ष॑ति । धर्ण॑सिः । दधा॑नः । इ॒न्द्रियम् । रस॑म् ।
सु॒ऽवीर॑ः । अ॒भि॒श॒स्ति॒ऽपाः ॥५॥

**इन्द्रा॑य सोम पवसे दे॒वेभ्य॑ः सध॒माद्य॑ः ।**
**इन्दो॒ वाजं॑ सिषाससि ॥६॥**
इन्द्रा॑य । सो॒म॒ । प॒व॒से॒ । दे॒वेभ्य॑ः । स॒ध॒ऽमाद्य॑ः ॥
इन्दो॒ इति॑ । वाज॑म् । सि॒सा॒स॒सि॒ ॥६॥

**अ॒स्य पी॒त्वा मदा॑ना॒मिन्द्रो॑ वृ॒त्राण्य॑प्र॒ति ।**
**ज॒घान॑ ज॒घन॑च्च॒ नु ॥७॥ (१३)** [ १६०९ ]
अ॒स्य । पी॒त्वा । मदा॑नाम् । इन्द्र॑ः । वृ॒त्राणि॑ । अ॒प्र॒ति ॥
ज॒घान॑ । ज॒घन॑त् । च॒ । नु ॥७॥

# ( २४ )

**७ काश्यपोऽसितो देवलो वा । पवमानः सोमः । गायत्री ।**

**प्र सोमा॑सो ऽअधन्विषुः पव॑माना॒स ऽइन्द॑वः ।**
**श्री॒णा॒ना ऽअ॒प्सु मृ॑ञ्जत ॥१॥**
प्र । सोमा॑सः । अ॒ध॒न्वि॒षुः । पव॑मानासः । इन्द॑वः ॥
श्री॒णा॒नाः । अ॒प्ऽसु । मृ॒ञ्ज॒त ॥१॥

**अ॒भि गावो॑ ऽअधन्विषुरापो॒ न प्र॒वता॑ य॒तीः ।**
**पु॒ना॒ना ऽइन्द्र॑माशत ॥२॥**
अ॒भि । गाव॑ः । अ॒ध॒न्वि॒षुः । आप॑ः । न । प्र॒ऽवता॑ । य॒तीः ॥
पु॒ना॒नाः । इन्द्र॑म् । आ॒श॒त॒ ॥२॥

**प्र पवमान धन्वसि सोमेन्द्राय पातवे ।**

**नृभिर्यतो वि नीयसे ॥३॥**

प्र । पवमान । धन्वसि । सोम । इन्द्राय । पातवे ॥

नृ०भिः । यतः । वि । नीयसे ॥३॥

**त्वं सोम नृमादनः पवस्व चर्षणीसहे ।**

**सस्निर्यो ऽअनुमाद्यः ॥४॥**

त्वम् । सोम । नृ०मादनः । पवस्व । चर्षणि०सहे ॥

सस्निः । यः । अनु०माद्यः ॥४॥

**इन्दो यदद्रिभिः सुतः पवित्रं परिधावसि ।**

**अरमिन्द्रस्य धाम्ने ॥५॥**

इन्दो इति । यत् । अद्रि०भिः । सुतः । पवित्रम् । परि०धावसि ॥

अरम् । इन्द्रस्य । धाम्ने ॥५॥

**पवस्व वृत्रहन्तमोक्थेभिरनुमाद्यः ।**

**शुचिः पावको ऽअद्भुतः ॥६॥**

पवस्व । वृत्रहन्०तम । उक्थेभिः । अनु०माद्यः ॥

शुचिः । पावकः । अद्भुतः ॥६॥

**शुचिः पावक ऽउच्यते सोमः सुतस्य मध्वः ।**

**देवावीरघशंसहा ॥७॥ (१४)** [ १६१६ ]

शुचिः । पावकः । उच्यते । सोमः । सुतस्य । मध्वः ॥

देव०अवीः । अघशंस०हा ॥७॥

( २५ ) [ अथ द्वितीयोऽनुवाकः॥२॥ सूक्तानि २५-६०

६ दृळहच्युत आगस्त्यः । पवमानः सोमः । गायत्री ।

पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।
मरुद्भ्यो वायवे मदः ॥१॥
पवस्व । दक्ष०साधनः । देवेभ्यः । पीतये । हरे ॥
मरुत्०भ्यः । वायवे । मदः ॥१॥

पवमान धिया हितोऽभि योनिं कनिक्रदत् ।
धर्मणा वायुमा विश ॥२॥
पवमान । धिया । हितः । अभि । योनिम् । कनिक्रदत् ।
धर्मणा । वायुम् । आ । विश ॥२॥

सं देवैः शोभते वृषा कविर्योनावधि प्रियः ।
वृत्रहा देववीतमः ॥३॥
सम् । देवैः । शोभते । वृषा । कविः । योनौ । अधि । प्रियः ॥
वृत्र०हा । देव०वीतमः ॥३॥

विश्वा रूपाण्याविशन्पुनानो याति हर्यतः ।
यत्रामृतास ऽआसते ॥४॥
विश्वा । रूपाणि । आ०विशन् । पुनानः । याति । हर्यतः ॥
यत्र । अमृतासः । आसते ॥४॥

अरुषो जनयन्गिरः सोमः पवत ऽआयुषक् ।
इन्द्रं गच्छन्कविक्रतुः ॥५॥

अरुषः । जनयन् । गिरः । सोमः । पवते । आयुषक् ॥
इन्द्रम् । गच्छन् । कवि०क्रतुः ॥५॥

**आ पवस्व मदिन्तम पवित्रं धारया कवे ।**
**अर्कस्य योनिमासदम् ॥६॥ ( १५ )** [ १६२२ ]
आ । पवस्व । मदिन्०तम । पवित्रम् । धारया । कवे ॥
अर्कस्य । योनिम् । आ०सदम् ॥६॥

## ( २६ )

**६ दध्मवाहो दार्दच्युतः । पवमानः सोमः । गायत्री ।**

**तममृक्षन्त वाजिनमुपस्थे ऽअदितेरधि ।**
**विप्रासो ऽअण्व्या धिया ॥१॥**
तम् । अमृक्षन्त । वाजिनम् । उप०स्थे । अदितेः । अधि ॥
विप्रासः । अण्व्या । धिया ॥१॥

**तं गावो ऽअभ्यनूषत सहस्रधारमक्षितम् ।**
**इन्दुं धर्त्तारमा दिवः ॥२॥**
तम् । गावः । अभि । अनूषत । सहस्र०धारम् । अक्षितम् ॥
इन्दुम् । धर्त्तारम् । आ । दिवः ॥२॥

**तं वेधां मेधयाह्यन्पवमानमधि द्यवि ।**
**धर्णसिं भूरिधायसम् ॥३॥**
तम् । वेधाम् । मेधया । अह्यन् । पवमानम् । अधि । द्यवि ॥
धर्णसिम् । भूरि०धायसम् ॥३॥

तमंह्यन्भुरिजोर्धिया संवसानं विवस्वतः ।
पतिं वाचो ऽअदाभ्यम् ॥४॥
तम् । अह्यन् । भुरिजोः । धिया । सम्०वसानम् । विवस्वतः ॥
पतिम् । वाचः । अदाभ्यम् ॥४॥

तं सानावधि जामयो हरिं हिन्वन्त्यद्रिभिः ।
हर्यतं भूरिचक्षसम् ॥५॥
तम् । सानौ । अधि । जामयः । हरिम् । हिन्वन्ति । अद्रि०भिः ॥
हर्यतम् । भूरि०चक्षसम् ॥५॥

तं त्वा हिन्वन्ति वेधसः पवमान गिरावृधम् ।
इन्दविन्द्राय मत्सरम् ॥६॥ (१६) [१६२८]
तम् । त्वा । हिन्वन्ति । वेधसः । पवमान । गिरा०वृधम् ॥
इन्दो इति । इन्द्राय । मत्सरम् ॥६॥

# (२७)

६ नृमेध आङ्गिरसः । पवमानः सोमः । गायत्री ।

एष कविरभिष्टुतः पवित्रे ऽअधि तोशते ।
पुनानो घ्नन्नप स्रिधः ॥१॥
एषः । कविः । अभि०स्तुतः । पवित्रे । अधि । तोशते ॥
पुनानः । घ्नन् । अप । स्रिधः ॥१॥

एष ऽइन्द्राय वायवे स्वर्जित्परि षिच्यते ।
पवित्रे दक्षसाधनः ॥२॥
एषः । इन्द्राय । वायवे । स्वः०जित् । परि । सिच्यते ॥
पवित्रे । दक्ष०साधनः ॥२॥

एष नृभिर्वि नीयते दिवो मूर्द्धा वृषा सुतः ।
सोमो वनेषु विश्ववित् ॥३॥
एषः । नृऽभिः । वि । नीयते । दिवः । मूर्द्धा । वृषा । सुतः ॥
सोमः । वनेषु । विश्वऽवित् ॥३॥

एष गव्युरचिक्रदत्पवमानो हिरण्ययुः ।
इन्दुः सत्राजिदस्तृतः ॥४॥
एषः । गव्युः । अचिक्रदत् । पवमानः । हिरण्यऽयुः ॥
इन्दुः । सत्राऽजित् । अस्तृतः ॥४॥

एष सूर्येण हासते पवमानो ऽअधि द्यवि ।
पवित्रे मत्सरो मदः ॥५॥
एषः । सूर्येण । हासते । पवमानः । अधि । द्यवि ॥
पवित्रे । मत्सरः । मदः ॥५॥

एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः ।
पुनान ऽइन्दुरिन्द्रमा ॥६॥ (१७) [१६३४]
एषः । शुष्मी । असिस्यदत् । अन्तरिक्षे । वृषा । हरिः ॥
पुनानः । इन्दुः । इन्द्रम् । आ ॥६॥

# (२८)

६ प्रियमेध आङ्गिरसः । पवमानः सोमः । गायत्री ।

एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः ।
अव्यो वारं वि धावति ॥१॥
एषः । वाजी । हितः । नृऽभिः । विश्वऽवित् । मनसः । पतिः ॥
अव्यः । वारम् । वि । धावति ॥१॥

एष पवित्रे ऽअक्षरत्सोमो देवेभ्यः सुतः ।
विश्वा धामान्याविशन् ॥२॥
एषः । पवित्रे । अक्षरत् । सोमः । देवेभ्यः । सुतः ॥
विश्वा । धामानि । आऽविशन् ॥२॥

एष देवः शुभायतेऽधि योनावमर्त्यः ।
वृत्रहा देववीतमः ॥३॥
एषः । देवः । शुभायते । अधि । योनौ । अमर्त्यः ॥
वृत्रऽहा । देवऽवीतमः ॥३॥

एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः ।
अभि द्रोणानि धावति ॥४॥
एषः । वृषा । कनिक्रदत् । दशऽभिः । जामिऽभिः । यतः ॥
अभि । द्रोणानि । धावति ॥४॥

एष सूर्यमरोचयत्पवमानो विचर्षणिः ।
विश्वा धामानि विश्ववित् ॥५॥
एषः । सूर्यम् । अरोचयत् । पवमानः । विऽचर्षणिः ॥
विश्वा । धामानि । विश्वऽवित् ॥५॥

एष शुष्म्यदाभ्यः सोमः पुनानो ऽअर्षति ।
देवावीरघशंसहा ॥६॥ (१८) [१६४०]
एषः । शुष्मी । अदाभ्यः । सोमः । पुनानः । अर्षति ॥
देवऽअवीः । अघशंसऽहा ॥६॥

# ( २९ )

६ नृमेध आङ्गिरसः । पवमानः सोमः । गायत्री ।

**प्रास्य धारा॑ ऽअक्षर॒न्वृष्णः॑ सुतस्यौज॑सा ।**
**दे॒वाँ ऽअनु॑ प्र॒भूष॑तः ॥१॥**

प्र । अ॒स्य॒ । धारा॑ः । अ॒क्ष॒र॒न् । वृष्ण॑ः । सु॒तस्य॑ । ओज॑सा ॥
दे॒वान् । अनु॑ । प्र॒॰भूष॑तः ॥१॥

**सप्तिं॑ मृजन्ति वे॒धसो॑ गृ॒णन्त॑ः का॒रवो॑ गि॒रा ।**
**ज्योति॑र्जज्ञा॒नमु॒क्थ्य॑म् ॥२॥**

सप्ति॑म् । मृजन्ति । वे॒धस॑ः । गृ॒णन्त॑ः । का॒रव॑ः । गि॒रा ॥
ज्योति॑ः । ज॒ज्ञा॒नम् । उ॒क्थ्य॑म् ॥२॥

**सुषहा॑ सोम॒ तानि॑ ते पुना॒नाय॑ प्रभूवसो ।**
**वर्द्धा॑ समु॒द्रमु॒क्थ्य॑म् ॥३॥**

सु॰सहा॑ । सो॒म॒ । तानि॑ । ते॒ । पु॒ना॒नाय॑ । प्र॒भु॒व॒सो॒ इति॑ प्रभु॰वसो ॥
वर्द्ध॑ । स॒मु॒द्रम् । उ॒क्थ्य॑म् ॥३॥

**विश्वा॒ वसू॑नि सं॒ज॒यन्पव॑स्व सोम॒ धार॑या ।**
**इ॒नु द्वेषां॑सि स॒ध्र्य॑क् ॥४॥**

विश्वा॑ । वसू॑नि । स॒म्॰जय॑न् । पव॑स्व । सो॒म॒ । धार॑या ॥
इ॒नु । द्वेषां॑सि । स॒ध्र्य॑क् ॥४॥

**रक्षा॒ सु नो॒ ऽअर॑रुषः स्व॒नात्स॒मस्य॒ कस्य॑ चित् ।**
**नि॒दो यत्र॑ मुमु॒च्महे॑ ॥५॥**

रक्ष । सु । नः । अररुषः । स्वनात् । समस्य । कस्य । चित् ॥
निदः । यत्र । मुमुच्महे ॥५॥

एन्दो पार्थिवं रयिं दिव्यं पवस्व धारया ।
द्युमन्तं शुष्ममा भर ॥६॥ (१९) [ १६४६ ]
आ । इन्दो इति । पार्थिवम् । रयिम् । दिव्यम् । पवस्व । धारया ॥
द्युऽमन्तम् । शुष्मम् । आ । भर ॥६॥

## ( ३० )

६ विन्दुराङ्गिरसः । पवमानः सोमः । गायत्री ।

प्र धारा ऽअस्य शुष्मिणो वृथा पवित्रे ऽअक्षरन् ।
पुनानो वाचमिष्यति ॥१॥
प्र । धाराः । अस्य । शुष्मिणः । वृथा । पवित्रे । अक्षरन् ॥
पुनानः । वाचम् । इष्यति ॥१॥

इन्दुर्हियानः सोतृभिर्मृज्यमानः कनिक्रदत् ।
इयर्त्ति वग्नुमिन्द्रियम् ॥२॥
इन्दुः । हियानः । सोतृऽभिः । मृज्यमानः । कनिक्रदत् ॥
इयर्त्ति । वग्नुम् । इन्द्रियम् ॥२॥

आ नः शुष्मं नृषाह्यं वीरवन्तं पुरुस्पृहम् ।
पवस्व सोम धारया ॥३॥
आ । नः । शुष्मम् । नृऽसह्यम् । वीरऽवन्तम् । पुरुऽस्पृहम् ॥
पवस्व । सोम । धारया ॥३॥

प्र सोमो ऽअति धारया पवमानो ऽअसिष्यदत् ।
अभि द्रोणान्यासदम् ॥४॥
प्र । सोमः । अति । धारया । पवमानः । असिस्यदत् ॥
अभि । द्रोणानि । आ०सदम् ॥४॥

अप्सु त्वा मधुमत्तमं हरिं हिन्वन्त्यद्रिभिः ।
इन्दविन्द्राय पीतये ॥५॥
अप्०सु । त्वा । मधुमत्०तमम् । हरिम् । हिन्वन्ति । अद्रि०भिः ॥
इन्दो इति । इन्द्राय । पीतये ॥५॥

सुनोता मधुमत्तमं सोममिन्द्राय वज्रिणे ।
चारुं शर्द्धाय मत्सरम् ॥६॥ ( २० ) [ १६५२ ]
सुनोत । मधुमत्०तमम् । सोमम् । इन्द्राय । वज्रिणे ॥
चारुम् । शर्द्धाय । मत्सरम् ॥६॥

## ( ३१ )

६ गोतमो राहूगणः । पवमानः सोमः । गायत्री ।

प्र सोमासः स्वाध्यः पवमानासो ऽअक्रमुः ।
रयिं कृण्वन्ति चेतनम् ॥१॥
प्र । सोमासः । स्वाध्यः । पवमानासः । अक्रमुः ॥
रयिम् । कृण्वन्ति । चेतनम् ॥१॥

दिवस्पृथिव्या ऽअधि भवेन्दो द्युम्नवर्द्धनः ।
भवा वाजानां पतिः ॥२॥
दिवः । पृथिव्याः । अधि । भव । इन्दो इति । द्युम्न०वर्द्धनः ॥
भव । वाजानाम् । पतिः ॥२॥

तुभ्यं वाता ऽअभिप्रियस्तुभ्यमर्षन्ति सिन्धवः ।
सोम वर्द्धन्ति ते महः ॥३॥
तुभ्यम् । वाताः । अभि०प्रियः । तुभ्यम् । अर्षन्ति । सिन्धवः ॥
सोम । वर्द्धन्ति । ते । महः ॥३॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ॥४॥
आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् ॥
भव । वाजस्य । सम्०गथे ॥४॥

तुभ्यं गावो घृतं पयो बभ्रो दुदुह्रे ऽअक्षितम् ।
वर्षिष्ठे ऽअधि सानवि ॥५॥
तुभ्यम् । गावः । घृतम् । पयः । बभ्रो इति । दुदुह्रे । अक्षितम् ॥
वर्षिष्ठे । अधि । सानवि ॥५॥

स्वायुधस्य ते सतो भुवनस्य पते वयम् ।
इन्दो सखित्वमुश्मसि ॥६॥ ( २१ ) [ १६५८ ]
सु०आयुधस्य । ते । सतः । भुवनस्य । पते । वयम् ॥
इन्दो इति । सखि०त्वम् । उश्मसि ॥६॥

## ( ३२ )

६ श्यावाश्व आत्रेयः । पवमानः सोमः । गायत्री ।

प्र सोमासो मदच्युतः श्रवसे नो मघोनः ।
सुता विदथे ऽअक्रमुः ॥१॥
प्र । सोमासः । मद०च्युतः । श्रवसे । नः । मघोनः ॥
सुताः । विदथे । अक्रमुः ॥१॥

आदीं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥२॥
आत् । ईम् । त्रितस्य । योषणः । हरिम् । हिन्वन्ति । अद्रिऽभिः ॥
इन्दुम् । इन्द्राय । पीतये ॥२॥

आदीं हंसो यथा गणं विश्वस्यावीवशन्मतिम् ।
अत्यो न गोभिरज्यते ॥३॥
आत् । ईम् । हंसः । यथा । गणम् । विश्वस्य । अवीवशत् । मतिम् ॥
अत्यः । न । गोभिः । अज्यते ॥३॥

उभे सोमावचाकशन्मृगो न तक्तो ऽअर्षसि ।
सीदन्नृतस्य योनिमा ॥४॥
उभे इति । सोम । अव०चाकशत् । मृगः । न । तक्तः । अर्षसि ॥
सीदन् । ऋतस्य । योनिम् । आ ॥४॥

अभि गावो ऽअनूषत योषा जारमिव प्रियम् ।
अगन्नाजिं यथा हितम् ॥५॥
अभि । गावः । अनूषत । योषा । जारम्ऽइव । प्रियम् ॥
अगन् । आजिम् । यथा । हितम् ॥५॥

अस्मे धेहि द्युमद्यशो मघवद्भ्यश्च मह्यं च ।
सनिं मेधामुत श्रवः ॥६॥ (२२) [१६६४]
अस्मे इति । धेहि । द्यु०मत् । यशः । मघवत्०भ्यः । च । मह्यम् । च ॥
सनिम् । मेधाम् । उत । श्रवः ॥६॥

# ( ३३ )

६ त्रित आप्त्यः । पवमानः सोमः । गायत्री ।

प्र सोमासो विपश्चितोऽपां न यन्त्यूर्मयः ।
वनानि महिषाइव ॥१॥
प्र । सोमासः । विपःऽचितः । अपाम् । न । यन्ति । ऊर्मयः ॥
वनानि । महिषाःऽइव ॥१॥

अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया ।
वाजं गोमन्तमक्षरन् ॥२॥
अभि । द्रोणानि । बभ्रवः । शुक्राः । ऋतस्य । धारया ॥
वाजम् । गोऽमन्तम् । अक्षरन् ॥२॥

सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
सोमा अर्षन्ति विष्णवे ॥३॥
सुताः । इन्द्राय । वायवे । वरुणाय । मरुत्ऽभ्यः ॥
सोमाः । अर्षन्ति । विष्णवे ॥३॥

तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
हरिरेति कनिक्रदत् ॥४॥
तिस्रः । वाचः । उत् । ईरते । गावः । मिमन्ति । धेनवः ॥
हरिः । एति । कनिक्रदत् ॥४॥

अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः ।
मर्मृज्यन्ते दिवः शिशुम् ॥५॥

अभि । ब्रह्मीः । अनूषत । यह्वीः । ऋतस्य । मातरः ॥
मर्मृज्यन्ते । दिवः । शिशुम् ॥५॥

**रायः समुद्राँश्चतुरोऽस्मभ्यं सोम विश्वतः ।**
**आ पवस्व सहस्रिणः ॥६॥ ( २३ )** [ १६७० ]
रायः । समुद्रान् । चतुरः । अस्मभ्यम् । सोम । विश्वतः ॥
आ । पवस्व । सहस्रिणः ॥६॥

# ( ३४ )

**६ मित आप्त्यः । पवमानः सोमः । गायत्री ।**

**प्र सुवानो धारया तनेन्दुर्हिन्वानो ऽअर्षति ।**
**रुजद् दृळ्हा व्योजसा ॥१॥**
प्र । सुवानः । धारया । तना । इन्दुः । हिन्वानः । अर्षति ॥
रुजत् । दृळ्हा । वि । ओजसा ॥१॥

**सुत ऽइन्द्राय वायवे वरुणाय मरुद्भ्यः ।**
**सोमो ऽअर्षति विष्णवे ॥२॥**
सुतः । इन्द्राय । वायवे । वरुणाय । मरुत्०भ्यः ॥
सोमः । अर्षति । विष्णवे ॥२॥

**वृषाणं वृषभिर्यतं सुन्वन्ति सोममद्रिभिः ।**
**दुहन्ति शक्मना पयः ॥३॥**
वृषाणम् । वृष०भिः । यतम् । सुन्वन्ति । सोमम् । अद्रि०भिः ॥
दुहन्ति । शक्मना । पयः ॥३॥

भुर्वत्त्रितस्य मर्ज्यो भुवदिन्द्राय मत्सरः ।
सं रूपैरज्यते हरिः ॥४॥
भुर्वत् । त्रितस्य । मर्ज्यः । भुर्वत् । इन्द्राय । मत्सरः ॥
सम् । रूपैः । अज्यते । हरिः ॥४॥

अभीमृतस्य विष्टपं दुहते पृश्निमातरः ।
चारु प्रियतमं हविः ॥५॥
अभि । ईम् । ऋतस्य । विष्टपम् । दुहते । पृश्नि०मातरः ॥
चारु । प्रिय०तमम् । हविः ॥५॥

समेनमह्रुता ऽइमा गिरो ऽअर्षन्ति सस्रुतः ।
धेनूर्वाश्रो ऽअवीवशत् ॥६॥ (२४) [ १६७६ ]
सम् । एनम् । अह्रुताः । इमाः । गिरः । अर्षन्ति । स०स्रुतः ॥
धेनूः । वाश्रः । अवीवशत् ॥६॥

## ( ३५ )

६ प्रभूवसुराङ्गिरसः । पवमानः सोमः । गायत्री ।

आ नः पवस्व धारया पवमान रयिं पृथुम् ।
यया ज्योतिर्विदासि नः ॥१॥
आ । नः । पवस्व । धारया । पवमान । रयिम् । पृथुम् ॥
यया । ज्योतिः । विदासि । नः ॥१॥

इन्दो समुद्रमीङ्खय पवस्व विश्वमेजय ।
रायो धर्त्ता न ऽओजसा ॥२॥
इन्दो इति । समुद्रम्०ईङ्खय । पवस्व । विश्वम्०एजय ॥
रायः । धर्त्ता । नः । ओजसा ॥२॥

त्वया वीरेण वीरवोऽभि ष्याम पृतन्यतः ।
क्षरा णो ऽअभि वार्यम् ॥३॥
त्वया । वीरेण । वीर॰वः । अभि । स्याम । पृतन्यतः ॥
क्षर । नः । अभि । वार्यम् ॥३॥

प्र वाजमिन्दुरिष्यति सिषासन्वाजसा ऽऋषिः ।
व्रता विदान ऽआयुधा ॥४॥
प्र । वाजम् । इन्दुः । इष्यति । सिसासन् । वाज॰साः । ऋषिः ॥
व्रता । विदानः । आयुधा ॥४॥

तं गीर्भिर्वाचमीङ्ख्यं पुनानं वासयामसि ।
सोमं जनस्य गोपतिम् ॥५॥
तम् । गीःऽभिः । वाचम्॰ईङ्ख्यम् । पुनानम् । वासयामसि ॥
सोमम् । जनस्य । गो॰पतिम् ॥५॥

विश्वो यस्य व्रते जनो दाधार धर्मणस्पतेः ।
पुनानस्य प्रभूवसोः ॥६॥ ( २५ ) [ १६८२ ]
विश्वः । यस्य । व्रते । जनः । दाधार । धर्मणः । पतेः ॥
पुनानस्य । प्रभु॰वसोः ॥६॥

# ( ३६ )

६ प्रभूवसुराङ्गिरसः । पवमानः सोमः । गायत्री ।

असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः ।
कार्ष्मन्वाजी न्यक्रमीत् ॥१॥
असर्जि । रथ्यः । यथा । पवित्रे । चम्वोः । सुतः ॥
कार्ष्मन् । वाजी । नि । अक्रमीत् ॥१॥

स वह्निः सोम जागृविः पवस्व देववीरति ।
अभि कोशं मधुश्चुतम् ॥२॥
सः । वह्निः । सोम । जागृविः । पवस्व । देव॰वीः । अति ॥
अभि । कोशम् । मधु॰श्चुतम् ॥२॥

स नो ज्योतींषि पूर्व्य पवमान वि रोचय ।
क्रत्वे दक्षाय नो हिनु ॥३॥
सः । नः । ज्योतींषि । पूर्व्य । पवमान । वि । रोचय ॥
क्रत्वे । दक्षाय । नः । हिनु ॥३॥

शुंभमान ऽऋतायुभिर्मृज्यमानो गभस्त्योः ।
पवते वारे ऽअव्यये ॥४॥
शुम्भमानः । ऋतयु॰भिः । मृज्यमानः । गभस्त्योः ॥
पवते । वारे । अव्यये ॥४॥

स विश्वा दाशुषे वसु सोमो दिव्यानि पार्थिवा ।
पवतामान्तरिक्ष्या ॥५॥
सः । विश्वा । दाशुषे । वसु । सोमः । दिव्यानि । पार्थिवा ॥
पवताम् । आ । अन्तरिक्ष्या ॥५॥

आ दिवस्पृष्ठमश्वयुर्गव्ययुः सोम रोहसि ।
वीरयुः शवसस्पते ॥६॥ ( २६ ) [ १६८८ ]
आ । दिवः । पृष्ठम् । अश्व॰युः । गव्य॰युः । सोम । रोहसि ॥
वीर॰युः । शवसः । पते ॥६॥

# ( ३७ )

६ रहूगण आङ्गिरसः । पवमानः सोमः । गायत्री ।

**स सुतः पीतये वृषा सोमः पवित्रे ऽअर्षति ।**
**विघ्नन्रक्षांसि देवयुः ॥१॥**
सः । सुतः । पीतये । वृषा । सोमः । पवित्रे । अर्षति ॥
वि०घ्नन् । रक्षांसि । देव०युः ॥१॥

**स पवित्रे विचक्षणो हरिरर्षति धर्णसिः ।**
**अभि योनिं कनिक्रदत् ॥२॥**
सः । पवित्रे । वि०चक्षणः । हरिः । अर्षति । धर्णसिः ॥
अभि । योनिम् । कनिक्रदत् ॥२॥

**स वाजी रोचना दिवः पवमानो वि धावति ।**
**रक्षोहा वारमव्ययम् ॥३॥**
सः । वाजी । रोचना । दिवः । पवमानः । वि । धावति ॥
रक्षः२हा । वारम् । अव्ययम् ॥३॥

**स त्रितस्याधि सानवि पवमानो ऽअरोचयत् ।**
**जामिभिः सूर्यं सह ॥४॥**
सः । त्रितस्य । अधि । सानवि । पवमानः । अरोचयत् ॥
जामि०भिः । सूर्यम् । सह ॥४॥

**स वृत्रहा वृषा सुतो वरिवोविददाभ्यः ।**
**सोमो वाजमिवासरत् ॥५॥**

सः । वृत्र॰हा । वृषा । सुतः । वरिवः॰वित् । अदाभ्यः ॥
सोमः । वाजम्ऽइव । असरत् ॥५॥

स देवः कविनेषितोऽभि द्रोणानि धावति ।
इन्दुरिन्द्राय मंहना ॥६॥ (२७) [१६९४]
सः । देवः । कविना । इषितः । अभि । द्रोणानि । धावति ॥
इन्दुः । इन्द्राय । मंहना ॥६॥

# (३८)

६ रहूगण आङ्गिरसः । पवमानः सोमः । गायत्री ।

एष उ स्य वृषा रथोऽव्यो वारेभिरर्षति ।
गच्छन्वाजं सहस्रिणम् ॥१॥
एषः । ॐ इति । स्यः । वृषा । रथः । अव्यः । वारेभिः । अर्षति ॥
गच्छन् । वाजम् । सहस्रिणम् ॥१॥

एतं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः ।
इन्दुमिन्द्राय पीतये ॥२॥
एतम् । त्रितस्य । योषणः । हरिम् । हिन्वन्ति । अद्रि॰भिः ॥
इन्दुम् । इन्द्राय । पीतये ॥२॥

एतं त्यं हरितो दश मर्मृज्यन्ते ऽअपस्युवः ।
याभिर्मदाय शुम्भते ॥३॥
एतम् । त्यम् । हरितः । दश । मर्मृज्यन्ते । अपस्युवः ॥
याभिः । मदाय । शुम्भते ॥३॥

एष स्य मानुषीष्वा श्येनो न विक्षु सीदति ।
गच्छञ्जारो न योषितम् ॥४॥
एषः । स्यः । मानुषीषु । आ । श्येनः । न । विक्षु । सीदति ॥
गच्छन् । जारः । न । योषितम् ॥४॥

एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः ।
य इन्दुर्वारमाविशत् ॥५॥
एषः । स्यः । मद्यः । रसः । अव । चष्टे । दिवः । शिशुः ॥
यः । इन्दुः । वारम् । आ । अविशत् ॥५॥

एष स्य पीतये सुतो हरिरर्षति धर्णसिः ।
क्रन्दन्योनिमभि प्रियम् ॥६॥ (२८) [ १७०० ]
एषः । स्यः । पीतये । सुतः । हरिः । अर्षति । धर्णसिः ॥
क्रन्दन् । योनिम् । अभि । प्रियम् ॥६॥

## ( ३९ )

६ बृहन्मतिराङ्गिरसः । पवमानः सोमः । गायत्री ।

आशुरर्ष बृहन्मते परि प्रियेण धाम्ना ।
यत्र देवा इति ब्रवन् ॥१॥
आशुः । अर्ष । बृहत्ऽमते । परि । प्रियेण । धाम्ना ॥
यत्र । देवाः । इति । ब्रवन् ॥१॥

परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः ।
वृष्टिं दिवः परि स्रव ॥२॥
परिऽकृण्वन् । अनिःऽकृतम् । जनाय । यातयन् । इषः ॥
वृष्टिम् । दिवः । परि । स्रव ॥२॥

सुत एति पवित्र आ त्विषिं दधान ओजसा ।
विचक्षाणो विरोचयन् ॥३॥
सुतः । एति । पवित्रे । आ । त्विषिम् । दधानः । ओजसा ॥
वि॰चक्षाणः । वि॰रोचयन् ॥३॥

अयं स यो दिवस्परि रघुयामा पवित्र आ ।
सिन्धोरूर्मा व्यक्षरत् ॥
अयम् । सः । यः । दिवः । परि । रघु॰यामा । पवित्रे । आ ॥
सिन्धोः । ऊर्मा । वि । अक्षरत् ॥४॥

आविवासन्परावतो अथो अर्वावतः सुतः ।
इन्द्राय सिच्यते मधु ॥५॥
आ॰विवासन् । परा॰वतः । अथो इति । अर्वा॰वतः । सुतः ॥
इन्द्राय । सिच्यते । मधु ॥५॥

समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः ।
योनावृतस्य सीदत ॥६॥ ( २९ ) [ १७०६ ]
समीचीनाः । अनूषत । हरिम् । हिन्वन्ति । अद्रि॰भिः ॥
योनौ । ऋतस्य । सीदत ॥६॥

# ( ४० )

६ बृहन्मतिराङ्गिरसः । पवमानः सोमः । गायत्री ।

पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
शुंभन्ति विप्रं धीतिभिः ॥१॥

